॥ श्रीः ॥

परोपकाराभिनिविष्टचेतसा संप्रार्थितोनानकरामशर्मा ।
गोप्यामिमां माधवभट्टनिर्मितां यन्त्रालये मुद्रयितुमदामहम् ॥ १ ॥
व्याख्यानमेतत्सुधियां विलोक्यंपरिष्कृतं नानकरामयुक्तिभि-
र्व्याख्यांतरं नास्य गुणान्समेति दिवाकरस्येव विधुःकलंकः ॥ २ ॥

## प्रस्तावम् ।

### श्रीराधालिंगितो हरिः पातु ॥

इह खलु जगतीतले वेदार्थमभीप्सूनां जनानां सौकर्येण वेदार्थोपलब्धये कृपालवश्चतुःसनाः सुदुष्करं तपः कृत्वा तपसा भगवन्तं मृडं प्रसाद्य चतुर्दश सूत्राणि प्राप्तवन्तः तच्चोल्लिखितमस्ति–" नृत्तावसाने नटराजराजो ननाद ढक्कान्नव पञ्च वारमुद्धर्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् " ततश्चोपलभ्य पाणिनयेऽदुस्तेपु: सोष्टाध्यायीं रचितवान् तामधीत्य सर्वे ज्ञा अभूवन् पुनः कदाचित् विदुषां समाजोभूत् तत्र सुखमासीना अनुभूतिस्वरू पाचार्याः शास्त्रार्थोपक्रमे पुंक्ष्वित्युक्तवन्तस्ततः सर्वे करतलघोषं कृत्वाहसं-न् तेनात्मानमनादृत्य नक्तं वाणीमुपासितवान् संतुष्टा सा सप्तशतसूत्राणि ददौ तेषु सारस्वतं व्याकरणं रचितवान् तदध्यापनपरिपाटी चातीवसु-प्रचलितासीत् तदावश्यकतापरं पद्यमपि भणितम् " अनधीत्य शब्दशास्त्रमन्य-च्छास्त्रं समीहते मूढः । सोहे: पदानि गणयति निशि तमसि चिरं गतस्य " तच्च सन्तूरामतनुजानिना " सुन्दरमलशर्मणा " मुद्रापितं पुनः तच्छोधको मरुदे-शान्तर्गतजयपुरराजकीयरूपदूर्गस्थः श्रीमच्छिवनारायणतनूद्भवः सूर्यदत्तोस्ति तत्र च दृष्टिदोषः कुत्रचित्स्यात्तत्सुधियः क्षमन्ताम् ॥ श्रीशम् ॥

पत्ता–पुस्तकमिलनेका ठिकाना–

संतुरामजी सुंदरमल खेडवाल मुंबई.

ठि०--गोपालवाडी.

और

गोविंदरामजी सागरमल खेडवाल कलकत्ता.

ठि० लंगडेश्वरका बासा.

और–मुंबईमें:--

श्रीधरजी शिवलाल

गंगाविष्णु श्रीकृष्णदास,

खेमराज श्रीकृष्णदास,

हरिप्रसाद भगीरथजी,

ज्येष्ठाराम मुकुन्दजी,

बनारस–बाबूकौलेश्वरसिंह बुक्सेलर,

अयोध्या–छोटेलाल लक्ष्मीचंदजी-बुक्सेलर,

लाहोर–लालामेहेरचंदजी संस्कृतपुस्तकालय,

खेमराज श्रीकृष्णदास

"श्रीवेङ्कटेश्वर" बुकडिपो–बनारस.

पत्ता–संतुरामजी सुंदरमल प्राचीनपुस्तकालय

गोपालबाडी–बंम्बई.

यह पुस्तक इन महाशयोंके पास मिलेगी.

॥ श्रीः ॥

# अथ सारस्वतम् ।

## माधवविवरणोपेतम् ।

श्रीगणेशाय नमः ।

**प्रणम्य परमात्मानं बालधीवृद्धिसिद्धये ।**

श्रीगणेशाय नमः ॥ श्रीमद्विष्णुपदाब्जमङ्गुलिदलं सञ्ज्ञानकिञ्जल्कितं पीयूषोन्मकरन्दमुद्यदसमाभाराजितं स्वोद्यतम् । योगीशामरकिङ्करालिनिवहैः पेपीयमानं मुदा ज्ञानानन्दभरप्रदायि नितरां सञ्चिन्तये संविदे ॥ १ ॥ वागीशतामज्ञतमोपि यस्याः कृपाकटाक्षेक्षणतः प्रयाति । सा मे मतिं स्फारयतादवश्यं वाग्देवता सन्नमतस्तदङ्घ्री ॥ २ ॥ श्रीकान्हनामा द्विजराजराजिकीर्तिर्द्विजातिश्रुतिशास्त्रविज्ञः । सुतं सतीनायकदेविकायामसूत सद्धर्ममिव श्रुतिर्यम् ॥ ३ ॥ ब्रह्मापि जिह्मीभवति स्वकृत्ये नितान्तमप्राप्य यतः प्रसादम् । विघ्नेश्वरो मे विगतान्तरायं साध्यं च साध्यान्नमतस्तदङ्घ्री ॥ ४ ॥ श्रीरङ्गरङ्गायितयत्प्रसादाच्छ्रीरङ्गरङ्गाश्च गिरोङ्गरङ्गाः । मतिं मनीषी तनुतां गुरुर्मे श्रीरङ्गनामा नमतस्तदङ्घ्री ॥ ५ ॥ बुद्ध्वाध्वा गुरुशासनान्नतगुरुव्याकृत्यगाधार्णवात् सत्सारस्वतनौश्रितः सुमतिदश्रीपाणिनीयोत्सखः । सोहं साधु समुद्धरे सुमनसां सन्तोषयित्रीं सदा सत्कण्ठाभरणाय माधवसुधीः सिद्धान्तरत्नावलीम् ॥ ६ ॥ सारस्वतं मत्यनुसारतस्तत्प्रक्षेपकालुष्यनिरासहेतोः । व्याख्याम्यहं व्याकृतमल्पजल्पैर्हास्यो न च स्यां गुणगृह्यसद्भिः ॥ ७ ॥ तत्र सारस्वतीं प्रक्रियामृजुं चिकीर्षुः श्रीमदनुभूतिस्वरूपाचार्य्यस्तदविघ्नसमाप्तिप्रचयगमनशिष्टाचारार्थमिष्टदेवपरमात्मप्रणतिलक्षणं मङ्गलमाचरन्विषयप्रयोजनसम्बन्धाधिकारिणोपि सूचयन् प्रतिजानीते प्रणम्येत्यादिना श्लोकेन । अयमस्यार्थः । अहं प्रक्रियां प्रक्रियन्ते व्युत्पाद्यन्ते शब्दा अनयेति प्रक्रिया कृञः शचेति करणे शः अयङ्कीति रिङ् इय् आप् तां प्रक्रियाम् । ऋजुमृजुशब्दस्य गुणवाचित्वेपि वोर्गुणादिति माक्षिक ईबभावः । ऋजुगुणेन वृत्त्युदाहरणप्रक्रियाकथनादिरूपेण युक्तां कुर्वे रचये । अत्र प्रक्रियामुद्दिश्य ऋजुत्वं विधीयते । अन्यथा हि प्रक्रियायाः सरस्वत्या कृतत्वादाचार्यस्य तत्करणे सिद्धसाधनतादोषः स्यात् । ननु चैवं प्रक्रियाया ऋजुकरणस्य परोपदेशप्रयोजनत्वेन परगामिक्रियाफलत्वात् परगामि चेत् फलं

सारस्वतीमृजुं कुर्वे प्रक्रियां नातिविस्तराम् ॥ १ ॥

परस्मैपदं प्रयोक्तव्यमन्वर्थादिति स्वयमग्रे वक्ष्यमाणत्वाच्च करोमीति प्रयोज्यं, नैवं तदुत्पन्नफलस्यात्मपरमेश्वरार्पितत्वेनात्मगामिक्रियाफलत्वात् वक्ष्यति च आत्मगामिचेत् फलमात्मनेपदमिति । आत्मपरमेश्वरैक्यन्तु गीतायामुक्तम् । "ये पश्यन्ति स्वमात्मानं विभिन्नं परमेश्वरात् । न ते जानन्ति तं देवं वृथा तेषां परिश्रमः" इति । कुर्वे इत्यत्र य्वोर्विहस इति दीर्घाभावं तु तत्रैव वक्ष्यामः । अथ प्रक्रियाशब्दस्य प्रक्रियासामान्यवाचित्वेन पाणिनीयादिभ्रमं निरस्यति । सारस्वतीमिति । सरस्वत्या प्रोक्ता सूत्रद्वारा तयोपज्ञाता विनोपदेशं ज्ञाता सारस्वती । णितो वेत्यणन्तत्वादीप्, तां सारस्वतीम् । केचित्तु सरस्वत्योक्तसूत्रसम्बन्धिनीति व्याचक्षते तत्पाणिनीयवर्णितो वेतीयप्रसङ्गादुपेक्ष्यम् । अथ ऋजुत्वात्तं गौरवभ्रमं छिनत्ति । नातिविस्तरामिति । विस्तरणं विस्तरः शब्दप्रपञ्चो व्यासः । "स च शब्दस्य विस्तर" इत्यभिधानात् विपूर्वादिह प्रथनार्थात् स्तृञो भावे घञोपवादो मदामित्यप्रत्ययः । अतिशयितो विस्तरोऽतिविस्तर इति प्रादिसमासः । न विद्यतेऽतिविस्तरो यस्यां सा नातिविस्तरेति बहुव्रीहिसमासः । तां नातिविस्तराम् । अत्रान् स्वर इत्यनादेशाभावं तत्रैव वक्ष्यामः । असमासो वा । अतिशयितो विस्तरो यस्यां सातिविस्तरा तां तथाविधां न । अतिशब्दप्रपञ्चरहितामित्यर्थः । अथ कार्यारम्भे श्रेयांसि बहुविघ्नानीति संभावितप्रत्यूहनिवृत्तये आह । प्रणम्येति । प्रकर्षेण भक्तिश्रद्धातिशयपूर्वकं नत्वा । अत्रादौ मङ्गलार्थं प्रशब्दप्रयोगः । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त इति । एतदध्येतॄणां श्रीसौभाग्यादिप्रकर्षला-

---

१ यद्वा अकारो वासुदेवः स्यादित्येकाक्षरकोशदर्शनात्तेनाकारेण जातं, वासुदेवदेवस्मरणमेव मंगलं, पद्यनिर्माणं तु शिष्यशिक्षार्थं तदत्र न कृतं तस्याः प्रकारान्तरेणैव संभवात् । वस्तुतस्तु मंगलस्य निर्विघ्नतासमाप्तिं प्रति विघ्नध्वंसादिकामो मंगलं कुर्य्यादिति श्रुतेश्च न कारणता मानाभावात् न तावद्दंडघटयोरिवान्वयव्यतिरेकलक्षणम्मानम्, बाह्यग्रंथे विनापि मंगलसमाप्तिदर्शनात्, नापि श्रुतिः स्वर्गकामो यजेतेतिवद्विघ्नध्वंसादिकामो मंगलं कुर्य्यादिति श्रुतेरदर्शनात् नापि शिष्टाचारानुमितश्रुतिर्मानम् आचारस्य साक्षात् श्रुतिसंबंधाभावात् आचारो हि स्मृतिमूलः अतस्तर्हि आचारानुमितस्मृतिरेव मानम्, तस्या अपि दृष्टे फले संभवति अदृष्टफलकल्पनाया अन्याय्यत्वात् न बाहुभ्यान्नदीन्तरेदित्यादिषु । यथा भोजनमर्द्दनादिक्रिया स्मृतिं न कल्पयति संप्रति कारणत्वबोधकताया अदर्शनात् आचारोपि दृष्टफल एव स्वाचरितुः शिष्टत्वबोधनात् शिष्टत्वे च पूजादि दृष्टमेव फलं लभ्यते यथा भोजनमर्द्दनादिक्रिया स्मृतिं न कल्पयति।

भाय । तथा च वार्तिककारेणादौ प्रयुक्तस्य सिद्धशब्दस्य व्याख्यायां महाभाष्ये उक्तम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मंगलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति । ननु नमस्कारस्य विघ्ननिवर्तकत्वे यत्किञ्चिन्नमस्कारादपि तत् स्यादित्याशङ्कां निरस्यति । आत्मानमिति । ईश्वरमित्यर्थः । एतेनेष्टदेवतानमस्कारस्यैवान्तरायनिवर्तकत्वं सूचितम् । ईश्वरस्येष्टदेवतात्वं ग्रन्थकार एवावताद्वो हयग्रीव इति पद्येन स्फुटयिष्यति । ननु सति देवतान्तरे कथमस्यैवेष्टदेवत्वमित्याशङ्क्याह । परमिति । परानधीनैश्वर्यवन्तमित्यर्थः । ततश्च तदनुग्रहात्तदधीनैश्वर्य्यवतां सर्वदेवानामप्यात्मन्यनुग्रहः सूचितः। अथवा परमात्मानमिति समस्तं पदं परम उत्कृष्ट आत्मा स्वरूपं यस्य असौ परमात्मा तम् । अथवा परमश्चासावात्मा च परमात्मा तमीश्वरं, परा उत्कृष्टा वा मा लक्ष्मीर्यस्यासौ परा द्वितीया वा माया यस्य स परमस्तादृक् आत्मा यस्यासौ परमात्मा हरिस्तम् । अथवा परान् आत्मनोन्यान् जनान् माति सृजतीति परमः आतो ड इति डः। ईदृक् आत्मा स्वरूपं यस्यासौ परमात्मा धाता तम् । हरं हरिं ब्रह्माणञ्च नमस्कृत्येत्यर्थः । ननु विना प्रयोजनं जडधियोपि न प्रवर्तेरन् । तथोक्तं सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित् । यावत्प्रयोजनं नोक्तं तावत्तत् केन गृह्यते''इत्यत आह। बालधीवृद्धिसिद्धये इति।ध्यायते चिन्त्यतेनया सा धीर्बुद्धिः ध्यानं वा धीः ध्यायतेः क्विपि संप्रसारणे दीर्घः । धियो वृद्धिः धीवृद्धिः व्युत्पत्तिः बालानां धीवृद्धिर्बालधीवृद्धिः बालधीवृद्धेः सिद्धिर्बालधीवृद्धिसिद्धिस्तस्यै बालधीवृद्धिसिद्धये । बाला अत्र न स्तनन्धया विवक्षिताः किन्तु शब्दापशब्दविचाररहिताः। तथोक्तममरसिंहेन-मूर्खेर्भकेपि बालः स्यादिति । तत्रश्चाज्ञानां व्युत्पत्तिसाधनाय परमात्मानं प्रणम्य सारस्वतीं प्रक्रियां नातिविस्तरामृजुमहं कुर्वे इति प्रथमपद्यार्थसङ्क्षेपः । ननु ग्रन्थादौ श्रोतृप्रवृत्तये विषयः प्रयोजनं सम्बन्धोधिकारी चेति चतुष्टयं वक्तव्यम् । यत उक्तं--"सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता

---

१ बालधीवृद्धिसिद्धिरेव व्याकरणस्य प्रयोजनं नास्ति लघुभाष्ये अन्यदपि लिखितम् । अथ व्याकरणाध्ययनेन किं साध्यम् उच्यते धर्मार्थकाममोक्षाश्चत्वारः पुरुषार्थाः । तथाहि ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोध्येतव्य इत्यध्ययनविधिर्व्याकरणाध्ययनस्य धर्मसाधनतां गमयति सांगवेदाध्ययनं तदर्थज्ञानरूपोयं धर्मो नित्यः सन्ध्योपासनादिवदित्यर्थः । षट्स्वंगेषु प्रधानं व्याकरणं पदपदार्थज्ञानस्य व्याकरणमूलत्वात् ब्राह्मणो न म्लेच्छेदिति चापशब्दनिषेधोपि व्याकरणाध्ययनं विनाऽपशब्दवर्जनासंभवात् ।

**इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः ।**
**प्रक्रियां तस्य कृत्स्नस्य क्षमो वक्तुं नरः कथम् ॥ २ ॥**

प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः" इति । सत्यं, तत्र प्रयोजनमुक्तं बालधीवृद्धिसिद्धय इति । ननु व्याकरणस्य मुख्यं शब्दानुशासनमेव प्रयोजनं ततो बालव्युत्पत्तिसिद्धिः अतस्तत्किमिति नोक्तम् । उक्तं तदपि प्रक्रियामिति । तथाहि प्रकृतिप्रत्ययादिविभागेन शब्दव्युत्पत्तिः प्रक्रिया तदेव च शब्दानुशासनम् । तथोक्तं "विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतः । ज्ञाप्यन्ते येन तच्छास्त्रमत्र शब्दानुशासनम्" इति । अर्थाल्लौकिका वैदिकाश्च शब्दा विषयभूताः शब्दशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः शब्दव्युत्पित्सुरधिकारी । इहान्यान्यपि रक्षोहागमलघ्वसन्देहादीन्यवान्तरप्रयोजनानि प्रक्रियाशब्दसूचितानि विस्तरभयान्न लिखामः । इह केषाञ्चिज्जातिः पदार्थः । गृहीततत्सम्बन्धेनैव शब्देनार्थप्रतीतिः न चक्षुरादिवत् सम्बन्धनिरपेक्षेण । व्यक्तिषु च तदानन्त्यात्सम्बन्धग्रहणासंभव इति । केषाञ्चिद्व्यक्तिरेव पदार्थः । तत्रैव वाहदोहादिकार्य्यसद्भावात् । जातौ तु पदार्थे व्यक्तिषु क्रियमाणं वाहदोहादिकमनोदितार्थेनुष्ठितं स्यात् । सम्बन्धग्रहणञ्चात्र जातेरुपलक्षणभावाश्रयणात् तत्रार्थस्य शब्दमहिम्नैव प्रतीयमानत्वादुभयं शब्दार्थः । तत्र क्वचित्किञ्चित्तात्पर्य्येणाश्रीयते किञ्चिन्नान्तरीयकतया । तच्च यथास्थानं व्याख्यास्यामः । विचारविशेषोत्र महाभाष्यादेरवगन्तव्यः । विस्तरभयादिह नोक्त इति प्रयोजनादिसङ्क्षेपः ॥१॥ अत्र बालव्युत्पत्तौ शब्दापशब्दोभयोपदेशभेदेन संभवतस्त्रीनपि पक्षान्निराकुर्वन् प्रक्रियार्जवकरणमेव समर्थयते । इन्द्रादयोपीति । नरः कथं क्षमो भवेत् । न कथञ्चिदित्यर्थः । किं कर्तुं प्रक्रियां वक्तुं निरूपयितुम् । कस्य तस्य शब्दवारिधेः । शब्दा एव वारीणि शब्दवारीणि तानि धीयन्ते निक्षिप्यन्ते यत्रासौ शब्दवारिधिः । नञ्चो इति किः । आलोपः । तस्य शब्दवारिधेः शब्दसमुद्रस्य । कीदृशस्य कृत्स्नस्य समस्तस्य । अत्र यत्तदोर्नित्यसम्बन्ध इति यच्छब्दापेक्षायामाह । यस्य वारिधेरन्तं पारं न ययुर्न गताः । के इन्द्रादयः इन्द्र आदिर्येषां ते इन्द्रादयः । अपिः समुच्चये । अयं भावः । यस्य शब्दसमुद्रस्य प्रतिपदपाठेनेन्द्रादयो देवा मुनयोपि पारं न गताः । यत उक्तं, दिव्यं वर्षसहस्रमिन्द्रो बृहस्पतेः सकाशात् प्रतिपदपाठेन शब्दान् पठन् नान्तं जगामेति । तस्य प्रतिपदं पठित्वा प्रक्रियां वक्तुमियं प्रकृतिरयं प्रत्ययोयं साधनोपाय इति प्रतिपदं कर्तुं मनुष्योल्पमतिरल्पायुश्च कथं शक्नोति न कथञ्चिदपीति । सारस्वतीं प्रक्रियां नातिविस्तरामृजुं कुर्वे इति प्रतिज्ञात-

**तत्र तावत्संज्ञा संव्यवहाराय संगृह्यते ॥ अइउऋऌ समानाः ॥ १ ॥**

मिति द्वितीयपद्यार्थसङ्क्षेपः ॥ २ ॥ अथ सारस्वत्याः प्रक्रियायाः ऋजुकरणस्य सरस्वतीसूत्रोपजीवकत्वात्तदादिसंज्ञासूत्रं व्याचिख्यासुस्तदादित्वं समर्थयते । तत्र तावदिति । तत्र तस्यां प्रक्रियायां तावदादौ संज्ञा सङ्गृह्यते प्रक्रियत इत्यर्थः । किमर्थं संव्यवहाराय सम्यग्व्यवहरणं संव्यवहारः । भावे घञ् । तस्मै संव्यवहाराय सम्यक् समानस्वरसन्ध्यक्षरनाम्यादिव्यवहारं ज्ञातुं तदायतत्वाच्छास्त्रप्रवृत्तेरिति भावः । अइउ इति । द्विपदं सूत्रम् । ननु च अइउऋऌ इत्यत्र विभक्तेरसत्वात्तदन्तस्यैव पदसंज्ञाया विधास्यमानत्वात्कथं पदत्वमिति चेदुच्यते, इहाकारादीनां द्वन्द्वे कृते कृत्तद्धितसमासाश्चेति नामसंज्ञकत्वाज्जातस्य जसः छन्दोवत् सूत्राणि भवन्तीति छन्दस्त्वेन छान्दसे लुकि स्यादेव पदत्वमित्यदोषः । चादिषु वा स्वराश्चेति पाठादव्ययत्वेनाव्ययाद्विभक्तेर्लुगिति जसो लुक् । अर्थस्याविवक्षितत्वादविभक्तिको वा निर्देशः । अनेनेति सूत्रेणेति शेषः । प्रत्याहारग्रहणायेति । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अस्मिन्निति प्रत्याहारोऽवादिस्तस्य ग्रहणाय निष्पत्त्यै । वर्णा इति । अइउऋऌ एते वर्णा इत्यर्थः । न चैवमेषां वर्णत्वाद्वर्णात्कार इति कारप्रत्यय आशङ्क्यः । सदोणादय इति सदाशब्दस्य बहुलार्थत्वात् । अथवा कविपुत्र इत्यादिप्रयोगस्य वर्णनिर्देशे तात्पर्य्याभावात् । यत्र हि प्रयोगस्य वर्णानिर्देशे तात्पर्यं तत्र वर्णनिर्देशे काद्वर्णाद्वर्णात्कार इति कारप्रत्ययो भवति। अत एव ककार इत्यादावुच्चार्यमाणस्य स्वरहससमुदायस्यावर्णत्वेपि कारप्रत्ययः । इह त्वानुपूर्व्याः संपादन एव तात्पर्यमित्याह परिगण्यन्ते इति । अइउऋऌ इत्यनेन क्रमेण निर्दिश्यन्त इत्यर्थः । एतेन क्रमस्य विवक्षितत्वं दर्शितम् । अकारात्प्रागिकारनिर्देशे हि देवा अत्रेत्यत्र विसर्गलोपः स्यात् देवा इहेत्यत्र न स्यात् । अन्यच्च। अवग्रहणे इकारस्याग्रहणाच्चिदियमिति चपा अबे इति जबादेशो न स्यात् । इलग्रहणे चाकारग्रहणाद्रमास्वित्यत्र किलादिति षत्वं स्यात् । उकारस्याप्यकारेकाराभ्यां प्रागुपदेशे अवेलयोरग्रहणाद्गुरूणां गुरुष्विति णत्वषत्वे न स्याताम् । एवमन्यदपि क्रमप्रयोजनमूह्यम् । तेषामिति । परिगणितानामित्यर्थः। समानसंज्ञा चेति । न पुनः समानानामइउऋऌ इति । एते समस्ता व्यस्ता वा संज्ञा । आद्ये गौरवात् संज्ञायाः लघ्वर्थं हि संज्ञाकरणम् । अनावृत्तेश्च । आवर्तिन्यो हि संज्ञा भवन्ति । समानाद्धेरित्यादौ समानशब्द आवर्तते न अइउऋऌशब्दाः । अद्भिरिदुद्भ्यामित्यादावावृत्तावपि स्वयमेव सदृशग्रहणे सिद्धे संज्ञाया वैयर्थ्यापाताच्च । द्वितीयेप्येकस्यानेक-

संज्ञाकरणायुक्तत्वात् । किञ्च सन्नेव कार्य्यी कार्य्यं भजतीत्याद्या अइउऋऌ एते एव संज्ञिनो युक्तास्तेपि न समस्ताः प्रयोगस्थानामेव संज्ञाविधानात्समस्तानां च प्रयोगाभावात् ज्ञापकाच्च । यदयं समानाद्धेरित्यत्राधातोरित्याह तत् ज्ञापयति व्यस्ताः संज्ञिन इति । अन्यथा समुदायस्य धातोरभावादधातोरिति व्यर्थं स्यात् । तत्रापि शब्द एव संज्ञी नार्थः, अर्थे व्यवहारासम्भवात् संज्ञायाश्च व्यवहारार्थत्वात् । तत्रासन्धिकरणमसन्देहार्थं स्वराश्चेति वा चादिषु पाठान्निपातत्वेन औनिपात इति सन्धिनिषेधस्तदिदमुच्यते नैतेष्विति । वक्ष्यमाणसूत्रापेक्षया बहुवचनम् । अइउऋऌ समाना इत्यस्मिन्नुक्ते एऐओऔसन्ध्यक्षराणीत्यादिषु वक्ष्यमाणेषु च सूत्रेषु सन्धिरइ ए इत्यादिकार्यलक्षणो नानुसन्धेयो न करणार्हः कर्तुं न शक्यो वा । कुतः अविवक्षितत्वात् वक्तुमिष्टो विवक्षितः न विवक्षितोऽविवक्षितस्तस्य भावस्तत्त्वं तस्मात् । अत्र ग्रन्थकर्तुः प्रत्याहारग्रहणाय वर्णगणनमात्रं विवक्षितं न तु सन्धिरिति भावः । अविवक्षितत्वमयादीनां संज्ञासन्देहनिरासाय । विवक्षितत्वादिति वा । अइउऋऌ इत्यादौ निपातव्यक्तिनिर्देशस्य विवक्षितत्वादौनिपात इति प्रतिषेधोपस्थानादित्यर्थः । सादृश्यप्रधाननिर्देशाच्च सर्वासामप्यवर्णादिव्यक्तीनां समानादिसंज्ञासिद्धिः । समानसंज्ञाप्रदेशाः समानाद्धेरित्यादयः । अथ प्रक्रियाशब्देन सूचितमेव सूत्रारम्भप्रयोजनं बालावबोधाय विवृत्य सन्धिं प्रत्याचष्टे लौकिकेति । लोके विदिताः लौकिकाः । अत्र सङ्कोचे कारणाभावात्सर्वत्र वर्तिनो लोकशब्दस्य ग्रहणात्प्रतिदेशं भिन्नत्वेन कतिपयलोकविदितापशब्दानामग्रहणम् । ते च ते प्रयोगाश्च लौकिकप्रयोगा अत्र य एव लौकिकास्त एव वैदिका इति वैदिका अपि लौकिकग्रहणेन गृह्यन्ते तेषां निष्पत्तिस्तस्यै । यदि व्याकरणं शब्दान्निष्पादयति तर्हि किमसिद्धं सिद्धं वा । नाद्यः स्वयमसिद्धेन साधयितुमशक्यत्वात् । न द्वितीयः अन्योन्याश्रयापातात् शब्दनिष्पत्तिं विना व्याकरणं न सिद्ध्यति तत्सिद्धिं विना वा शब्दनिष्पत्तिर्न भवतीति । अन्योन्याश्रयाणि कार्याणि न प्रकल्पन्ते नौतरीवत् । एवन्तर्हि निष्पत्तिरिह व्युत्पत्तिर्न तु निष्पादनमात्रम् । ततश्च साधूनां शब्दानां सिद्धानां प्रकृतिप्रत्ययादिविभागेन व्युत्पत्तये एषां सूत्राणां समयमात्रत्वात् सङ्केतमात्रत्वाच्च सन्धिर्नानुसन्धेय इत्यर्थः । सङ्केतो हि सङ्केतितैरेव शब्दैर्ज्यायान् । अथ ह्रस्वादीनां मिथो मात्रादिभेदेन भिन्नत्वादकारादीनां विहितं कार्यमाकारादीनां न प्राप्नोतीति सावर्ण्यमारभ्यते । ह्रस्वेति । ह्रस्वादीनां भेदान्तानां द्वन्द्वः । भेदाः पुनरुदात्तानुदात्तस्वरितसानुनासिकनिरनुनासिकवर्ग्यवर्णाः ते सवर्णा ज्ञेयाः । अयं भावः । अकारो ह्रस्वो दीर्घः प्लुतश्च स च

अनेन प्रत्याहारग्रहणाय वर्णाः परिगण्यन्ते । तेषां समानसंज्ञा च विधीयते । नैतेषु सूत्रेषु सन्धिरनुसन्धेयोऽविवक्षितत्वात् । लौकिकप्रयोगनिष्पत्त्यै समय-

प्रत्येकमुदात्तोनुदात्तः स्वरितश्चेति त्रिधा। एवं नवविधोपि सानुनासिको निरनुनासिकश्चेति द्विधा भवन्नष्टादशभेदभिन्नो वर्णप्रदेषु सवर्णो ज्ञेयः। एवमिकारादयोपि। लृवर्णस्तु दीर्घाभावात् द्वादशभेदवानेव । ननु चैवं सावर्ण्ये अइउऋऌ एषां मिथः सावर्ण्यादेव इहेत्यादौ दीर्घत्वादिकार्यप्रसङ्ग इति चेत् । उच्यते । इह लघ्वर्थमेकाक्षरायां संज्ञायां कार्यायां महासंज्ञाकरणमन्वर्थताविज्ञानार्थं तेन स्थानप्रयत्नाभ्यां समानो वर्णः सवर्णः सहादित्वात्समानस्य सादेशः।नन्वेवमपि स एव दोषः एषां वर्णान्तरेणापि समानस्थानप्रयत्नत्वात् । मैवं समानशब्दस्य जातिसापेक्षत्वात् यो येन स्थानप्रयत्नाभ्यां जात्या च समानः स तेनैव सवर्णो नान्येन इत्यकारादीनां मिथो भिन्नस्थानप्रयत्नत्वोक्तदोषप्रसङ्गः। तथा स्वराणां हसैरन्योन्यं जातिभेदादसावर्ण्याद्दिश्यमिति यस्येति न इलोपः । अथवा सवर्णसंज्ञावचनारम्भसामर्थ्यान्न दोषः। यदि ह्येवं सावर्ण्यं स्यात्तदा सवर्णसंज्ञावचनमनर्थकं स्यात् । अथ प्रसङ्गात् स्थानप्रयत्नावुच्यते। अकुहविसर्जनीयानां कण्ठः। इचुयशानां तालु। उपूपध्मानीयानामोष्ठौ । ऋटुरषाणां मूर्द्धा। लृतुलसानां दन्ताः। एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम्। वकारस्य दन्तोष्ठम्। जिह्वामूलीयस्य जिह्वामूलम् । नासिकानुस्वारस्य । कादयो मावसानाः स्पर्शाः। स्पृष्टं प्रयत्नं स्पर्शानाम्। यरलवा अन्तस्थाः। ईषत्स्पृष्टमन्तस्थानाम्। शषसहा ऊष्माणः। विवृतमूष्मणां स्वराणां च। ह्रस्वोकारः संवृतोपि नादाविति निर्देशात्सावर्ण्ये विवृतः । ञमङणना अनुनासिकाः । ᳵक इति जिह्वामूलीयः । ᳵप इत्युपध्मानीयः। अं इत्यनुस्वारः। अः इति विसर्जनीयः। रेफोष्मणां सवर्णो नास्तीति । एतेषामिति । अकारादीनां सकारान्तानामित्यर्थः। यत्तु कैश्चिदेतेषां समानानामिति व्याख्यातम्। तदसत्। एकारादीनां हि सावर्ण्याभावे उभये स्वरा इत्यादावग्रहणात् प्लुतानां नामित्वं न स्यात् । हे गौरेहीति नामिनो र इति रेफो न स्यात्। तथा हसानामप्यसावर्ण्ये संय्यन्तेत्यत्र यमा यप इति कृतसानुनासिकस्य यस्य हसे ग्रहणाभावाद्धसेर्हस इति द्वित्वं न स्यात्। इष्यते च। हसे सानुनासिकपाठे संय्यन्तेत्यत्र निरनुनासिकस्य यस्य यपे ग्रहणाभावात् यमादेश एव न स्यात्। तस्मात् सामान्येन सर्वेषां सावर्ण्यमेषितव्यम्। एषां सवर्णग्राहकत्वन्तु सवर्णसंज्ञायाग्रहणफलत्वाद्भवति। य्वे द्वित्व इति यत्वनिर्देशात्

मात्रत्वाच्च ॥ ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥ २ ॥ एतेषां ह्रस्वदीर्घप्लुतभेदाः परस्परं सवर्णा भण्यन्ते । लोकाच्छेषस्य सिद्धिरिति वक्ष्यति । ततो लोकत एव ह्रस्वादिसंज्ञा ज्ञातव्या । एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । व्यञ्जनं चार्द्धमात्रकम् । एषामन्येऽप्युदात्तादिभेदाः सन्ति । उच्चैरुपलभ्यमान उदात्तः । नीचैरनुदात्तः । समवृत्त्या स्वरितः । अनुनासिको निरनुनासिकश्च ॥ एऐओऔ सन्ध्यक्षराणि ॥ ३ ॥ एषां ह्रस्वा न सन्ति ॥ उभये

ज्ञापकाद्वा । तपराणामग्राहकत्वमपि चपा अब इत्यत्रातोत्युरित्युत्वाभावनिर्देशाज्ज्ञापकात् स्यात् । एवं दीर्घादीनामपि स्वग्रहणे तदुच्चारणात्प्रयत्नाधिक्यात् सन्ध्यक्षराणामिति एऐओऔ इत्यत्र भेदेनोपादानान्न मिथो ग्राहकत्वम् । एवं माद् इति दीर्घस्यापि विधेर्विधौ स्वराणामपि न सवर्णग्राहकत्वम् । चोः कुरित्युदित्करणाल्लिङ्गाद्वर्ग्याणामुदितामेव सवर्णग्राहकत्वमिति स्कोराद्योश्चेत्यत्र ककारस्य न सवर्णग्राहकत्वम् । अथवा सवर्ण इति महत्याः पूर्वाचार्य्यसंज्ञाया इहाश्रयणं तदीयोपाधिपरिग्रहार्थमिति सर्वोपि पूर्वोक्तोर्थस्तत एव सिध्यति । सवर्णप्रदेशाः सवर्णदीर्घ इत्यादयः । लोकादिति । ईदृशार्थपरमीदृशं सूत्रं सूत्रकृदेव वक्ष्यतीत्यर्थः । वयमपि तत्रैव स्पष्टयिष्यामः । तत इति । तस्माद्धेतोर्ह्रस्वदीर्घप्लुतादिसंज्ञासूत्रकृतानुक्तापि लोकत एव ज्ञेया । इदमेव दिङ्मात्रमाह एकमात्र इत्यादि । मात्राशब्दः परिमाणार्थः । तदुक्तम्,–"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकम्"इति । अपि च–"चाषस्तु वदते मात्रां द्वितीयां वायसोऽब्रवीत् । तृतीयान्तु शिखी ब्रूयान्नकुलश्चार्धमात्रकम्"इति । एषामिति । ह्रस्वादीनामित्यर्थः । अन्य इति । ह्रस्वादिभ्यः अन्ये उदात्तोनुदात्तः स्वरितश्चेति प्रत्येकं त्रयो भेदा इत्यर्थः । उच्चैरिति । उच्चैःस्थाने उर्ध्वाधरभागवत्सु ताल्वादिस्थानेषु ऊर्ध्वभागे उपलभ्यमाना गृह्यमाणा अकारादय उदात्ताः एवं नीचैः स्थाने नीचभागे त्वनुदात्ता इत्यर्थः । समवृत्त्येति । उदात्तानुदात्तयोः समवृत्त्येत्यर्थः । एऐ पूर्ववदिदमपि व्याख्येयम् । सन्ध्यक्षरप्रदेशाः सन्ध्यक्षराणामित्यादयः । एषामिति । प्रयोगाभावादिति शेषः । उभये । उभाववयवौ येषान्ते उभये उभशब्दाद्दयटि सर्वादित्वाज्जसीत्वम् । समानसन्ध्यक्षरयोरुभयोरनुक्रान्तत्वेप्यनन्तरस्य

**स्वराः ॥ ४ ॥ अकारादयः पञ्च चत्वार एकारादयश्चोभये स्वरा उच्यन्ते ॥ अवर्ज्जा नामिनः ॥ ५ ॥ अवर्णवर्जाः स्वरा नामिन उच्यन्ते । अनुक्रान्तास्तावत्स्वराः ॥ अथ प्रत्याहारजिग्राहयिषया व्यञ्जनान्यनुक्रामति । तद्यथा ॥ हयवरल ॥ ६ ञणनङम ॥ ७ झढधघभ ॥ ८ जडदगब ॥ ९ ॥**

वेधिर्वा प्रतिषेधो वेत्यनन्तरत्वात्सन्ध्यक्षराणामेव संज्ञा मा भूदिति उभयेग्रहणमिति मत्वाह । अकारादय इति । प्रत्येकञ्च संज्ञा न समुदायस्य एकत्र तस्यासम्भवात् वेङ्योरिति निर्देशाद्वा । स्वरप्रदेशाः इयं स्वर इत्येवमादयः । अवर्ज्जाः । अं वर्णं वर्ज्जयन्तीत्यवर्ज्जाः । कार्य्येण । ननु किमर्थमवर्ज्जा इत्युच्यते । अवर्णस्य नामिसंज्ञा मा भूदिति । यदि स्यात् देव इहेति नामिनो र इति रः स्यात् । अनवकाशेनादब इति लोपशासौ बाधिष्यते इति चेत् । कुले इत्यत्र नामिनः स्वर इति नुम्प्रसङ्गादवर्ज्जा इत्युक्तम् । स्वरा इति । उभये स्वरा इत्यतोनुवर्तमानाः स्वरसंज्ञेन उभये इत्युभयग्रहणानुवृत्त्या व्याख्येयम् । अथवा संज्ञायाः संज्ञान्तरासम्भवात् पूर्वत्र संज्ञापरमपि स्वरग्रहणमेवेहानुवृत्तमर्थात् संज्ञिपरं सम्पद्यते इति स्वरसंज्ञेन इत्यर्थः । नामिप्रदेशा नामिनो र इत्येवमादयः । अनुक्रान्ता इति । क्रमेणोक्ता इत्यर्थः । प्रत्याहारेति । अवादीनां शिष्यैर्ग्राहयितुमिच्छयेत्यर्थः। अनुक्रामतीति। क्रमेणाचष्ट इत्यर्थः । हयव । इहाप्यर्थस्याविवक्षितत्वाद्विभक्तेरनुत्पत्तिर्लुग्वा छान्दसः एवं सर्वत्राप्यविभक्तिके निर्देशे ज्ञेयम् । अत्र हकारो यकारात् पूर्व उपदिष्टः हवग्रहणे यकारग्रहणं यथा स्यात् । को याति हवे इत्युत्वं यथा स्यात् । यपग्रहणे च हकारस्य ग्रहणं मा भूत् । तं हसति यमो मा भूत् । वकारस्यापि हयाभ्यां परोपदेशे हवग्रहणे यपग्रहणे च उग्रहणात् को वसति गुर्वागत इत्युत्वद्वित्वे सिद्ध्यतः । वसग्रहणे च हकारयकारयोरग्रहणात् रुद्यादितीडभावः सिध्यति रुदिहीतीडागमस्तु हसादेरिति हग्रहणात् । नवसग्रहणात् । रेफस्यापि हयवेभ्यः परोपदेशाद्रसे हयवानामग्रहणात् जक्ष्यादपाक्ष्वेति संयोगादिलोपो न भवति । हवग्रहणे च रेफस्य ग्रहणात् मनोरथ इत्युत्वं सिध्यति । एवमपरमपि क्रमप्रयोजनं द्रष्टव्यम् । एवञ्च रेफस्य यपान्तर्भावात् शिवं रामादित्यादौ प्राप्तोनुस्वारस्य यमादेशो जातिपदार्थाङ्गी-

---

१ माधवस्तु इत्याह लुग्वा छांदस इत्युक्तम् एषां सूत्राणां छंदस्त्वस्य छंदोगत्वस्य चाभावात् । छंदसि लुग्विधायकवचनस्याऽभावाच्च ।

खफछठथ * १० चटतकप * ११ शषस * १२ आद्यन्ताभ्याम् ॥ १३ ॥ प्रत्याहारञ्जिघृक्षता आद्यन्ताभ्यामेते वर्णा ग्राह्याः । आदिवर्णोऽन्तेन सह गृह्यमाणस्तन्नामप्रत्याहारः । तथाहि । अकारो वकारेण सह गृह्यमाणोऽवप्रत्याहारः । स चोच्यते । अइउऋऌ एऐओऔ हयवरल ञणनङम

कारात्परिहार्य्यः । जातौ हि पदार्थे नान्तरीयकतया तद्वतीषु व्यक्तिषु प्रवर्तमाने तङ्करोतीत्यादावनुस्वारस्य सानुनासिकयमविधानेन कृतार्थं यमलक्षणं रेफस्य निरनुनासिकत्वावश्यंभावेन बाध्यते । आद्य० । आदिश्चान्तश्चाद्यन्तौ ताभ्यां सहार्थे तृतीया । अत एव ज्ञापकाद्विनापि सहयोगं तृतीया भवति । अत्र सामर्थ्यादाद्यन्तसामान्यवचनावाद्यन्तशब्दाविति इकारादीनां पूर्वोत्तरवर्णापेक्षया सत्यपि मध्यत्वे तदप्रतिषेधात् परपूर्वापेक्षमाद्यन्तत्वमपि प्रयोजकमिति सुग्रहा इलादयः । अत्र च प्रमाणं क्विलादिति निर्देशः । जिघृक्षतेति । ग्रहीतुमिच्छता शिष्येणेत्यर्थः । एते वर्णा इति । अकारादारभ्य सकारान्ता इत्यर्थः । एतेन मध्यगानां प्रत्येकं संज्ञिता दर्शिता । तत्राद्यन्तयोर्ग्राहकसूत्रवशात् संज्ञात्वेन करणत्वं करणे च तृतीया ततश्चाद्यन्ताभ्यां संज्ञया एते वर्णाः संज्ञिनो ग्राह्या इत्यर्थः । अत्र पक्षे आद्यन्तयोः संज्ञात्वेपि आदवे० पुंसोसुङिति ज्ञापकान्मध्यगानामिव कार्यित्वम् । आद्यन्ताभ्यामिति वाऽऽवर्तनीयम् । तत्र करणसहार्थयोर्भ्यामौ । आद्यन्तेति वा लुप्तविभक्तिकं पृथगेव संज्ञापदं निर्देश्यम् । आभ्यामिति सहयोग एव तृतीया । इदम्शब्दश्च सान्निध्यादाद्यन्तौ परामृशति । ततश्चायमर्थः—आद्यन्तयोर्मध्यापेक्षित्वान्मध्यस्थानामाभ्यामाद्यन्ताभ्यां सह तत्सहितानामाद्यन्तौ वर्णौ संज्ञेति । आद्यन्तयोश्च सन्निकर्षविशेषापेक्षित्वाच्छाब्दक्रमसन्निवेशेपि भोस् भगोस् अघोस् इत्यादावप्यस्य प्रवृत्तिरुपपद्यत इति सर्वं सुस्थम् । आदिवर्ण इति । अकारादिर्वकारादिना संयुज्यमानो यदुच्चारणः स्यात् तत्संज्ञ एवाबादिः प्रत्याहारः स्यादित्यर्थः । तथाहीति । निदर्शनार्थेऽव्ययमिदम् । अकार इति । आदिमं वकारमतिक्रम्य वकारेणेति प्रसिद्धपरिग्रहार्थमुक्तम् । स चेति । अवप्रत्याहार इत्यर्थः । इतिशब्दः प्रत्याहारसमाप्तौ । एतत्परिमाणमस्याः सा एतावती एतत्कियदिति वतुः आईश्चैतद इत्यात्वम् । प्वित इतीप् । सा संख्या यस्येति बहुव्रीहौ कः पुम्वद्वेति पुम्वद्भावादीवभावः ।

**झढधघभ जडदगब इत्येतावत्सङ्ख्याकः सम्पद्यते । चटतकप इति चपप्रत्याहारः । जडदगब इति जबप्रत्याहारः । झढधघभ इति झभप्रत्याहारः । एवं यत्र यत्र येन येन प्रत्याहारेण कृत्यं स स तत्र तत्र ग्राह्यः । संख्यानियमस्तु नास्ति ॥ हसा व्यञ्जनानि । हकारादयः**

उक्तपरिमाणवानबप्रत्याहारः सम्पद्यते सम्पूर्णो भवतीत्यर्थः । चटतकपेत्यादि पूर्ववद् व्याख्येयम् । उपसंहरति । एवं यत्र यत्रेति । एवमिति प्रकारेऽव्ययम् । अमुना प्रकारेण यस्मिन् यस्मिन् सूत्रे येन येन प्रत्याहारेण कार्यं स स प्रत्याहारस्तस्मिंस्तस्मिन् सूत्रे ग्राह्य इत्यर्थः । संख्यानियम इति । तुर्हेतौ यस्मादेतावन्त एव प्रत्याहारा इति संख्यानियमोऽत्र नास्ति । तत् ग्राहकसूत्राणां वक्ष्यमाणत्वान्नियताद्यन्तादिवर्णज्ञानस्य तदायत्तत्वात्तन्निरूपणे च गौरवापातादिति भावः । संख्याया अनियमो वा नास्ति द्वौ नञौ प्रकृतमर्थमनुगमयत इति ग्राहकसूत्राणां नियतत्वात्प्रत्याहाराणामपि संख्यानियमोऽस्तीत्यर्थः । स चैवम् "एकादिवर्णाद्वलभाः सताः स्युर्द्वाभ्यां मकारोऽथ पबौ चतुर्भ्यः । षड्भ्यः स आद्यक्षरनित्यताऽत्र सारस्वतीयोत्तरसूत्रतः स्यात्" इति । अस्यार्थः—वलभा वकारलकारभकाराः । सताः सतकारा एकस्मादादिवर्णात्स्युः भवन्ति । अव इल झभ छत इति । तथा मकारो द्वाभ्यामादिवर्णाभ्यां स्यात् । ञमयमेति । अथ पबौ पकारबकारौ चतुर्भ्यः स्तः । यप झप खप चप, हब अब झब जब इति । तथा सः सकारः षड्भ्य आदिवर्णेभ्यः स्यात् । हस वस रस झस खस शस इति । अत्रैषु प्रत्याहारेष्वाद्यक्षरनित्यता आदिवर्णनियमः सारस्वतीयोत्तरसूत्रतः सारस्वतसम्बन्धीनि यान्युत्तरसूत्राणि वक्ष्यमाणसूत्राणि तेभ्यः स्यादित्यर्थः । तेषु हि ये उपात्ता आदिवर्णास्त एव तत्प्रत्याहारप्रयोजका नान्य इति भावः । तथाहि अव अवकुप्वन्तरेऽपि । इल किलात् षः सः कृतस्य । झभ हो झभाः । छत नः सक् छते । ञम ञमे ञमा वा । यम नुमयसः । यप यमा यपेस्य । झप चप झपानां जबचपाः । खप शसात्खपाः । अब आद्बे लोपश्च । झब जबझबेजबाः । हब हबे । हस हसेह्र्हसः । वस रुदादेश्चतुर्णां हसादेः । रस उ रसे । झस खस खसे चपा झसानाम् । शस शसात् खपाः इति । प्रत्याहारप्रपञ्चस्तु लाघवेन शास्त्रप्रवृत्त्यर्थः । हसा इति । एत एव

सकारान्ता वर्णा हसा, व्यञ्जनानि भवन्ति । स्वरहीनं व्यञ्जनम् । तेष्वकारः सुखोच्चारणार्थत्वात् ॥ कार्यायेत् * ॥ १६ ॥ प्रत्ययाद्यतिरिक्तः कस्मैचित्कार्यायोच्चार्यमाणो वर्ण इत्संज्ञको भवति ॥ यस्येत्संज्ञा तस्य लोपः ॥ वर्णादर्शनं लोपः ॥ वर्णविरोधो

नान्येषां व्यञ्जनसंज्ञा इत्यर्थः । हसा इति बहुवचनेन प्रत्याहारसंज्ञां प्रत्येकं दर्श यति । स्वरहीनमिति । स्वरेति भावप्रधानो निर्देशः । तेन स्वरत्वहीनमित्यर्थः अन्यथा स्वराणामपि स्वरहीनत्वात् व्यंजनसंज्ञातिप्रसज्यते । वर्णा हसा इति न प्रकृतत्वाद्वर्णमेव न स्वरवान् हसः । तेष्विति । तेषु हकारादिषु अकार इहानीतो दकाहरणार्थघटन्यायेन निवर्तते न चोपदेशेषु कार्यभागित्यर्थः । तर्हि कुत उपा इत्याशङ्क्याह सुखेति । अर्थशब्दः प्रयोजनवाची सता ह्यकारेण व्यञ्जनसमुदाय सूच्चरो नान्यथेति भावः । उच्चारणार्थस्यापीत्संज्ञायां कुण्डानीत्यादौ नुमयम इ नुमि पुनर्व्रितो नुमिति नुम् प्रसज्येत । कार्य्यायेत् । क्रियते सम्पाद्यते इति कार्यं प्रयोजनं तस्मै । यद्येवमपत्येणित्यादीनामपि प्रयोजनवत्त्वादित्संज्ञातिप्रसज्येत नैवम् । इत्संज्ञासाध्यस्य शास्त्रीयस्य वृद्ध्यादेः प्रयोजनस्य विवक्षितत्वात् । अन्यथ सकलशास्त्रस्य व्याकुलत्वापातात् । एवमपि सति कार्ये इत्त्वं सति चेत्त्वे कार्य्य मिति स्पष्ट एवान्योन्याश्रयभावः । भाविनः प्रयोजनस्य विवक्षितत्वात्तस्य न प्रत्ययादिष्वभावात् न दोष इति मत्वाह । प्रत्ययाद्यतिरिक्त इति । आदिन आदेशागमधातुनामप्रत्याहारा गृह्यन्ते । अतिरिक्तोऽन्यः तत्तत्स्वरूपानन्तर्भूतो प्रत्ययादिकार्य्यभागित्यर्थः । इत्संज्ञाप्रदेशा ङितीत्यादयः । यस्येदिति । ञिटुड नामितामन्त्यवर्णसम्भवेपि एति कार्य्यं निष्पाद्य गच्छति न तिष्ठतीति इदित्यन्वर्थ संज्ञाविज्ञानात्समुदायलोपः।इदित्यनुवृत्तौ लोप एत्येव सिद्धे यस्येत्संज्ञा तस्येति वचन स्य समुदायलोपार्थत्वाद्वा । नानर्थकेऽलोन्त्यविधिरिति परिभाषया वा ।वर्णादर्शनमिति वर्णविनाश इत्यर्थः । एतच्च तत्र तत्र लोपनं लोप इत्यन्वर्थाश्रयणाल्लभ्यते । लोपप्रदेश नो लोप इत्येवमादयः। वर्णविरोधः ।वर्णविनाशे वर्णान्तरोत्पत्तिप्रतिबन्धः । एतदा

**लोपश् ॥ मित्रवदागमः ॥ शत्रुवदादेशः ॥ स्वरानन्तरिता हसाः संयोगः ❀ १९ ॥ कुचुटतुपुवर्गाः ❀ २० ॥ उकारः पञ्चवर्णपरिग्रहणार्थः ॥ अरेदोनामिनो गुणः ❀ १८ ॥ ना-**

सम्बन्ध आधारभावयोरिति लिङ्गात्तत्तत्कार्य्यप्रतिबन्धनाय लोपस्यैव शान्तत्वेनाश्रयणाद्गम्यते । लोपशप्रदेशाः य्वोर्लोपशित्येवमादयः । मित्रवदिति । मित्र इव मित्रवदिति सप्तम्यन्ताद्वत् । यथा मित्रं मित्रान्तरे सन्निधीयते तथा टित्त्वादिलिङ्गेनागमोप्यागमिनीत्यर्थः । यथा ङेरागिति । शत्रुवदिति । शत्रोरिव शत्रुवदिति षष्ठ्यन्ताद्वत् । यथा शत्रुः शत्रोर्विनाशाय भवति तथा आदेशोऽपि स्थानिन इत्यर्थः । यथा टा नास्त्रियामिति । इदमपि य्वे स्त्रियामिति निर्देशात्प्रथमया षष्ठ्या वा निर्दिश्यमानेन यत्वेन ङेरामा च स्थानिविनाशात्प्रतीयते । स्वरेति । अन्तरं विवरं वर्णशून्यः कालः अन्तरं जातमेषां ते अन्तरिताः न अन्तरिताः अनन्तरिताः स्वरैरनन्तरिताः स्वरानन्तरिताः एवंविधा हसाः समुदिताः संयोगसंज्ञा भवन्तीत्यर्थः । स्वरानन्तरिताः किम् । पनसमित्यत्र संयोगादिलोपो न । हसाः किम् । तितउच्छत्रम् । संयोगान्तलोपो न । संयोगप्रदेशाः संयोगान्तस्य लोप इत्येवमादयः । कुचु इति । पञ्चाप्येते वर्गसंज्ञा इत्यर्थः । अथवा शास्त्रान्तरे ये वर्गसंज्ञास्तेषां तादृशानामेवात्र कुचुटुतुपु इति संज्ञा विधीयते । अत्र पक्षे स्कोराद्योरित्यादौ केवलानां ग्राहकत्वन्तु संज्ञाविधानसामर्थ्यान्न भवति । चजोः कगौ घितीति पृथङ्निर्देशाद्वा । अरेदो० । अर् च एच्च ओश्चेति द्वन्द्वे- ऽल्पस्वरत्वादरः पूर्वत्वम् । तपरकरणं विस्पष्टार्थम् । नामिनः किं याति उम्भिता । ग्लायतीत्यादौ तु ऐकारोपदेशसामर्थ्यान्न गुणः । गुणेऽप्यैकारः । अनपि स्वात्वविधिरित्येकार एवोपदेष्टव्यः अयादेशस्तु तन्निमित्तत्वाद्भवति । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्येत यस्य तु विधेर्निमित्तमेव नासौ बाध्यत इति आत्वमपि विधिसामर्थ्यान्न बाध्यते । निनाय जुहावेत्यादौ च येन नाप्राप्तौ यो विधिरारभ्यते स तस्य बाधको भवतीति वृद्ध्या बाधितत्वाद्गुणो न प्रवर्तते । यौतीत्यादावप्यौत्वविधिसामर्थ्यान्न गुणः । तदेवं पारिशेष्यात् ऋइउ एषां स्थाने सावर्ण्याद्विधीयमाना अर् ए ओ एते क्रमाद् गुणसंज्ञा भवंतीत्यर्थः । नामिस्थानका इति । नामी स्थानं

**मिस्थानका अर् ए ओ एते गुणसंज्ञकाः ॥ आरै औ वृद्धिः ❀ १७॥ आ आर् ऐ औ एते वृद्धिसंज्ञकाः ॥ अन्त्यस्वरादिष्टिः ❀ १४ ॥ अन्त्यो यः स्वरस्तदादिवर्णष्टिसंज्ञको भवति ॥ अन्त्यात्पूर्व उपधा ❀ १५ ॥ अन्त्याद्वर्णमात्रात्पूर्वो यो वर्णः स उपधासंज्ञको भवति ॥ असंयोगादिपरो ह्रस्वो लघुः ❀ ॥ विसर्गानुस्वारसंयोगपरो दीर्घश्च गुरुः ❀ ॥ मुख-**

येषां ते तथा । गुणप्रदेशाः गुण इत्येवमादयः । आरै० । अत्र नाम्नि च युष्मदि चेत्यत्र भागैरिति निर्देशादाकारोपि कृतदीर्घो निर्दिश्यत इत्याह—आआरिति । सावर्ण्याद् ऋइउएओ एषां स्थाने विधीयमाना इत्यर्थः । वृद्धिप्रदेशा आदिस्वरस्य ञ्णिति वृद्धिरित्यादयः । अन्त्यः । अन्ते भवोन्त्यः स चासौ स्वरश्चान्त्यस्वरः स आदिर्यस्य स समुदायष्टिसंज्ञ इत्यर्थः । हलीषेत्यादौ तु एकस्मिन्नप्याद्यन्तवद्व्यवहाराट्टिसंज्ञा भवति । कस्याप्येकपुत्रस्य तस्मिन्नेव पुत्रे ज्येष्ठमध्यमकनिष्ठव्यवहारवत् । टिप्रदेशाष्टेरित्यादयः । अन्त्यादिति । एतच्चास्मदि च भागैरिति निर्देशादवसीयते । उपधाप्रदेशा नोपधाया इत्यादयः । असंयोगादीति । संयोगश्चादौ च संयोगादयः विसर्गानुस्वारसंयोगास्तत्परो यो न भवति स ह्रस्वो लघुरित्यर्थः । लघुप्रदेशा लघोर्दीर्घ इत्यादयः । विसर्गेति । विसर्गादिपरो ह्रस्वो गुरुसंज्ञः । चः समुच्चये । न केवलं स एव अपि तु दीर्घः सर्वोपि गुरुसंज्ञ इत्यर्थः । गुरुप्रदेशा गुरोर्हसादित्यादयः । मुखेति । एवं सहोच्चार्यमाणो वर्णोनुनासिकसंज्ञ इत्यर्थः । ननु चात्र मुखञ्च नासिका च मुखनासिकं तेनेति द्वन्द्वैकत्वेन भाव्यम् । न च वाक्यमितरेतरयोगे द्विवचनमिति । तदभावात् । तथोक्तं रामचन्द्रैः समाहारस्यैकत्वादेकत्वे सिद्धे इदं प्रकरणं विषयविभागार्थं तेन प्राण्यङ्गादीनां समाहारद्वन्द्व एवेति । सत्यम् । एकवद्भावो वा समाहारे वक्तव्य इत्यत्र वाशब्दस्य व्यवस्थार्थत्वाद् द्विवचनम् । तथोक्तं रूपमालायाम् । सर्वो द्वन्द्वो विभाषयैकवदित्येके इति । तथा च रुद्रप्रयोगः—कौटिल्यं कुचनेत्रयोः करचरणाधरदन्तेषु रागस्त इति । अथवा मुखञ्च नासा च मुखनासं तदस्त्याश्रयत्वेन ययोरुच्चारणयोस्ते मुखनासिके मत्वर्थे इकः । ताभ्यामुच्चार्य्यमाणा इत्यर्थः । मुखेन सहिते वा नासिके मुखनासिके

**नासिकाभ्यामुच्चार्यमाणो वर्णोऽनुनासिकः ॥ इति संज्ञाप्रक्रिया ॥ १ ॥ अधुना स्वरसन्धिरभिधीयते ॥ इ यं स्वरे ॥ २२ ॥ इवर्णो यत्वमापद्यते स्वरे परे । दधि आनय इति स्थिते । दध्य् आनयेति तावद्भवति ॥**

ताभ्याम् । अत्र नासिकांशयोर्द्वित्वाद् द्विर्वचनम् । यथा नैषधकाव्ये—"नलिकेव तदुच्चनासिके त्वयि नालीकविमुक्तिकामयोः" इति । इति संज्ञेति । इतिशब्दः समाप्त्यर्थः । संज्ञाप्रकरणं समाप्तमित्यर्थः ॥ श्रीजानार्दनिवत्सराजतनयः श्रीकाह्न-नामा द्विजो यं श्रीनायकदेविकापि सुधियं प्राजीजनन्माधवम् । तस्य व्याकर-णार्णवैकतरणेः सारस्वतीयागमद्व्याख्या नामविधानकाण्डविरतिं सिद्धान्तरत्ना-वली ॥ इति श्रीभट्टमाधवविरचितायां सिद्धान्तरत्नावल्यां सारस्वतटीकायां संज्ञा-प्रकरणं समाप्तम ॥ १ ॥

अधुना स्वरसन्धिरिति । सन्ध्युपयोगिसंज्ञाप्रकरणादनन्तरं सन्धिप्रकरणमु-च्यत इत्यर्थः । इ यम् । इ इति लुप्तविभक्तिको निर्देशः । यमित्यकार उच्चारणार्थ इत्याह । यत्वमिति । यस्य भावो यत्वं यमात्रं व्यंजनमात्रमित्यर्थः । अत एव निर्देशस्य भावप्रधानत्वादिवर्णयत्वयोः कर्तृकर्मत्वान्यथानुपपत्त्या कर्तृस्थक्रियया एव धातुराक्षिप्यत इत्याह आपद्यत इति । प्राप्नोतीत्यर्थः । उभे अपि प्रथमे वा क्रियापदान्तराभावे च सत्तार्थो धातुरध्याहार्य्य इत्याह आपद्यत इति । यरूपो भवतीत्यर्थः । य एव स्वरे परे प्रयोज्य इति रहस्यम् । शब्दानां नित्यत्वमप्येवमे-वोपपद्यते स्थानषष्ठ्यामप्येवमेव व्याख्येयम् । इह स्थान्यादेशत्वन्तु सर्वत्रापि आगमादिलिङ्गाभावाद्व्याख्यानात् तत्तज्ज्ञापकाद्वा । अत्र ऊदित इति ज्ञापकात्स-प्तमीनिर्देशे अव्यवहितस्यैव कार्य्यविज्ञानादग्निचिदत्रेत्यत्र यत्वं न । तत्रापि ग्रामे देवदत्त इतिवत् पूर्वपरसत्तायां संदिग्धस्यापि कार्यिणः परस्यामी अत्रेत्यादौ पूर्वस्थे स्वरे मकारव्यवधानात्सन्धेरप्राप्तेर्नामीत्यस्य वैयर्थ्ये इह शास्त्रे सप्तमीनिर्देशे पूर्वस्यैव कार्य्यं स्यादिति सामान्येन ज्ञापनार्थत्वात् स्वरे पूर्व एव इवर्णो यत्वमाप्नोति । यश्च स्वरे पूर्वः अर्थात् स्वरस्तस्मात्पर इत्यभिप्रायेणाह । स्वरे परे इति । भावल-क्षणासप्तमीयं निमित्तस्य हि सत्तया निमित्तिनः कार्य्यप्राप्तिर्लक्ष्यत इति । ईइति किम् । गोदुहौ । स्वरे किं दधि पश्य । दध्य् आनय इतीति । दधि आनयेत्यत्रा-कारे इकारस्य यत्वे कृते सत्येवं तावदित्यर्थः । अत्र नामिनः स्वरे इति नुमभावस्तु

**हसेऽर्हेहसः** ❀ ॥ ५८ ॥ **स्वरात्परो रेफहकारवर्जितो हसो हसे परे द्विर्भवति । इति धकारस्य द्वित्वम् ॥ झबे जबाः** ❀ ॥ २४६ ॥ **झसानां झबे परे जबा भवन्ति । इति धकारस्य दकारः सवर्णत्वात् । वर्ग्यो वर्ग्येण सवर्ण्ण इति वचनात् ॥ यथासंख्यं वा वक्तव्यम्** ❀ ॥ **स्वरहीनं परेण संयोज्यम् ।**

तत्रैव वक्ष्यते । हसे० । अत्र ङ्णनो ह्रस्वादित्यतः स्वर इत्यनुवर्तते द्विरिति च । तत्र स्वर इति सप्तम्यन्तमपि अर्थात् पञ्चम्यन्तं स्यादिति मत्वाह स्वरात्पर इति । र् च ह् च र्ह् न र्ह् अर्हितिपदं हसविशेषणमित्याह रेफहकारवर्जितो हस इति । हसे किं नयनम् । अर्हिति किं नह्यत्र । हसः किं तितउच्छत्रम् । इति धकारस्येति । दध्य् इत्यत्र स्थितस्य । पुनरत्र द्वित्वं तु जातिपदार्थाश्रयणान्न भवति । जातौ पदार्थे सकृदेव लक्षणप्रवृत्तिर्न पुनः । झबे० । झसानामिति खसे चपा झसानामित्यतोनुऽवर्तते । झसानां किं पुमान् गच्छति । झबे किं दध्ध्य् आनय, परधकारस्य न । इति धकारस्येति । दध्ध्य् इत्यत्र धकारे झबे परे पूर्वधकारस्थाने दकारो भवतीत्यर्थः । ननु पञ्चसु प्राप्तेषु कुतो द एव स्यादित्याशङ्क्याह सवर्णत्वादिति । इह शास्त्रे सर्वोपि विधिस्सवर्ण एव भवतीति परिभाष्यते । सवर्णस्य भावस्सवर्णत्वं तस्मात् जबेषु दकार एव धस्य सवर्णो नान्यः । कुत इत्याह । वर्ग्यो वर्ग्येणेति । वर्गे भवो वर्ग्यः णितो वेति सूत्रेण यः । वर्ग्यो यो वर्णः सोन्येन स्ववर्गान्तःपातिना सह तुल्यस्थानप्रयत्नत्वात्सवर्णः स्यादिति वचनाद्दन्त्यधकारस्य दन्त्यो दकारः स्यादिति भावः । अथ स्तोः श्चुभिः श्चुरित्याद्यर्थमवश्यं कार्य्यं न्यायप्रसंगादिहाह । यथासंख्यमिति । संख्यामनतिक्रम्य यथासंख्यमिति यथासादृश्य इत्यव्ययीभावः । उद्देश्यविधेयसाम्ये सति आदेशविधानं यथाक्रमं स्यादिति वाच्यमित्यर्थः । स्वरहीनमिति । संयोज्यं संश्लिष्योच्चारणीयमित्यर्थः । दद्ध्यानयेति । उक्तप्रक्रियायां कृतायामेवं स्यादित्यर्थः । इह संयोगान्तस्य लोप इति यलोपस्तु असिद्धम्बहिरङ्गमन्तरङ्ग इति यत्वस्यासिद्धत्वान्न भवति अत एवाद्यन्ताभ्यामिति निर्देशः । इ यं स्वर इत्यत्रेकारः सावर्ण्याद्दीर्घमपि

**दद्ध्यानय । अर्हीति विशेषणान्न रेफस्य द्वित्वम् ॥ रांद्यपोद्विः ❀ ॥ ६० ॥ स्वरपूर्व्वाद्रेफात्परो यपो द्विर्भवति । गौर्य्यत्र । स्वर इत्यनुवर्तते । एवमन्यत्रापि यत्र न सूत्राक्षरैः कार्य्यसिद्धिस्तत्र सर्वत्र सूत्रान्तरात्पदान्तरानुवृत्तिर्ज्ञातव्या । ग्रन्थभूयस्त्वभयान्नास्माभिर्लिख्यते ॥**

गृह्णातीति दर्शयति । गौर्य्यत्रेति । गौरी अत्रेति स्थिते सतीकारस्य यत्वम् ॥ अर्हीति । हसेर्ह्हस इत्यत्रेति शेषः । राद्यप इति । अयं भावः ङणनो ह्रस्वादित्यत्र हइति लुप्तपञ्चमीकं पृथक् निर्दिश्यते तत्र हाभ्यां पदान्ते ङणनामसम्भवात् हसेर्ह्हस इत्युत्तरार्थं हानिर्देशः । तेन स्वरात्पराभ्यां रेफहकाराभ्यां परोपि हसो द्विर्भवति गौर्य्यत्र नह्यत्रेति। केचित्तु हसेर्ह्हस इत्यत्र ह्रस्वादित्यनुवर्त्य ह्रस्वात्परो हसो द्विर्भवतीति व्याख्याय पाणिनीयं दीर्घादाचार्य्याणामित्यनुसरन्ति । अन्ये तु र्ह् इति रेफहकारावेव लुप्तपञ्चमीकौ निर्दिश्य द्वितीयञ्चे यं स्वर इत्यतः स्वरग्रहणमनुवर्त्य वाक्यद्वयेनार्थद्वयं कुर्वन्ति स्वरात्परो हसो हसे द्विः, स्वरात्पराभ्यां रहाभ्याञ्च परो हसो द्विरिति । तत्र रहाभ्यामिति रेफस्य साक्षाद्विहितेन निमित्तत्वेन हसान्तर्भावानुमितं कार्यित्वं बाध्यत इति मद्रह्रदादौ न द्विरुच्यते रेफः । हकारस्य तु विधानद्वयेप्युभयत्र प्रत्यक्षत्वेपि ञमे ञमा वेत्यतो व्यवस्थितार्थ वानुवृत्तेर्न द्वित्वम् । एवं शषसस्यापि । झसाद्विर्हे:, यक्र चतुर्षु इति निर्देशाद्वा । सर्वमपि द्वित्वमेवं वानुवृत्तेर्विवेच्यम् । स्वर इतीति । वक्ष्यमाणसूत्रेषु इ यं स्वर इत्यतः । अन्यत्रापीति । अन्यत्रापि यत्र सूत्रेषु सूत्रस्थैरक्षरैः कार्य्यस्य सिद्धिर्न तत्र सूत्रे सूत्रान्तरादन्यसूत्रात्पदान्तरानुवृत्तिः कार्य्यसिद्धिहेतुकान्यपदानुवृत्तिः सर्वस्मिन्नपि शास्त्रे ज्ञातव्या लोकतो ज्ञेयेत्यर्थः । यथाहि । लोके निर्दिश्यमानमधिक्रियते देवदत्ताय गौर्दीयतां कम्बलश्चेत्यत्र देवदत्तायेति । एवमुर्वमित्यादौ निमित्तापेक्षायां स्वर इत्यादि । यथा चान्यनिर्देशो निवर्तकः देवदत्ताय गौर्दीयतां विष्णुमित्राय कम्बल इति कम्बलो गोनिवर्तकः एवमुवमित्यत्र वकारो यकारस्य निवर्तकः । एवं सर्वत्र द्रष्टव्यम् । व्याख्यानाच्चावधिनिर्णयः । ग्रन्थेति । अतिशयेन बहु इति भूयः ईयसो बहोर्लोपो भू चेति ईलोपो भूरादेशश्च भूयसो भावः भूयस्त्वं ग्रन्थस्य भूयस्त्वं ग्रन्थभूयस्त्वं तदेव भयं तस्मात् । ग्रन्थातिगौरवभीतेरनुवर्त-

---

१ माधवस्तु नेदं सूत्रमित्याह ।

**उवम् ॥ २३ ॥ उवर्णो वत्वमापद्यते स्वरे परे । मध्वत्र ॥ ऋ रम् ॥ २४ ॥ ऋवर्णो रत्वमापद्यते स्वरेपरे । पित्रर्थः ॥ ऌ लम् ॥ २५ ॥ ऌवर्णो लत्वमापद्यते स्वरे परे । लनुबन्धः ॥ एअय् ॥ २६ ॥ एकारोऽय् भवति स्वरे परे । नयनम् ॥ ओअव् ॥ २८ ॥ ओकारोऽव् भवति स्वरे परे । भवति ॥ गवादेरवर्णागमोऽक्षादौ वक्तव्यः ॥ गवाक्षः । गवेन्द्रः । गवाजिनम् । प्रौढः ॥ क्वचित्स्व-**

मानं तत्तत्पदं सूत्रकृता सूत्रेषु न लिखितं तदस्माभिर्ऋजुत्वकारैरपि तत एव न लिख्यत इत्यर्थः । उवमिति । इयं स्वर इतिवद्व्याख्येयम् । पृथग्योगकरणन्तु सुखप्रतिपत्त्यर्थम् । मध्वत्रेति । मधु अत्रेति सत्यनेन वत्वे धस्य हसेर्हस इति द्वित्वे झबे जबा इति दत्वे संयुक्तोच्चारणे सत्येवं स्यादित्यर्थः । ऋ । पित्रर्थः पितुरर्थ इति तत्पुरुषः षष्ठीलोपः । द्वित्वे तकारस्य झबपरत्वाभावात् झबे जबा इति न प्रवर्तते श्लिष्टोच्चारणम् । ऌ । लनुबन्ध इति । ऌत्वं निमित्ताभावात् द्वित्वादिर्न । ए । नयनमिति । नयतेर्भावे योरनादेशे गुणे अनेन अयादेशे श्लिष्टोच्चारणम् । ननु च अर्थवद्ग्रहणे नानर्थकस्येति परिभाषया एतेरने अयनमित्यत्रैव स्यात् । न नयनमित्यत्रावयवैकारस्यानर्थक्यात् । मैवं साधनाधारयोरिति ज्ञापकेनास्या अनित्यताज्ञापनात्, अत एव दण्डी यशस्वीत्युभयत्रापीनां शौ सावितिदीर्घत्वमुपपद्यते येन विधिस्तदन्तस्येति न्यायात् । ओ । भवतीति । भूसत्तायां तिप् अप् गुणः ततोवादेशः । गवादेरिति । गो आदिर्यस्य स गवादिः तस्य गणस्याक्षादौ परे । आगच्छतीत्यागमः वर्णस्य आगमो वर्णागमः अश्चासौ वर्णागमश्च अवर्णागमो भवतीति वक्तव्यमित्यर्थः । गवाक्ष इति । गवामक्षीवेति समासे विभक्तिलोपे डप्रत्यये टिलोपे गो अक्ष इत्यत्र अवर्णागमे अव् सवर्णदीर्घः । व्योर्लोपशिति वकारलोपस्तु आगमा यद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति वस्य पदान्तत्वाभावान्न । गवेन्द्र इति । गवामिन्द्र इति समासे षष्ठीलोपे अवर्णागमे अवादेशे अइए इत्येत्वम् । गवाजिनमिति । गोरजिनमिति तत्पुरुषे विभक्तिलोपे गवाक्षवत्प्रक्रिया । प्रौढ इति । प्रऊढ इति स्थिते अवर्णागमे कृतेऽस्य गवादिषु पाठसामर्थ्यात्सवर्णदीर्घाभावः पश्चादुओ इत्योत्वे ओऔऔ इत्यौत्वम् । आदिना स्वैरमक्षौहि-

**स्वच्चकारः ॥ गव्यूतिः । ऐ आय् * ॥ २७ ॥ ऐकार आय् भवति स्वरे परे । नायकः ॥ औ आव् * ॥ २९ ॥ औकार आव् भवति स्वरे परे । ताविह ॥ य्वोर्ह्लोपश्**

गीत्यादयः । इह च कितमागमलिङ्गमकृत्वा यदवर्णागम इति वचनेन विधानं तत् गो अग्रमित्यादीनामपि सिद्ध्यर्थम् । तथाहि । अवर्ण इत्यविभक्तिको निर्देशः तेन अक्षादाववर्णः गवादेरागमो मित्रवत् गवादिविघातायानिमित्तं स्यादित्यर्थात् गो अग्रमित्यत्र प्रकृतिभावः सिध्यति । अथवा आगम इति न संज्ञाशब्दः किं तर्हि क्रियाशब्दः, आगच्छतीत्यागम इति आगमेरच्प्रत्ययः । ततः अक्षादाववर्णः गवादेरागमः कर्मषष्ठीयं गवादिमागच्छति अन्तःप्रविशति गवादिरूपो भवतीत्यर्थात् गोऽग्रमिति पूर्वरूपं सिध्यति । अत्र पक्षद्वयेपि अक्षादाविति बहुव्रीहेरतद्गुणसंविज्ञानत्वादक्षशब्दपरिहारेण गवाक्ष इत्यत्र न प्रकृतिभावपूर्वरूपे । अथवा गवादेरवर्णागमः इति योगविभागः कर्त्तव्यः । तत्र स्वर इत्यधिकाराल्लभ्यते । अवर्णागम इति च समस्तम् । न वर्णागमोऽवर्णागम इति संज्ञाशब्द एवायं सम्बन्धषष्ठ्येवैषा तेन गवादेः स्वरे परे वर्णस्यागमो न भवतीत्यर्थात् गवीश इत्यादि सिध्यति । योगविभागस्येष्टसिद्ध्यर्थत्वात् गवाक्षः गवेन्द्र इत्यत्र न निषेधः । ततोऽक्षादौ वक्तव्य इति द्वितीयो योगः । तत्र गवादेरवर्णागम इत्यनुवृत्तेर्मुख्यार्थः । ननु यदि स्वर इत्यधिक्रियते तर्हि किमक्षादिग्रहणेन प्रयोजनं तेषामपि स्वरादित्वात् । सत्यम् । एवं सिद्धे यदक्षादिग्रहणं तदस्य विधेः पदान्तरसन्निधानं नियमयति । ततश्च एकपदे गवे इत्यादौ नैतत्प्रवर्त्तते । एतत्सर्वं वर्णागमग्रहणाल्लभ्यते । ग्रन्थाधिक्यादर्थाधिक्यमिति । अन्यथा अगित्येवावक्ष्यत् । क्वचिदिति । स्वरेण तुल्यं स्वरवत् यकारोपि क्वचिदवादेशं प्रवर्त्तयतीति शेषः । एतच्च लाघवाय एओऐऔ अयवायावः इत्येकयोगे कार्य्ये ए अय् ओ अव् ऐ आय् औ आव् इति पृथग्योगकरणस्य स्वरतोन्यत्र यकारे गव्यूतिरित्यत्राध्वपरिमाणे ओकारस्यावादेशप्रवृत्तेर्ज्ञापनार्थत्वादनुमीयते । गव्यूतिरिति । क्रोशयुगमित्यर्थः। अध्वपरिमाणादन्यत्र गोयूतिरित्येव । ऐ । नायक इति । णीञो वुण्यकादेशे वृद्धावाय् । औ । ताविहेति । तदो द्विवचनस्याविश्लिष्टोच्चारणम् । य्वोः । यूच वूच य्वौ तयोः। अत्र

**वा पदान्ते * ॥ ३० ॥ पदान्ते स्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति । त आगताः । तयागताः । पट इह । पटविह । श्रिया इदम् । श्रियायिदम् । ताइह ॥ लोपशि पुनर्न सन्धिः ॥**

यद्यपदान्त इति स्यात् तदा असन्देहार्थमपदान्ते य्वोर्लोपश्चेति ब्रूयात् । किं च अत्रापदान्त इति सत्येदोत इत्यत्राप्यनुवृत्तौ हरेर्भानोरित्यादावप्यलोपस्यानेनैव सिद्धत्वात् ङस्येति वक्ष्यमाणं सूत्रमपार्थं स्यात्, अतः पदान्त इत्येवच्छेद इति मत्वाह । पदान्ते स्थितानामिति । अयादीनामिति । अयवायावामित्यर्थः । एतच्च एअयित्याद्यनुवृत्तेर्लभ्यते । अयादिषु चेकारोकारयोरसम्भवात् य्वोरिति यकारवकारयोरेव ग्रहणम् सम्बन्ध आधारभावयोरिति निर्देशाच्चेत्यत आह । यकारवकारयोरिति । त आगता इति । अयादेशे यलोपश् । तयागता इति । यलोपशोभावे । पट इहेति अवादेशे वलोपश् । पटविहेति वलोपशोभावे । एवं श्रियायिदं श्रिया इदम् । ता इतः तावितः । ननु त आगताः पट इहेत्यत्र दीर्घत्वैत्वाभ्यां भाव्यमित्याशङ्क्याह । लोपशीति । लोपशि कृते सति पुनः सन्धिर्न भवति,ततश्चात्र यवयोर्लोपशि दीर्घत्वैत्वे न । ननु राज्ञोऽश्व इत्यत्र षष्ठीलुकि एदोतोत इत्यत्र जबादेशनिर्देशाज्ज्ञापकात्समासेन्तर्वर्त्तिविभक्त्याश्रयणेन पदान्तत्वान्नलोपशि च कृते कथं दीर्घत्वं राजाश्व इति उच्यते यदयं श्वादेरित्याह तज्ज्ञापयत्याचार्य्यो नलोपशि कृतेप्यविभक्तिनिमित्तं कार्य्यं स्यादिति । अत एव पथिष्विति षत्वं भवति राजभ्यामित्यात्वं न भवति अद्भिरित्यत्र विभक्त्यधिकारात् एवं राजाभिः राजभ्यः इत्यादावपि ज्ञेयम् । अत एव तत्र वक्ष्यति लोपशि पुनर्न सन्धिरिति नियमादिति । छन्दसीति । तुर्विशेषे, छन्दो वेदः तत्र सत्यपि लोपशि सन्धिः स्यादित्यर्थः । हे सखेतीति । हे सखे इति स्थिते अयादेशे यलोपशि च कृते छान्दसत्वात् अइए इत्येत्वं जातम् । य्वोः किम् । अयादीनां सर्वलोपो मा भूदिति । न च षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेय इति य्वोरेव भविष्यतीति वाच्यम् ।षष्ठीनिर्दिष्टत्वाभावात् । अयादीनामिति षष्ठी तु य्वोरित्यस्मिन् सति व्याख्यानाद् गम्यते । असति पुनरयादयो लोपश् भवन्तीत्यर्थः स्यात्तथा सति निर्दिश्यमानस्यादेशा भव-

**छन्दसि तु भवति, हे सखेति । एदोतोऽतः ॥ ३१ ॥ पदान्ते स्थितादेकारादोकाराच्च परस्याकारस्य लोपो भवति । तेत्र । पटोत्र । सवर्णे दीर्घः सह ॥ ३२ ॥ सवर्णस्य सवर्णे परे सह दीर्घो भवति । श्रद्धात्र । दधीह ॥**

न्तीति सर्वलोपश्प्रसङ्गः । यथा जसीति सर्वस्य जस ईकारः । किञ्च यदि ख्वोरिति नोच्येत तदानन्तरत्वादाव एव लोपश् स्यात् । अथ सम्बन्ध आधारभावयोरिति ज्ञापकादयादीनां स्यात् एवमपि सर्वलोपश् स्यात् । ननु ज्ञापकादयादीनां स्यात् एवमन्त्यस्य स्यात् । नैवम् अबाधकान्यपि निपातनानि भवन्तीति अतो विस्पष्टार्थं वा ख्वोरित्युक्तम् । पदान्ते किं नयनम् । अयादिति किं दध्यत्र । एदोत् । अयवादेशापवादः । एच्च ओच्च एदोत् तस्मात् । ननु तपरकरणं किमर्थं न च प्लुतनिवृत्त्यर्थमिति वाच्यं तस्य प्लुत इति निषेधादेव व्यावृत्तिसिद्धेः । एवं तर्हि क्वचित् प्लुतस्य सन्धिर्भवतीति ज्ञापनार्थम् । तेन सुश्लोका इति सुश्लोकेत्यादि सिद्धम् । लोपो भवतीति । लोपशेवानुवर्त्तमान इह विशेषाभावाल्लोप इति व्याख्यातः । एदोतः किं तवात्र । अतः किं पटविह । तपरः किं वायवायाहि । पदान्ते किं लवनम् । सवर्णे । अत्र यद्यन्यस्य सवर्णेऽन्यस्य दीर्घः स्यात् तदा स्वर इत्यनुवृत्त्यैव सिद्धत्वात्सवर्णे ग्रहणं व्यर्थं स्यात् तस्मादुभयोर्मिथः सवर्णयोरेव दीर्घ इति मत्वाह । सवर्णस्य सवर्णे पर इति । ननु अग्ने एहि भानो ओदनमत्रापि सवर्णत्वाद्दीर्घः प्राप्नोति । नैवम् । सवर्णशब्दस्यावृत्त्या समानसंज्ञको वर्णः सवर्ण इत्यस्याप्यर्थस्य विज्ञानात् । श्रद्धात्रेति । श्रद्धा अत्रेति स्थिते ह्रस्वदीर्घेति सावर्ण्यादाकाराकारयोर्दीर्घ आकारः । ननु यः कोपि दीर्घः स्यान्नाकार एव । नैवम् । सवर्णत्वादिति परिभाषाया अत्राप्युपस्थानात् । यदाहुः । "परितो व्यापृतां भाषां परिभाषां प्रचक्षते" इति । ततश्चासवर्णो न एवमपि पूर्वपरयोः सवर्णौ द्वौ दीर्घौ भविष्यतः । न, दीर्घ इत्येकवचनस्य विवक्षितत्वात् विवक्षितत्वं चास्याचास्थ्नामिति निर्देशादवसीयते । सामान्यापेक्षञ्च ज्ञापकमिति, सहप्रकरणे सर्वत्र द्रष्टव्यम् । दधीहेति । तद्वद्दीर्घ ईकारः । ननु दधि इहेत्यत्र दीर्घात् प्रागेवेयं स्वर इति यत्वं कुतो नेत्याशङ्क्याह सामान्येति । नूनमित्यर्थनिश्चयेऽव्ययम् शासनाच्छास्त्रं लक्षणं

---

१ नन्वेवं ख्वोरिति व्यर्थमयादिषष्ठ्या विपरिणामेनान्तस्य लोपश्विधानेनातिप्रसक्तेरदर्शनात् । एवं तर्हि ख्वोर्ग्रहणमेव ज्ञापयति षष्ठीनिर्दिष्टस्यादेशस्तदंतस्येत्यनित्यमिति तेन क्व इति विधीयमान इदमोऽकारः सर्वस्य भवति एवं हि माधवोक्तं ख्वोर्ग्रहणस्य वैयर्थ्यमपि परिहृतं भवति ।

**सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् । परेण पूर्व्व-बाधो वा प्रायशो दृश्यतामिह ॥ अ इ ए ॥ ३४ ॥ अवर्ण इवर्णे परे सह ए भवति । तवेदम् ॥ हलादेरी-षादौ टेर्लोपो वक्तव्यः ॥ हलीषा । मनीषा । अद्योम् ।**

सामान्यमुत्सर्गः तस्य शास्त्रं सामान्यशास्त्रम् इयं स्वर इति । अत्र हि स्वर इति सामान्यम् । विशेषो विशेषवल्लक्षणमपवादलक्षणमिति यावत् । विशेषोऽस्मिन्न-स्तीति विशेष इति मत्वर्थीयाकारेण सहयोगः सवर्णे दीर्घः सहेति । अत्र हि सवर्णे दीर्घः सहेति विशेषः । तत्रोत्सर्गलक्षणात् विशेषो विशेषवान् योगः स एव बल-वान् भवेत् उत्सर्गापवादलक्षणयोरपवादलक्षणं बलवदेव भवतीत्यर्थः । विचारे वा नूनं सामान्यविशेषलक्षणबलाबलविचारे अनन्यथासिद्धत्वात्सामान्याद्विशेषो बलवानिति वार्थः । ननु चैवं रामोऽत्रेत्यत्रोत्वान्यथानुपपत्त्याऽस्तु लोपशोबाधः । इह तु दध्यत्रेत्यादौ सावकाशं यत्वं श्रद्धात्रेत्यादिबहुतरावकाशेन दीर्घत्वेन कथं बाध्यत इति कोऽप्याशङ्केत । तत्र व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणप्रवृत्तिरिति दधीही-त्यादिविषयलक्षणवैयर्थ्यप्रसङ्गात् परिहारः । जातिपक्षे तु नैवमिति, तमाश्रित्य परिहारान्तरमाह । परेणेति । कर्त्तरि तृतीयेयं वेति पक्षान्तरे प्रायश इति बाहुल्ये-ऽव्ययम् । दृश्यतामिति । दृशेर्ज्ञानार्थत्वात् कर्मणि प्रेरणे ताम् । ज्ञानार्थताया ञ्चास्य वर्णादर्शनं लोप इति लिङ्गम् । तथा च कुमारसम्भवेपि "योगात्स चान्तःपरकात्मसंज्ञं दृष्ट्वा" इति च ततश्चायमर्थः । अथवा बाहुल्येनेह शास्त्रे परेण लक्षणेन पूर्वस्य लक्षणस्य बाधः प्रवृत्तिरोधो ज्ञायतामिति । पौर्वापर्य्यञ्च सूत्रपाठाज्ज्ञेयम् । एवञ्च सति परेण दीर्घत्वलक्षणेन पूर्वस्य यत्वलक्षणस्य बाधाद्दधीहेत्यत्र दीर्घत्वमेव स्यादित्यर्थः । सवर्णे किं दद्ध्यत्र । सहेति किं सप्तम्याः पूर्वस्यैव माभूत् । अइए । तवेदमिति । अकारेकारयोरेकारः । अ इति किं मद्ध्वित्ति । इ इति किं श्रद्धात्र । हलादेरिति । हलीषेति । ईषा लाङ्गलदण्डः । हलाय ईषेति चतुर्थीसमासः कार्य्यः । षष्ठीसमासे हि हलशब्दः पुनरुक्तः स्यात् । हलईषेति स्थिते टिलोपः एत्वापवादो जातः । अत्रान्त्यस्यैव यथा टिसंज्ञा स्यात्तथा टिसंज्ञासूत्र एवोप-पादितम् । मनीषेति । अत्रास्भागस्य टित्वाल्लोपः विसर्गाद्यपवादः । अद्यो

उ ओं ॥ ३५ ॥ अवर्ण उवर्णे परे सह ओ भवति । गङ्गोदकम् । ऋ अर् ॥ ३६ ॥ अवर्ण ऋवर्णे परे सह अर् भवति । तवर्द्धिः ॥ क्वचिदार् ॥ ऋणार्णम् । शीतार्त्तः । ऌ अल् ॥ ३७ ॥ अवर्ण ऌवर्णे परे सह अल्भवति । तवल्कारः ॥ ऋलोः सावर्ण्यम् ॥ होतॄकारः ॥ एऐ ऐ ॥ ३८ ॥ अवर्ण एकारे ऐकारे च परे सह ऐकारो भवति । तवैषा । तवैश्वर्य्यम् ॥ ओ औ औ ॥ ३९ ॥ अवर्ण ओकारे औकारे च परे सह औकारो भवति । तवौदनम् ॥ तवौन्नत्यम् ॥ ओ-

मिति । औत्वापवादोत्रालोपः । आदिना प्रेजते रामेहि अद्येत्र पटितीत्यादयो विहितपररूपा अन्यशास्त्रे । उओ । गङ्गोदकमिति । षष्ठीतत्पुरुषे पूर्वपरयोरोकारः । उ किं देवात्र । ऋअर् । तवर्द्धिरिति । अकारऋकारयोरर् । हसेर्हसः इत्यत्राहिति विशेषणाद्रेफस्याद्वित्वेराद्यप इति धस्य द्वित्वे झबे जबा इति पूर्वधस्य दत्वे सहोच्चारणम् । क्वचिदिति । अयम्भावः ऋणार्णमित्यादीनां कियतां गवादिषु पाठसामर्थ्यात् पूर्वं कृतस्यावर्णागमस्य ऋकारस्य चानेनारि कृते ततः पूर्वाकारेण सवर्णदीर्घे क्वचिदार् भवतीति । अथवा ऋ अरित्यत्र सवर्णे दीर्घ इत्यतो दीर्घ इत्यनुवर्त्तते य्वोर्लोपशित्यतो वाशब्दश्च स च निपातत्वात् क्वचिदर्थः तेनावर्णस्य ऋवर्णेन सह भाव्यमान एवार् क्वचिद्दीर्घो भवतीति, ततश्चारेव भवतीत्यर्थः । ऋणार्णमिति ऋणेन ऋणम् । शीतार्त इति । शीतेन ऋतः उभयोरार् । क्वचिदिति किं परमर्तः । ऌ अल् । अत्रापि पूर्ववदाल्विधानात् प्राल्कारीयत्यादिसिद्धिः । तवल्कार इति । अल् । ऋलोरिति । एतयोः सह सवर्णत्वं वाच्यमित्यर्थः । होतॄकार इति । होतृ ऌकार इति स्थिते सवर्णत्वात् सवर्णे दीर्घ इति दीर्घे कार्य्ये ऌकारस्य दीर्घस्याभावादॄकार एव दीर्घो जातः । सावर्ण्येपि पृथग्योगकरणादृलोर्न साङ्कर्य्यम् । एवमृदितां ऌदिताञ्च धातूनां भेदेनानुबन्धोपदेशसामर्थ्यान्न कार्य्यसङ्करः । एऐऐ । तवैषेति । एकारस्योदाहरणम् । तवैश्वर्य्यमिति । ऐकारस्य उभयत्राप्यैत्वम् ।

ष्ठोत्त्वोर्वा ❀ ॥ बिम्बोष्ठः । बिम्बौष्ठः । स्थूलोतुः । स्थूलौतुः । इति स्वरसन्धिः ॥ ३ ॥

अथ प्रकृतिभाव उच्यते ॥ नामी ❀ ४०॥ अदसोमीशब्दः सन्धिं न प्राप्नोति । अमी आदित्याः ॥ य्वे द्वित्वे ❀ ४१ ॥ ईच ऊच एच य्वे ईकारान्त ऊकारान्त एकारान्तश्च

ओ औ औ । तवौदनं तवौत्सुक्यमिति क्रमेण ओदौतोरौकारः । ओष्ठोत्त्वोरिति । वा ओ इति छेदः । एतयोः परयोः सह वा औत्वापवाद ओवाच्य इत्यर्थः । बिम्बोष्ठ इति । बिम्बमिवोष्ठो यस्येति बहुव्रीहिः । न च फलं प्राण्यङ्गं सम्भवतीति सामर्थ्यात्सादृश्यप्रतीतिः । स्थूलोतुरिति । स्थूलश्चासावोतुश्चेति कर्मधारयः उभयत्राप्योकारः । पक्षान्तरे त्वौत्वमेव । समासोदाहरणप्रदर्शनन्तु, ओष्ठोत्त्वोरिति निर्देशात्समास एवैतद्भवतीति ज्ञापनार्थमिति दर्शयितुम्, ततश्च समासे तवौष्ठ इत्यौत्वमेव । इति स्वरसन्धिरिति । स्वराणां सन्धिः समाप्त इत्यर्थः ॥ श्रीजानादेनिवत्सराजतनयः श्रीकाह्ननामा द्विजो यं श्रीनायकदेविकापि सुधियं प्रासौत्सुतं माधवम् ॥ तस्य व्याकरणार्णवैकतरणेः सारस्वतीयोत्तमा व्याख्याऽगात् स्वरसन्धिसातिममला सिद्धान्तरत्नावली ॥

अथ प्रकृतिभाव इति । अथेत्यव्ययमानन्तर्य्ये । तदिह स्वरसन्धेरेव प्रकृतिरीह प्रस्तुतत्वात् सन्धिलक्षणाया विकृतेरन्या न मायादिका । प्रकृत्याभवनं प्रकृतिभावः स उच्यते इत्यर्थः । नामी । अत्र एऐ इत्यत ए इति सप्तम्यन्तमनुवर्त्तते तेन एत्वे कृते पश्चाज्जातोमीशब्द इत्यर्थः स्यात् तथाविधश्चादस एवास्ति नान्य इत्यभिप्रायेणाह । अदसोमीशब्द इति । अत्र प्राप्तत्वात्प्रस्तुतत्वाच्च सन्धिरेव निषिध्यत इति मत्वाह । सन्धिं न प्राप्नोति । अमी आदित्याः इति । अदसो जसि अत्व–मत्व–जसीत्वै–त्वे–त्वेषु कृतेषु इयं स्वर इति प्राप्तयत्वनिषेधः । ननु तेनामी यान्तीत्यादावपि दीर्घत्वं न स्यात् । मैवम् । मण्डूकप्लुतन्यायेनेयं स्वर इत्यतः स्वर इत्यनुवृत्तेः स्वरे पूर्वस्यैवानन्तरस्यैव निषेधात् । अदसः किम् ? अमोस्यास्तीत्यमी अत्र अम्यत्र । अमी किम् । अमुयोः अयादेशनिषेधो माभूत् । य्वे । अत्र सर्वेषां द्वित्वेन सम्बन्धार्थं । य्वे इति समस्तपदमिति मत्वा विगृह्णाति । ईच ऊच एच य्वे इति । अत्रान्यविशेष्याविवक्षया आन

**शब्दो द्वित्वे वर्त्तमानः सन्धिं न प्राप्नोति ॥ मणीवादिवर्ज्जम् ॥ अग्नी अत्र । पटू अत्र । माले आनय । वर्ज्जनादिति किम् । मणीव । रोदसीव । दम्पतीव ॥**

न्तर्य्येण सम्बन्धाच्च द्वित्वे वर्त्तमानमीकारादीति प्रथमः पक्षः । गङ्गे कुले इत्यादौ योयमुभयोः स्थाने विहितो लभतेऽसावन्यतरव्यपदेशमित्येकारोपि द्वित्वे वर्त्तते । अथवा ईकारादीनां प्रत्ययत्वात्प्रत्ययग्रहणे तदन्तग्रहणादीकाराद्यन्तं द्वित्वे वर्तमानमिति द्वितीयः । तत्राद्यपक्षे एकारमात्रस्याद्वित्ववृत्तेः पचेते अत्रेत्यादावव्याप्तेः द्वितीयपक्षमेवाश्रयति ईकारान्त इत्यादि । अत्रापि कुमार्य्योरगारं कुमार्य्यगारमित्यत्र समासप्रत्यययोरिति विभक्तेर्लुकि सत्यपि द्वित्वानपायात्प्राप्तः प्रकृतिभावस्तत्पुरुषस्योत्तरपदार्थप्राधान्यात् पूर्वपदस्य जहत्स्वार्थस्याद्वित्ववृत्तेर्न भवति । अशुक्ले शुक्ले सम्पद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्रापि च्व्यन्तस्याव्ययत्वेनासङ्ख्यत्वादद्वित्ववृत्तेर्न । मणीवादिवर्ज्जमिति पौनःपुन्ये णम् पदं द्विश्चेत्यत्रानुक्तसमुच्चयार्थाच्चकाराद् द्वितीयान्तोपपदाद्वर्ज्जयतेस्त्वरायां णम्, प्रत्ययान्तमव्ययमिदम् । तदयमर्थः मणीवादीन् वर्ज्जयित्वा ईकाराद्यन्तः सन्धिं न प्राप्नोति । एवमयं निषेधस्त्वरते यन्मणीवादीनपि नाद्रियते इति त्वराप्यस्तीति । अथवा वर्ज्जनं वर्ज्जः भावे घञ् मणीवादीनां वर्ज्जो यत्र निषेधे तन्मणीवादिवर्ज्जनेत्यव्ययविशेषणम् । तेन मणीवादीनां न निषेध इत्यर्थः । अयमर्थो मणीवादीनां छान्दसत्वाल्लभ्यते । मणीवेत्यत्र वाशब्दस्योपमार्थत्वं स्वीकृत्यापीष्टसिद्धिः स्यान्मणीति प्रत्युदाहरणमसङ्गतम् । तथोक्तम्पदमञ्जर्य्याम् । तत्र "मणीवोष्ट्रस्य लम्बेते" इत्यत्र वाशब्दस्योपमार्थस्य प्रयोगः रोदसीवेत्यादौ छान्दसत्वान्निर्वाह इति । अथवा प्वोर्लोपश्चेत्यतो वाशब्दोनुवर्त्तते स च निपातानामनेकार्थत्वाद्व्यवस्थितविकल्पार्थः तेन कुमार्य्योरगारं शुक्ल्यास्तां वस्त्रे मणीवेत्यादौ सन्धिनिषेधो न । अग्नी अत्रेत्यादि । अत्र प्रथमाद्विवचनान्तेषु क्रमेण यत्ववत्वायादेशाना निषेधः । वर्ज्जनादितीति । इतिरत्र प्रकृतपरामर्शे । यथा—"इत्युक्तवन्तं परिरभ्य दोर्भ्याम्" इति । प्रकृतश्च सन्धिनिषेधस्तत्र वर्ज्जनादर्थान्मणीवादीनाम् । किमत्र प्रश्ने । ननु मणीवादीनामुत्तरपदेन कृतसन्धिप्रयोगे वाशब्देन निर्वाहादिह तद्वर्ज्जनं किमर्थमिति प्रश्नः । उत्तरन्तु केवलोदाहरणप्रदर्शनमेव । मणीवेत्या-

**औ निपातः ॥ ४२ ॥ आकार ओकारौ निपात एकस्वरश्च**

द्वित्रिष्वपि इवे परे सवर्णदीर्घः । रोदसीवेति । द्यावापृथिव्याविवेत्यर्थः । दम्पतीवेति । जाया च पतिश्चेति द्वन्द्वे सहादेः सादिरिति जायायाः पत्यौ दंभावः । औ । किमिदमौ इत्यौकारस्यैव ग्रहणमाहोस्विददौतोर्वा, आदौतोर्वा, अदोतोर्वा, आदोतोर्वा, तत्राद्ये पक्षे औमात्रस्य ग्रहणं निपातस्य वा, तत्रावादेशस्य निर्विषयत्वप्रसङ्गाद्दिवादावडितिनिर्देशाच्च नाद्यः । द्वितीयेप्यौकारान्तस्य ग्रहणम्, केवलस्य वा । तत्र हेतौ राज्ञौ एतयोः स्वरादित्वेनानिपातत्वात् हाहौ इहौ अनयोश्छान्दसत्वाद् दृष्टानुविधित्वाच्च छन्दसः, अन्येषां चौकारान्तानामभावान्नाद्यः । नापि द्वितीयः एकस्वरत्वेन सिद्धत्वात् ओऔ औ इत्यतोनुवर्तनीयत्वेन पृथगौग्रहणाच्च । नापि द्वितीयः । तत्र हि अकारमात्रग्रहणे अइए इत्यादीनां निर्विषयत्वप्रसङ्गः । अकारान्तनिपातग्रहणन्तु चादिभिश्चेति ज्ञापकान्न । एकाक्ष्यकारनिपातग्रहणमप्येकस्वरत्वेन सिद्धत्वात् अइए इत्यतोनुवर्तनीयत्वेन पृथग्ग्रहणाच्च न भवति । औकारोत्राद्यपक्षवत्परिहर्तव्यः । न च तृतीयः । तत्राकारमात्रस्य टौसोरिति निर्देशान्निषेधाभावात् । आकारान्तनिपातस्यापि वेङ्योरिति निर्देशादनिषेधात् । एकाक्ष्याकारनिपातस्य त्वेकस्वरत्वेन सिद्धत्वान्निषेधानारम्भापातात् । औकारोत्रापि प्राग्वत्परिह्रियते । नापि तुर्यः । अकारस्य द्वितीयपक्षवत्परिहार्य्यत्वात् । ओकारमात्रग्रहणे अवादेशस्य वैयर्थ्यापातात् । एकाक्ष्योकारनिपातग्रहणस्य त्वेकस्वरत्वेनैव सिद्धत्वात् । ओऔ इत्यतोनुवर्तनीयत्वेन पृथगोग्रहणाच्च । अस्य पुनरोकारान्तनिपातग्रहणादुपपन्नत्वेप्यकारानुपपत्त्यानुपपन्नत्वम् । ततः पारिशेष्यात्पञ्चम एवोत्तमः पक्ष इति मत्वा वृत्तौ वक्ष्यति । आकार ओकारौ निपात इति । नन्वत्राप्याकारौकारग्रहणमेकस्वरत्वेनैव सिद्धमिति तन्न पृथक्कर्तव्यम् । सत्यं, तत्राकारग्रहणम् "ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" इति ङिदङिद्भेदेनाकारस्य द्वैविध्ये आकारस्यैवाङित्त एवायं निषेधो यथा स्यादिति नियमार्थम् । ओकारग्रहणमप्योकारान्तार्थमित्येतदुभयमप्युदाहरणे ग्रन्थकृदेव स्फुटयिष्यति । निपात इति किम् । स्वरहससमुदायस्य निपातस्य ग्रहणम्, एकहसस्य वा, एकस्वरस्य वा, नाद्यः । अञ्चास्थ्नां वेङ्योरिति निर्देशात् । नापि द्वितीयः । अभावात् । अतोऽन्त्य एव पक्षः प्रमाणमिति मत्वाह एकस्वरश्चेति । चशब्द आकारादीनां

भवति ॥ इति प्रकृतिभावः ॥ अथ व्यञ्जनकार्य्यमुच्यते ॥ चपा अबे जबाः ॥ ४५ ॥ पदान्ते वर्तमानाश्चपा जबा भवन्त्यबे परे । षडत्र । वाग्यथा ॥ ञमे ञमा वा ॥ ४६ ॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवन्ति । वाङ्मात्रम् ॥ षण्मम । षड्मम ॥ चपाच्छः शः ॥ ४७ ॥ चपादुत्तरस्य शकारस्य छो वा भवत्यबे परे । वाक्छूरः वाक्शूरः । ह्वो झभाः ॥ ४८ ॥ चपादुत्तरस्य हकारस्य झ-

वम् । तस्य व्याकरणार्णवैकतरणेः सारस्वतीयोत्तमव्याख्यायामवसानमैत्प्रकृतिभूः सिद्धान्तरत्नावली ॥

अथ व्यञ्जनकार्यमिति । अथेति स्वरकार्य्यानन्तरं व्यञ्जनानां सन्धिलक्षणं कार्य्यमुच्यत इत्यर्थः । चपा अबे इति । व्योर्लोपशित्यतः पदान्त इत्यनुवर्तत इति मत्वाह । पदान्ते वर्त्तमाना इति । षडत्रेति । षट् अत्रेति स्थिते अनेनात्र जत्वे प्राप्ते वर्ग्यो वर्ग्येणेति टवर्ग्यस्य टवर्ग्य एव डकारः सवर्णत्वाज्जातः । यथासङ्ख्यमिति वा । चपद्वितीयस्य जबद्वितीयो डः । वाग्यथेति । तद्वत्ककारस्य गकारः । चपाः किं पुमानत्र । अबे किम् । न च खसेतिव्याप्तिः तत्र चपानां विधास्यमानत्वात् । नाप्यवसाने वावसान इति विधानान्तरसद्भावात् । एवन्तर्हि उत्तरार्थं चपाच्छःश इत्यबे यथा स्यात् अन्यत्र माभूत् वाक् श्चोततीति । ञमे । वाङ्मात्रमिति । अत्रानेन कस्य मकारे सवर्णत्वाद्यथासङ्ख्यत्वाद्वा ङो जातः । वाग्मात्रमिति । पक्षे चपा अब इति गः । मात्रशब्दोऽयमवधारणार्थः । प्रत्यये हि व्यवस्थितविकल्पत्वान्नित्यमेव स्यात् । तथोक्तं काशिकायां वृत्तौ । यरोनुनासिके प्रत्यये नित्यवचनं कर्त्तव्यं वाङ्मयं कियन्मात्रं, व्यवस्थितविभाषाविज्ञानात्सिद्धमिति । षण्ममेति । प्राग्वण्णः । षड्ममेति । पक्षे डः । ञमे किं षड्यान्ति । चपात् । इह प्रागादेशनिर्देशोऽसन्देहार्थः । वाक्छूर इति । छत्वे रूपम् । वाक्शूरः इति । छत्वाभावे । वाचि शूर इत्यर्थः । पदान्त इत्येव, पुरा क्रूरस्य विसृपो विरप्शम् । ह्वो । नन्वेकस्य स्थानिनः सामर्थ्यात् पर्य्यायेण पञ्चानां प्राप्तौ सवर्णपरिभाषया सवर्णोपि भवन्त्या-

भा वा भवन्ति । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । तद्धविः । तद्हविः ॥ वाग्घरिः । वाग्हरिः ॥ स्तो श्चुभिश्चुः ❀ ४९ ॥ सकारस्य तवर्गस्य शकारेण चवर्गेण च योगे शकारचवर्गौ यथासङ्ख्येन भवतः । कश्चरति । कश्शूरः । तच्चित्रम् । तच्छास्त्रम् । न शात् ❀ ५० ॥ शका-

ग्रन्तराभावात्पञ्चसु कुत्र को भवतीत्याशङ्कयाह । यद्वर्गग इति । यं वर्गं गच्छतीति यद्वर्ग्गगः । नाम्नि चेति गमेर्डः । चपः चटतकपात्मकः निमित्तभूतः । तं वर्गं गच्छतीति तद्वर्ग्गगः चतुर्थो झभो हकारस्यादेशो भवति । अयं भावः । सर्वैर्झभैर्हकारस्य सावर्ण्यसाम्यात्प्रयोगानियमान्निमित्तभूतचपानां सावर्ण्यक्रमोत्राश्रीयत इति, वर्ग्यो वर्ग्येणेति वा यथासङ्ख्यमिति वा । वर्त्तमानवर्ग्गादिमस्य स्ववर्ग्ये एव चतुर्थो झभो हकारस्य स्थाने भवतीति । तद्धविरिति । तद् हविरिति स्थिते अनेन तवर्ग्यादिमाच्चपात्परस्य हस्य तवर्ग्गज एव चतुर्थे चपसवर्णे झभे धकारे जाते । चपतृतीयाद्वा तकारात्परस्य हस्य झभतृतीये धे जाते । चपा अब इति तकारस्य दकारे श्लिष्टोच्चारणे चैवं स्यादित्यर्थः । तद्हविरिति । पक्षे द एव । वाग्घरिरिति । तद्वत्कवर्ग्गचतुर्थो झभचतुर्थो वा हस्य घः कस्य च गः । वाग्हरिरिति । पक्षे ग एव । वाग्विषयो हरिरित्यर्थः । स्तोः । स् च तुश्च स्तुस्तस्य स्तोरिति । द्वन्द्वैकत्वम्पुंस्त्वन्तु च्छान्दसम् । तथा श्चुरत्रापि । अत्र सकारतवर्गकार्यिद्वयस्य शकारचवर्गनिमित्तद्वयेन साम्यात्प्रवृत्तं यथासङ्ख्यन्नशादिति ज्ञापकान्न । सति हि तस्मिन् शकारात् स्तोश्चुत्वाप्राप्ते निषेधोनारम्भणीयः स्यात् । कारणाभावाच्चादेशादेशिनोः स्तोश्चुरनयोः स्यादेवेति मत्वाह । शकारचवर्गौ यथासङ्ख्येनेति । तदयमर्थः । सकारस्य शकारेण चवर्गेण च योगे शकारः, तवर्गस्यापि शकारेण चवर्गेण च योगे चवर्ग इति । तथोदाहरति कश्चरतीति । अत्र योगे यथासङ्ख्याभावाच्चवर्ग्गयोगेपि सस्य शः । कश्शूर इति । शकारयोगे शः । तच्चित्रमिति । अत्रादेशे यथासङ्ख्येन, तवर्ग्गादेस्तस्य चवर्ग्गाद्यश्चः । तच्छास्त्रमिति । शयोगे तद्वच्चादेशे कृते चपादिति पाक्षिकश्छः । अत्र लाघवार्थं श्चुष्विति वाच्ये श्चुभिरिति तृतीयानिर्देशः पूर्वैरपि योगे यथा स्यात् यञः याञ्चा तथोक्तम् ।

रादुत्तरस्य तवर्गस्य चुत्वं न भवति । प्रश्नः । विश्नः । ष्टुभिः ष्टुः ॥ ५१ ॥ सकारस्य तवर्गस्य षकारटवर्गयोगे ष्टुर्भवति । कष्षष्ठः । कंष्टीकते । तट्टीकते । तोर्लि लः ॥ ५२ ॥ तवर्गस्य लकारे परे लकारो भवति । भवाँल्लिखति । अन्तस्था द्विप्रभेदाः । रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । अत्र सानुनासिक एव नकारस्य लकारो भवति । न षि ॥ ५३ ॥ षकारे परे तवर्गस्य टुत्वं न भवति । भवान् षष्ठः ॥ टोरन्त्यात् ॥ ५४ ॥ पदान्ते

"अकृत्वा सप्तमीमेतां तृतीयामकरोन्मुनिः । श्चुनेति तस्मात्पूर्वेण सन्निपातः परेण वा" इति । श्चुनेति वक्तव्ये श्चुभिरिति बहुवचनं शकारयोगे क्वचित् तन् ज्ञत्वा नास्त्यादौ चुत्वं न भवतीति सूचनार्थम् । नशात् । प्रश्नः, विश्न इति । प्रच्छज्ञीप्सायां विच्छ गतौ आभ्यां नङ्गी इति नङ् प्रच्छः श्नः इति शोन्तादेशः तत्रैव द्विच्छकारनिर्देशे छः श्न इति योगविभागाद्विश्न इत्यत्रापि । ष्टुभिरिति बहुवचनं षकारटवर्गयोगं विनापि क्वचिदुत्तरपदे अग्निष्टु इत्यत्र विसर्गस्य सकारे कृते टकारः इत्येतदर्थम् । अत्रापि निमित्तनिमित्तिनोर्यथासङ्ख्याभावे नषीति ज्ञापकं द्रष्टव्यम् । आदेशादेशिनोस्तु स्यादेव, तेनायमर्थः सस्य षकारटवर्गाभ्यां योगे षः तवर्गस्यापि षकारटवर्गाभ्यां योगे टः । तट्टीकत इति । तस्य टवर्गयोगे टः । तोः । अस्याप्यत्र पाठो नषीत्यत्र तोरनुवृत्त्यै । भवाँल्लिखतीति । भवान् लिखतीति स्थिते अनेनात्र लादेशे प्राप्ते विशेषमाह । अन्तस्था इति । यरलवा इत्यर्थः । अनुगतो नासिकामनुनासिको वर्णधर्मः सह तेन वर्तन्त इति सानुनासिकाः । निर्गतोनुनासिको येभ्यस्ते निरनुनासिकाः । एवं द्विधाभिन्नेषु तत्र तेषु यवलेषु सानुनासिकनकारस्थानेन विधीयमानो लकार आदेशस्सवर्णत्वात् सानुनासिक एव भवतीत्यर्थः । नषि । अत्रानुवर्त्तमानोपि षकारस्तोरप्राप्तत्वान्न सम्बध्यत इति मत्वाह । टुत्वं नेति । षीति च सप्तमीनिर्देशात् पूर्वषकारयोगे टुत्वं स्यादेव रोष्टा । भवान् षष्ठ इति । उकारानुबन्धभवतुशब्दस्य सौनुम्यत्वसोरिति दीर्घे रूपम् । ऋकारानुबन्धस्य हि दीर्घाभावः । तत्रानेन निषेधात् ष्टुभिरिति नस्य णो न । तोः किं कष्षष्ठः ।

१ एतदसत् तस्य लाघवार्थत्वाच्छ्मशानमित्यत्र चुत्वछत्वयोः प्रवृत्तेरिष्टत्वात् ।

**वर्त्तमानाट्टवर्गात्परस्य स्तोः ष्टुर्न भवति । षण्नरः । षड्नरः । षट् सीदन्ति । नः सक् छते ॐ ५५ ॥ नान्तस्य पदस्य छते परे सगागमो भवति ॥ टिदकितावाद्यन्तयोर्वक्तव्यौ ॐ ॥ राजंश्चित्रम् । भवांस्तनोति ॥ शे चक् वा ॐ ५६ ॥**

टो । अन्ते भवोन्त्यः स च व्याकरणस्य पदसंस्कारकत्वात्पदस्यैव । यद्येवम्, ष्टौ-र्लोपशिस्यतः पदान्त इत्यनुवृत्या सिद्धेः किमन्त्यादित्यनेन । सत्यं, क्वचिदन्त्यत्व-मात्रग्रहणार्थं षट्सु । अन्यथात्र पदान्तत्वाभावान्न स्यात् । तदिदमुच्यते बालाऽ-वबोधाय क्वचित्पदान्तताश्रयणीयेति । ननु पूर्वाचार्यप्रणीता पदसंज्ञा इहाश्रयिष्यते सा च षट्स्वित्यादावप्यस्तीति तत एव निषेधसिद्धेः किं पुनरन्त्यादित्यनेन । एवं तर्हि सुखप्रतिपत्त्यर्थं षण्णामित्यत्राप्रतिषेधार्थं चान्त्यादित्युक्तम् । षण्णवतिः षण्णगर्य्यं इत्यत्र तु सर्वथा सहादित्यादेव निर्वाहः । षण्नरः षड्नर इति । ष्टुभिरिति प्राप्तष्टुत्वस्य प्रतिषेधे ञमे ञमावेति पक्षे णः तदभावे चपा अब इति डः । षट्सीद-न्तीति । अत्र सस्य षत्वनिषेधः । टोः किं यजुष्टा । अन्त्यादिति किं षण्णाम् । ङ्ण इति पूर्वडस्य णः परस्य ष्टुत्वम् । नः । अत्र न इत्यस्य विशेषणत्वादन्त्यादित्यपि षष्ठ्यन्तं भवति अन्त्यश्च नकारः पदस्यैवोचितः यत्र च पदस्यान्त्यो नकारस्तत्रार्था-न्नान्तपदं भवतीत्यभिप्रायवानाह । नान्तस्य पदस्येति । अनेन पदस्यागमिता दर्शिता । तत्राप्यनियतार्थायाः षष्ठ्या अनियमेन प्राप्तावाह । टिदकिताविति । ट इद्यस्यासौ टित् क इद्यस्यासौ कित् टिच्च किच्च टिकितौ आदिश्चान्तश्चाद्यन्तौ तयोः प्रदेशयोः क्रमेण वक्तव्यौ । आद्यन्ताभ्यामवयवाभ्यां सापेक्षितयाऽऽक्षिप्त-स्यावयविन इति शेषः । राजंश्चित्रमिति । राजन् चित्रमिति स्थिते सगागमे कित्त्वान्नान्तपदावयवे नकारात्परे कृते नस्यापदान्तत्वान्नश्चापदान्ते इत्यनुस्वारे स्तोः श्चुभिश्चुरिति सकारस्य शकारे श्लिष्टोच्चारणे रूपम् । भवांस्तनोतीति । आगमा अगुणीभूतास्तद्ग्रहणेन गृह्यन्ते इति सान्ते पदे नस्यापदान्तत्वादनुस्वारः, अत एव सकः पूर्वान्तत्वकरणम् । छते किं सन् करोति । अथेह कस्मान्न सन् त्सरुरिति । उच्यते अत्र मण्डूकप्लुत्या चपा अब इत्यतोऽबग्रहणमनुवर्त्तमानं छतेन सम्ब-ध्यते, तेनाबपरो यश्छतस्तस्मिन् परे सक् स्यात् ततश्चात्र न । अथवा सिंहा-वलोकितन्यायेन शेचक्वेति वाग्रहणस्यात्रापि सम्बन्धात्तस्य च व्यवस्थित-

नान्तस्य पदस्य शे परे वा चगागमो भवति । भवाञ्च्छूरः । भवाञ्च्शूरः । भवाञ्शूरः ॥ ङ्णनो ह्रस्वाद् द्विः स्वरे ॥ ५१ ॥ ङकारणकारनकाराद्ध्रस्वादुत्तराद्विर्भवति स्वरे परे पदान्ते । प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह ॥ छः ॥ ५६ ॥ ह्रस्वादुत्तरश्छकारो द्विर्भवति । खसे चपा झसानाम् ॥२४५॥ झसानां खसे परे चपा भवन्ति । तवच्छत्रम् ॥ दीर्घादपि वक्तव्यः ॥ म्लेच्छः । ह्रीच्छः ।

विभाषार्थत्वान्न । शे । अस्यापि पूर्वान्तत्वकरणं छत्वार्थम् । इह शकारे चुत्वस्य नियतत्वात्तागित्येव वाच्ये चक्करणं विधिकाल एवायं नान्तस्य णत्वनिर्वर्त्तको यथा स्यात्, तेन कुर्वञ्च्छेते इत्यत्र नकारस्यापदान्तत्वात्प्राप्तं णत्वं चुत्वेन बाध्यते । भवाञ्छूर इति । चकि नस्य चुत्वे छत्वे च कृते रूपम् । भवाञ्च्शूर इति । चोः कुत्वन्तु वाग्रहणान्न भवति निपाता ह्यनेकार्थाः । छत्वाभावे भवान् शूर इति । चगभावे । ङ्णनो । ङ् च ण् च न् च ङ्णनः । पदान्त इति । य्वोर्लोपशित्यतोनुवर्त्तते । प्रत्यङ्ङिदमिति ङस्य द्वित्वोदाहरणम् । प्रति अञ्चतीति । सुगण्णिहेति णस्य । सुष्ठु गणयतीति सुगण् गणसंख्याने क्विप् । राजन्निहेति नस्य । ननु कुर्वन्नास्ते इत्यत्र द्वित्वे कृते पूर्वस्य नस्य णत्वेन भाव्यम् । मैवं पदान्तस्थस्य नस्य द्वित्वेन्त्यवत्पूर्वस्यापि पदान्तत्वेनानन्त इति निषेधात् । परमदण्डिनावित्यत्र तु समासेन्तर्वर्तिविभक्त्याश्रयेण पदान्तत्वात् प्राप्तं नस्य द्वित्वं शेचक् वेत्यतो व्यवस्थितविकल्पार्थवाग्रहणानुवृत्तेर्नभवति । अत एव चानश्व इत्यादावपि न द्वित्वम् । मण्डूकप्लुत्या वा, इयं स्वर इत्यतः स्वर इत्यनुवर्तमानेपि पुनः स्वरे ग्रहणं स्वरे एव स्वरे साक्षाद्विधीयमाने स्वरे यथा स्यादित्येवमर्थं, तेनात्र स्वरस्य विधीयमानत्वान्न भवति । अनुदात्ततनामिति निर्देशाद्वा । अतएव पदान्तत्वेन नलोपो न भवति । ह्रस्वात् किं प्राङास्ते । स्वरे किं प्रत्यङ्नमति । पदान्ते किं दण्डिनौ । छः । खसे । तवच्छत्रमिति छस्यात्र द्वित्वे पूर्वचस्य वर्ग्यो वर्ग्येणेति चपादेशश्च । खसे किम् । अबे माभूत् अदन्ति, जबादेशोत्र पुनः स्यादिति चेन्न । तत्र पदान्ताधिकारात् । दीर्घादपीति । न केवलं ह्रस्वादेव किन्तु दीर्घादपि परस्य छस्य द्वित्वं स्यादिति वक्तव्यार्थः । म्लेच्छः।ह्रीच्छ इति । म्लेच्छदेशीयभाषणे ह्रीच्छलज्जायामाभ्यां घञि द्वित्वे च

**मोऽनुस्वारः** ॥ ६१ ॥ **मकारस्याऽनुस्वारो भवति हसे परे पदान्ते । तं हसति । पटुं वृथा** ॥ **नश्चापदान्ते झसे** ॥ ६२ ॥ **नकारस्य मकारस्य चापदान्ते वर्त्तमानस्याऽनुस्वारो भवति झसे परे । यशांसि । आक्रंस्यते** ॥ **यमा यपेऽस्य वा** ॥ ६३ ॥ **अनुस्वारस्य यमा वा भवन्ति यपे परे अस्य यपस्य सवर्णाः । तङ्करोति । तन्तनो-**

रूर्ववत् । मः । अत्र य्वोरित्यतः पदान्त इत्यनुवर्त्तते हसेर्हस इत्यतो हस इति च ते च व्यधिकरणे सप्तम्यौ पदान्ते वर्त्तमानस्य मकारस्यानुस्वारो भवति हसे पर इति । तेन चैतदुभयमेकमेव निमित्तमिति मत्वाह । हसे परे पदान्त इति । पदान्ते चेति चस्यात्र क्वाचित्कोपपाठः । तं हसति । पटुं वृथेति । ततोन्यत्रापि दृश्यत इति वृथायोगे पटुमिति द्वितीया । क्रियाध्याहाराद्वा कर्मणि एकमेव वाक्यम् । तत्र पटुं हसतेः कर्म तच्छब्दः पटुविशेषणं तं पटुं मिथ्या हसतीत्यर्थः । उभयत्रापि मस्यानेनानुस्वारः । पदान्ते किं गम्यते । हसे किं किमत्र । नश्चा । चो मानुकर्षणार्थ इति मत्वाह नकारस्य मकारस्य चेति । यशांसीति । जश्शसोः शिः नुमयम इति नुम् न्सम्महत इति दीर्घः नस्यात्रानुस्वारः । आक्रंस्यत इति । आङ्क्रमेः स्यादाविति स्यप् निविशादेरित्यात्मनेपदं मस्यानुस्वारः । अपदान्ते किं ब्रह्मन्पाहि । झसे किं तन्यते । यमाः । अत्र मोनुस्वार इत्यतोनुस्वार इति प्रथमान्तमप्यनुवर्त्तमानमादेशापेक्षयाऽर्थात्षष्ठ्यन्तं स्यादिति मत्वाह अनुस्वारस्येति । तत्र च भाव्यमाना यमाः सवर्णपरिभाषया अनुस्वारस्यैव सवर्णा भवन्तः सर्वेपि सर्वत्र प्राप्ताः तत्रास्येति प्रत्यक्षार्थाभिधायीदम्, शब्दोनन्तरं यपं परामृश्य सवर्णपरिभाषया एकत्वमापद्य यपस्य सवर्णान् यमान् विधत्त इति मनसि कृत्वाह । अस्य यपस्य सवर्णा इति । अस्य यपस्य सवर्णा यमा अनुस्वारस्य भवन्तीति योजना । तत्रापि शेचग् वेत्यतः पदान्तसंबद्धं वाग्रहणमत्रानुवर्तते नश्चेत्यतोऽपदान्तग्रहणञ्च तेन पदान्ते वा अपदान्ते तु नियन्तेत्यादौ नित्यमिति व्यवस्था । तङ्करोतीति । तं करो-

**ति । सँय्यन्ता ॥ इति व्यञ्जनसन्धिः ॥ ४ ॥ अथ विसर्गसन्धिर्निगद्यते ॥ विसर्जनीयस्य सः ॥ ६४ ॥ विसर्जनीयस्य सकारो भवति खसे परे । कस्तनोति ॥ कुप्वोः ≍क ≍पौ वा ॥ ६५ ॥ विसर्जनीयस्य कवर्गपवर्गसंबन्धिनि ख-**

तीति स्थिते यपस्य कस्य सवर्णे यमे अनुस्वारस्य प्राप्ते सति वर्ग्यो वर्ग्येणेति ङकार एव जातः । तन्तनोतीति । अत्र प्राग्वत् । सँय्यन्तेति । अत्रानुस्वारस्याऽनेन यपसवर्णे यमे कार्ये सवर्णान्तराभावात्सानुनासिको य एव भवतीत्यर्थः । सानुनासिकत्वं च यकारस्यान्तस्थत्वादन्तस्थाद्विप्रभेदा इति प्राक् प्रतिपादितम् । यपे किं यशांसि । ननु च कुर्वन्तीत्यत्रानेन कृतस्य नकारस्य णत्वं कस्मान्न भवति । उच्यते । असिद्धं बहिरङ्गमन्तरङ्ग इति रेफाद्याश्रयेन्तरङ्गे णत्वे कार्ये यपाश्रयस्य बहिरङ्गस्य यमादेशस्य नस्यासिद्धत्वेन स्थानिनो भावान्न भवति । प्रकृतिप्रत्ययाश्रितत्वेन वा णत्वस्यानन्तरंगत्वम् ॥ इति व्यञ्जनसन्धिः ॥ समाप्तोयं हससन्धिरित्यर्थः ॥ श्रीजानार्दनिवत्सराजतनयः श्रीकाह्ननामा द्विजो यं श्रीनायकदेविकापि सुधियं प्रासौत् सुतं माधवम् । तस्य व्याकरणार्णवैकतरणेः सारस्वतीयागमद् व्याख्या व्यञ्जनसन्धिसातिममलासिद्धान्तरत्नावली ॥

अथेति । अथ व्यञ्जनसन्धेरनन्तरं विसर्गस्य अः इत्यस्य सन्धिरुच्यत इत्यर्थः । विसर्जनीयस्य । आसन्धिसमाप्तीदं षष्ठ्यन्तमधिक्रियते । ननु च क पुनरिदं प्रवर्तते अत्र इति चेन्न । तत्रावर्णादादव इति लोपशा बाधितत्वात् इवर्णादेरपि नामिनो र इति रेफेण अवसानेपि पुनर्विसर्गादेशेनाविशेषात्, अतः पारिशेष्यात् खस एव निमित्तमिति मत्वाह । खसे पर इति । कस्तनोतीति । अनेनात्र सः । तस्य पुनर्विसर्गादेशस्त्वसिद्धपरिभाषया असिद्धत्वाद्विधिसामर्थ्याद्वा न । ननु च कः त्सरुः कः क्षम इत्यत्रापि सत्वं कस्मान्न । उच्यते । अत्र हि योगविभागस्तथाहि । विसर्जनीयस्य सित्येको योगः तस्योक्ते एवार्थोदाहरणे ततः अः इति द्वितीयो योगस्तत्र विसर्जनीयस्येत्यनुवर्तते यतश्चायमर्थः विसर्जनीयस्य क्वचित् अः विसर्ग एव भवति । नस≍क≍पा इति । इदञ्च यथायोगं ज्ञेयं योगविभागस्येष्टसिद्ध्यर्थत्वात् । कुप्वोः । अयं योगः सस्य बाधक इति तन्निमित्तेन खसेन सबन्धार्थे कुप्वोरिति षष्ठीति मत्वाह । कवर्गपवर्गसंबन्धि-

से परे ≍क≍पौ वा भवतः । कपावुच्चारणार्थौ । क≍करो-
ति । कः करोति । क≍पठति । कः पठति । वाचस्पत्यादयः
संज्ञाशब्दा निपातात्साधवः । वाचस्पतिः । रोऽरात्रिषु *
॥ २२५ ॥ अहन्शब्दस्य पदान्ते रो भवति रात्र्यादि-

नि खस इति । कपावुच्चारणार्थाविति । ≍क≍पावित्यत्र वर्तमानौ कपावुच्चारयितुमेवोपादीयेते । आदेशौ तु जिह्वामूलीयोपध्मानीयावेवेत्यर्थः । क≍करोतीति । विसर्जनीयस्यात्र जिह्वामूलीयः । कः करोतीति । जिह्वामूलीयाभावपक्षे विसर्ग एव । नन्वत्र सत्वं कस्मान्न भवति । उच्यते योगविभागात् । तथाहि । कुप्वोरित्येको योगः तत्रानन्तरत्वात् अ इत्यनुवर्तते तेन विसर्गस्य कुप्वोः संबन्धिनि खसे परे अः विसर्ग एव भवति न स इति । अत्र च प्रमाणं णादिः किदिति निर्देशः । ततः ≍क≍पौ वेति द्वितीयो योगः तत्र कुप्वोरित्यनुवर्तते ततो मूलोक्त एवार्थः । अत्र पक्षे वाग्रहणं विस्पष्टार्थं निपातत्वादुक्तार्थप्रतिपत्त्यर्थं वा । क≍पठतीति । उपध्मानीयोदाहरणम् । कः पठतीति । पक्षे पूर्वविसर्गः । कुप्वोः किं कस्तिष्ठति । खसे किं को गतः । वाचस्पत्यादय इति । वाचः सरस्वत्याः पतिः स्वामी वाचस्पतिरित्यलुक्समासः सुराचार्य्यस्य संज्ञेयम् । वाचस्पतिरादिर्येषां तेषां संज्ञाशब्दानां सकारस्य सहादिः स इति निपातनत्वात् स्रोर्विसर्ग इत्यस्याप्रवृत्तेः स्थानिनोऽभावात् । ≍क≍पादेशाभावे एतादृशा एव एते संज्ञासु साधव इत्यर्थः । संज्ञातोन्यत्र यथाप्राप्तं साधुर्य्यं वाचः पतिर्जगत इति आदिना बृहस्पतिनमस्कारादीनां ग्रहणं संज्ञाशब्दा इत्युपलक्षणम्, अन्येपि निपातात्साधवः इति । केचित् कस्कः अयस्कारः अधस्पदमित्यादयः । रोरा । अत्राह इत्यतोह इत्यनुवर्तते पदान्ते चेत्यतः पदान्ते इति चेति मत्वाह । अहन्शब्दस्य पदान्त इति । ननु यदि पदान्त इत्यनुवर्तते तर्हि अवसानेऽहः इत्यत्रापि प्राप्नोति । न च पुना रेफस्य विसर्गादेशो भविष्यतीति वाच्यम् । एवमहर्पतिरित्यादावपि विसर्गादेशे रेफविधानं व्यर्थं स्यात् । अह इति सत्वेनैव सिद्धत्वात् । नाप्येतत्कृतरेफविसर्गस्य विध्यन्तरबाध

**वर्जितेषु परतः ॥ अहर्पतिः । अरात्रिष्विति विशेषणात् अहोरात्रः । अहोरूपम् । अहोरथन्तरम् ॥ अतोत्युः * ॥ ६६ ॥ अकारात्परस्य विसर्जनीयस्य उकारो भवत्यति परतः । कोऽर्थः । हबे * ॥ ६७ ॥ अकारात्परस्य विसर्जनीयस्य उकारो भवति हबे परे । को गतः । देवो**

नार्थत्वमिति वाच्यम् । यं विधिं प्रत्युपदेशोनर्थकः स विधिर्बाध्यते यस्य तु विधे निमित्तमेव नासौ बाध्यते इति विसर्गादेशं प्रति उपदेशोनर्थक इति तमेव बाध सत्वादीनां पुनर्निमित्तमेवेति न बाधते । अथवा यद्येवानिष्टं स्यात्तर्हि विसर्गप्रक रणान्ते नाह्नोरात्रिष्वित्येव ब्रूयात्, तस्माद्रेफविधानसामर्थ्याच्छ्रवणमेवेति प्रसज्जे दिति चेदुच्यते । इहारात्रिष्विति पर्युदासो नञ् । यदुक्तं-"प्राधान्यन्तु विधेर्यः प्रतिषेधे प्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्" इति, ततश्च नञिः प्रयुक्तमन्यसदृशार्थे तथाह्यर्थगतिरिति न्यायेन रात्र्यादिसदृशे पदान्तरे परे रो भव तीति नोक्तदोषः । तत्रापि लाघवार्थमरात्राविति वाच्ये बहुवचननिर्देशो रूपरथ न्तरयोरपि ग्रहणायेति सर्वं सत्वाह । रात्र्यादिष्विति । रात्र्यादिवर्जितेषु पदान्तरे परत इत्यर्थः । ननु चैवमपि हे दीर्घाहो ग्रीष्मेत्यत्रापि स्यात् । मैवं गौणमुख्ययो र्मुख्ये कार्य्यसंप्रत्ययः इति न भविष्यति । अह्नो बहुव्रीहौ गुणीभूतत्वात् । सत्व मप्येवं न स्यादिति चेन्नैवम् । अयं हि न्यायः पदकार्य्येष्वेव न नामकार्य्ये सत्वञ्च नामकार्य्यमिति । एतच्चोक्तमोदिति सूत्रे कैयटेन । एवं गां वाहीकमानयेति पूर्वं क्रियाभिसंबन्धापेक्षया विभक्तावुत्पन्नायां वाक्यीयात्तु न्यायात्सामानाधिकर ण्याद्गौणार्थप्रादुर्भावो भवतीति पदकार्य्येष्वेवायं न्यायो न प्रातिपदिककार्य्येष्वि तीति । अहर्पतिरिति अह्नां पतिरिति समासे विभक्तिलुक् । सत्वविसर्गरेफाद्वि त्वानि । अरात्रिष्विति । अत्र सूत्रे अरात्रिष्विति पदेन रात्र्यादिवर्जनादहो रात्रोऽहोरूपमहोरथन्तरमित्यत्र रेफाभावे हब इत्युत्वे उ ओ इत्योत्वमित्य र्थः । अहोरात्र इत्यत्र च रात्रेष्टाडका इति डप्रत्यये टिलोपे च सत्येकदेश विकृतमनन्यवदिति शब्दान्तरं नाशङ्क्यम् । अतः आदव इति प्राप्तलोपशोप वादः । उभयत्र तपरकरणं दीर्घप्लुतनिवृत्त्यर्थम् । सुरा अत्र राम आगतः सुश्रोत अत्र दूराद्धूते इति प्लुतः तिष्ठतु पयः आग्निशर्मन् । तत्रैव प्लुत इति योग विभागात्प्लुतः । कोर्थ इति । विसर्गस्यानेनोत्वे उओ इत्योत्वे एदोत इत्यलोपः

**याति । मनोरथः ॥ आदवे लोपश्* ॥ ६८ ॥ अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे । देवा अत्र । वाता वान्ति ॥ स्वरे यत्वं वा * ६८ ॥ देवायत्र ॥ भोसः* ॥ ७० ॥ भोभगोअघो इत्येतस्मात्परस्य विसर्जनीयस्य**

वे । को गत इति त्रिपूर्वौत्वे । आद् । अत्राकारोक्षरसमाम्नाये अपठितत्वाद्दीर्घोच्चारणसामर्थ्यात्प्रयत्नाधिक्याद्वा न भेदग्राहक इति तस्य तपरत्वानुपपत्तेरकारस्य श्च्म्यन्तस्येदं ग्रहणमित्यभिप्रेत्याह । अवर्णादिति । आदिति किम् । नचेकारादिनिवृत्त्यर्थमिति वाच्यम् । नामिनो र इति रेफेण बाधितत्वात् । नापि व्यञ्जननिवृत्त्यर्थम् । असंभवात् व्यञ्जनेभ्यः परस्य विसर्गस्य । एवं तर्हि अतोत्युरित्यतोनुवृत्तस्य तपराकारस्य निवृत्तेः स्पष्टीकरणार्थमित्यभिप्रेत्याकारमुदाहरति देवा अत्रेत्यादि । अत इत्यनुवृत्तौ दीर्घस्याग्रहणादत्र न स्यात् । अत्रोभयत्राप्यनेन विसर्गलोपशि आद्ये लोपशीति न सवर्णे दीर्घः । ननु चेदमवग्रहणं पूर्वसूत्रतो ह्वग्रहणानुवृत्त्यर्थं, खसे वा लोपशोऽप्रसङ्गार्थमवसाने वोत्तरार्थं वा । नाद्यः । ब्रुव आह इति निर्देशात्तन्निवृत्तेः । नापि द्वितीयः । सत्वस्य निर्विषयत्वप्रसङ्गात् । न च तृतीयः । ज्ञापकात् । तथाहि यदयमाप इत्याबन्तात्सिलोपं शास्ति तज्ज्ञापयत्याचार्य्यो नावसाने विसर्गलोपश् प्रवर्तते इति । अन्यथा तत्रापि सेर्विसर्गलोपशोः कृतयोर्गङ्गेत्यादिसिद्धेः सिलोपविधानं व्यर्थं स्यात् । ननु यदा लोपश् स्यात् तदा गङ्गात्रेत्यादौ लोपशि पुनर्न सन्धिरिति सन्धिर्न स्यात् । लोपे तु सन्धिर्भवत्येवेति सन्ध्यर्थत्वाल्लोपस्याज्ञापकत्वमिति तृतीयः पक्षः प्रमाणमिति चेन्न । सन्धिप्रकरणादेवाऽवसानेऽप्रवृत्तेः । तुर्य्योपि न यतोऽसन्देहार्थं लाघवार्थञ्चोत्तरत्रैवाकरिष्यत् । एवं तर्हि द्वितीयपक्ष एव प्रमाणम् । ननु चोक्तमनवकाशत्वात्सत्वं बाधकं भविष्यतीति मैवम् । अत्र ह्वग्रहणे सति तत्र पारिशेष्यात् खस इति लभ्यते, अन्यथा बहुतरावकाशं तत्स्यादिति खसव्यावृत्त्यर्थमवग्रहणं संस्थितम् । स्वर इति । अवर्णादुत्तरस्य विसर्गस्य लोपशोपवादो यत्वं वा भवति स्वरे पर इति वक्तव्यमिति शेषः । देवायत्रेति । देवा अत्रेति स्थितेऽनेनात्र यत्वम् । पाक्षिकोदाहरणन्तु देवा अत्रेति प्रागदर्शितत्वात् पुनर्नोक्तम् । स्वरे किं देवा वसन्ति । भो । अत्र लाघवार्थमभोसोरवेलोपशित्येकयोगे कार्य्ये पृथग्योगकरणं स्वरे पाक्षिकयत्वनिरा-

लोपश् भवत्यबे परे । भो एहि । भगो नमस्ते । अघो याहि ॥ नामिनो रः ॥ ७१ ॥ नामिनः परस्य विसर्जनीयस्य रेफो भवत्यबे परे । अग्निरत्र । पटुर्यजते ॥ रेफप्रकृतिकस्य खपे वा॥ गीर्प्पतिः। गी ≍ पतिः । रः ७२॥ रेफसंबन्धिनो विसर्जनीयस्य रेफो भवत्यत्रे परे । प्रातरत्र । अन्तर्गतः ॥ रि लोपो दीर्घश्च ॥ ७३ ॥ रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुना रमते । शुक्ती रूप्या-

सार्थम् । तत्रापि भोस इति षष्ठ्यां लाघवासंशयानश्लीलार्थं भोरिति वाच्ये पञ्चम्यामपि भो इत्येकस्मात्सान्तादुत्तरस्य विसर्गस्यासम्भवात् । भोस् अस्य भोशब्देनाघोसः सकारेण चाद्यन्ताभ्यामिति गृहीतेन सौत्रप्रत्याहारेण भोभगोअघोरिति सूत्रोपात्तानां त्रयाणां ग्रहणात् शम्भोरिदमित्यादौ नेत्यभिप्रेत्याह । भोभगो अघो इत्येतस्मादिति । भो एहीत्यादि । अनेन त्रिष्वपि नामिनो र इत्यस्यापवादे विसर्गलोपशि कृते आद्ये लोपशि पुनरिति नावादेशः । नामि । अग्निरत्रेत्यादिद्वयोरप्यनेन रेफे कृतेन्त्ये राद्यप इति यस्य द्वित्वम् । अत्र नामिग्रहणं न तावदवर्णव्यावृत्त्यर्थम् । आदब इति लोपशो विहितत्वादेव तद्व्यावृत्तिसिद्धेः । नापि व्यञ्जननिवृत्त्यर्थमसंभवात् व्यञ्जनेभ्यः परस्य विसर्गस्य । एवं तर्हि साक्षात् श्रूयमाणान्नामिनः परस्य यथा स्यादतिदिश्यमानान्माभूदित्येतदर्थं तेन गा यच्छतीत्यत्र न भवति । अन्यथा आम् शसीति विहितौकारत्वस्य यदादेश इति स्थानिवत्त्वादत्रापि स्यात् । रेफेति । रेफः प्रकृतिरुत्पत्तिः कारणं यस्य तस्य विसर्गस्य नामिनः परस्य खसे परे वा रेफो भवतीति वक्तव्यमित्यर्थः । गीर्प्पतिरिति । अनेनात्र रेफे य्वोर्वीति दीर्घः । कुप्वोरित्येत्र नेह गीस्तत्र । गी ≍ पतिरिति रेफाभावे कुप्वोरिति ≍ पः । रः । अत्र नामिनो र इत्यतो र इति प्रथमान्तानुवृत्तौ पुना र इति निर्देशात् षष्ठीयं विज्ञायत इत्यत आह । रेफसम्बन्धिन इति रेफस्थाने आदेशसम्बन्धेन विहितस्येत्यर्थः । तत्रापि पूर्वेणैव सिद्धत्वादनाम्यर्थोयमारम्भ इति मत्वोदाहरति प्रातरत्रेत्यादि । उभयत्राप्यनेन रेफेन्त्ये राद्यप इति गस्य द्वित्वम् । रः किं पयोत्र । रि लोपः । अत्र पूर्वसूत्रादनुवर्तमानं र इति षष्ठ्यन्तं लोपेनाभिसम्बन्ध्याह । रेफस्य लोप इति । पूर्वस्य च दीर्घ इति । रीति सप्तमीनिर्देशा-

१ एदसत् वर्णमात्रविधौ यदादेशस्तद्वदित्यस्यानभ्युपगमात् अन्यथा रासु इत्यत्र किलादिति षत्वं स्यात् ।

त्मनाभाति ॥ सैषाद्धसे ॥ ७४ ॥ सशब्दादेषशब्दाच्च परस्य विसर्जनीयस्य लोपो भवति हसे परे ॥ स चरति । एष हस्ती । सैषादिति संहिता सैष दाशरथी राम इत्यादौ पादपूरणे सन्ध्यर्था ॥ यदुक्तं लौकिकायेह तद्वेदे बहुलं भवेत् । सेमां भूम्याददे सोषामित्यादीनामदुष्टता ॥ १ ॥

ल्लोपनिमित्ताद्रेफात् पूर्वस्येत्यर्थः । पुना रमत इति । पुनः रमत इति स्थिते र इति विसर्गस्य रेफेऽनेन रलोपदीर्घौ । शुक्ती रूप्येति । अत्र नामिन इति रेफेऽनेन तल्लोपदीर्घौ । शुक्तीरजताकारेण भातीत्यर्थः । सैषात् । अत्र स एषादिति च्छेदः । तत्र स इति पञ्चम्यर्थे प्रथमाया विसर्गस्यादब इति सत्यपि लोपशि निर्देशस्य सौत्रत्वाल्लोपशि पुनरित्यैत्वानिषेधः । एषादित्यत्रापि सत्वं स्मडभावश्च शब्दपरत्वान्निर्देशस्य भवति । अत एव च प्रथमैकवचनादन्यत्र तदन्ताच्च न । एतैस्तैः कृतम् । असः कृष्णः अनेषः शिवः । इषेस्तु घञि एषणमेषो वर्तते इत्यत्रानेतदस्तदा साहचर्य्यान्न स चरतीत्यादि उभयत्र विसर्गलोपः । सैषादितीति । इतिः प्रकारे तेन सैषादित्येवंप्रकारा संहिता सैष दाशरथी राम इत्यादौ पादपूरणे सन्ध्यर्था सन्धिरर्थो यस्याः सा तथाविधा स्यादित्यर्थः । अयम्भावः । सूत्रे सैषादित्यप्रसक्तसन्धिकरणस्य सैष दाशरथी राम इत्यादावसति सन्धावपादपूरणे सन्धेः श्लोकचतुर्थांशपूरणेऽनुचितस्याप्यौचितीति ज्ञापनार्थत्वात् सन्ध्यर्थत्वमित्यर्थः।इदानीं सूत्रस्य छान्दसत्वमभ्युपेत्य ज्ञापकस्य छन्दोविषयत्वमपि प्रतिपादयन्नाह । यदुक्तमिति । इह शास्त्रे लौकिकाय लाक्षणिकजनविदितप्रयोगव्युत्पत्तये यदुक्तं सैषादिति ज्ञापकं तद्वेदे बहुलं बहूनर्थान् लाति ददातीति बहुलमिति सामान्यापेक्षया सर्वविधिव्यभिचारपरं यथायोगं भवेदित्यर्थः । तेन यत् सिद्ध्येत्तदाह । सेमामिति । त्रीण्यपि छान्दसोदाहरणानि । तथाहि । सेमामविड्ढीति । दिविपद्भूम्याददे सोषामविदत्स्वरमिति तत्र आद्यन्तयोरादब इति मध्यमेपि नामिनो र इत्यत्र नामिन इति योगविभागे आदब इत्यतोऽत्रे लोपशिति चानुवर्तते क्वचिन्नामिनः परस्य विसर्गस्य विलोपश् स्यादित्यर्थे जातेऽनेन च विसर्गलोपशि कृते त्रिष्वपि लोपशि पुनरिति सन्धिनिषेधे प्राप्ते सैषादिति ज्ञापकस्य छन्दसि सर्वविधिव्यभिचारा-

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति २ ॥**
**वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।**
**धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥३॥**

र्थत्वात् जाते एत्वयत्वौत्वलक्षणे सन्धौ एषां प्रत्यक्षनिर्दिष्टानामित्यादीनामेवंप्रकाराणां लौकिकप्रयोगानुचितविहितसन्धीनामन्येषामपि छान्दसप्रयोगाणामदुष्टता न दुष्टत्वं साधुता ज्ञेयेत्यर्थः । छन्दसिं तु भवतीत्येतस्यैव प्रपञ्चकमिति । नानेन पौनरुक्त्यमाशङ्क्यम् । अथ व्याख्यानभेदेन बहुलप्रकारानाह । क्वचित्प्रवृत्तिरिति । केचिदाचार्य्या बाहुलकं बहुलमेव बाहुलकं स्वार्थेणितिके णित्त्वाद्वृद्धिः । तच्चतुर्विधम् । चतस्रो विधाः प्रकारा यस्य तत्तथाविधं वदन्ति आचक्षते । किं कृत्वा विधेर्विधीयते कार्य्यमनेनेति विधिः सूत्रं तस्य विधानं कार्य्यं बहुभिः प्रकारैः समीक्ष्य दृष्ट्वा तथाहि क्वचित्प्रवृत्तिः निषिद्धस्यापीति शेषः यथा सेमामित्येत्वस्य क्वचित्प्रवर्तमानस्याप्यप्रवृत्तिर्यथा ते अग्नय इत्येदोतोत इत्यस्य । क्वचिच्च विभाषा विकल्पेन प्रवृत्तिर्यथा देवेभिर्युक्तमदितिः सजूर्देवैर्वयोनाधैरित्येत्वस्य । क्वचिच्च प्रवर्तमानादन्यदेव स्यात् यथा ऊधरेवेति रेफः । एवमेतच्चतुर्विधं वदन्ति । एतच्च लोकेपि ज्ञेयम् । सैषादिति ज्ञापकस्य साधारण्यावगमात् अत एव एतान् गाः पश्येत्यत्र सोनः पुंस इति नत्वाप्रवृत्तिः । उत्तरपूर्वस्यै उत्तरपूर्वायै इत्यादौ विकल्पन सर्वादिकार्य्यम् । तथा क्रोष्ट्रीत्यादौ अन्यदेव ऋकारान्तत्वमित्यादि ज्ञेयम् । वर्णागम इति । कैश्चिन्निरुक्तं निरुच्यतेर्थोस्मिन्निति निरुक्तं बाहुलकं पञ्चविधमुच्यते । तथाहि । वर्णागमो मित्रवद्वर्णस्यागमनम् । वर्णविपर्ययो वर्णस्य स्थानव्यत्यासः । विकारो विकृती रूपान्तरापत्तिः । नाशो लोपोऽभावः । विकारश्च नाशश्च विकारनाशौ वर्णस्य विकारनाशौ वर्णविकारनाशौ वर्णविकारो वर्णनाशश्चेत्यपरौ तृतीयचतुर्थौ भेदौ द्वौ अर्थातिशयोऽर्थविशेषः ताभ्यामर्थातिशयस्तदर्थातिशयः तेन । धातोर्योगः संबन्धः वर्णविकारनाशकृतेन प्रसिद्धादर्थान्तरेण योग इत्यर्थः । तच्छब्दोऽत्र श्रुतधातुपरामर्शकोनुपपन्न इति व्यवहितावपि वर्णविकारनाशौ परामृशति । अथैतान् पञ्चप्रकारान् पद्यद्वयेनो-

**वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः । षोडशादौ विकारः स्याद्वर्णनाशः पृषोदरे ॥ ४ ॥** **वर्णविकार-**

दाहरति । वर्णागमो गवेन्द्रादावित्यादि । अत्र गो इन्द्र इति स्थिते गवादेरवर्णागम इत्यस्य वार्त्तिकस्येदमीयप्रपञ्चपरत्वादनेनावर्णागमे कृतेऽवेत्वयोश्च गवेन्द्र इति स्यादित्येवं गवेन्द्रादौ वर्णागम इत्यर्थः । आदिना हंसादीनां ग्रहणम् । तथा सिंहे सिंहशब्दे च वर्णविपर्ययः स्यात् । तथाहि हिसिहिंसायामस्मात् वर्णविपर्य्ययश्चेत्यप्रत्यये कर्तरि जाते अनेन हकारसकारयोः स्थानव्यत्यासे हिनस्तीति सिंह इति वर्णविपर्य्ययोऽत्र भवतीत्यर्थः । ननु यद्यनेनात्र वर्णविपर्य्ययः स्यात्तर्हि किं पुनर्वर्णविपर्य्ययश्चेति विध्यन्तरेण । उच्यते । वर्णविपर्य्ययश्चेत्यस्य नायमर्थः धातोरप्रत्ययो वर्णविपर्य्ययश्च स्यादिति एवं धातुमात्रेतिप्रसङ्गः स्यात् । किं तर्हि यत्र वर्णविपर्य्यय उक्तस्तत्राप्रत्ययो भवतीति सिंह इत्यत्रैव । नन्वप्रत्ययार्थं हिसिरेव मदादौ पठ्यतां ततश्च मदामित्येव भविष्यतीति इदमवाच्यं स्यात् । उच्यते । मदामित्यत्राकर्तरीत्यनुवर्तते । इदञ्चारम्भसामर्थ्यात्कर्तरि स्यादिति वाच्यमेव । ननु चैवमपि हिंसेश्चेत्युच्यतां किं वर्णविपर्य्ययग्रहणेन । उच्यते । वर्णविपर्य्ययोप्येतद्विहिताप्रत्यययोगे यथा स्यात् इह मा भूत् हिंसां कुर्वाणो हिंसः अत्र हिंसाशब्दात् ञिर्डित्करण इति ञिः टिलोपः सधातुरिति धातुत्वात्पचाद्यः ञेरिति ञिलोपः । अन्यथात्रापि सिंह इति स्यात् तस्मात् सुस्थं वर्णविपर्य्ययश्चेति । तथा षड्भिरधिकादशेति विगृह्य षष्दशेति स्थितेऽनेन षकारदकारयोरुकारडकारलक्षणे विकारे सति षोडशेति भवतीत्यर्थः । आदिना गूढोत्मादीनां ग्रहणम् । षोडशादीनां सहादिगणे पाठोऽस्यैव प्रपञ्चार्थः । एवं पृषोदरे पृषत् उदर इति स्थिते तकारस्य वर्णस्यानेन नाशे ओत्वं स्यादित्यर्थः । तथा वर्णविकारनाशाभ्यां यः धातोः अतिशयेन योगः स प्राज्ञैः प्रज्ञावद्भिर्म्मयूरभ्रमरादिषूच्यते । तथाहि मह्यामतिशयेन रौति भ्रमन्नतिशयेन रौतीति विगृह्य रौतेर्नाम्नि चेति डप्रत्यये टिलोपे च मही र भ्रमत् र इति स्थिते पञ्चविधबाहुलकार्थेन सैषादिति ज्ञापकेन कृते हकारेकारयोर्यकारोकारलक्षणे विकारे तकारवर्णनाशे च सति धातोरतिशयलक्षणेनार्थान्तरेण संबन्धे जाते केकिषट्पदयोर्वाचकत्वं जातमित्यर्थः । अन्यथा तयोर्वाचकता न स्यादिति । ननु चैवमुक्तलक्षणशब्दानां कथं साधुत्वं स्यात् यत उ-

**नाशाभ्यां धातोरतिशयेन यः ॥ योगस्तदुच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥ ५ ॥ इति विसर्गसन्धिः ॥**

**अथ विभक्तिर्विभाव्यते ॥ सा द्विधा । स्यादिस्त्यादिश्च ।**

क्तम् । "व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता" इति । उच्यते । ये लोपागमवर्णविकाराः शास्त्राविहिताः अविसंवादिशिष्टप्रयोगेषु दृश्यन्ते तेषां शिष्टप्रयोगादेव साधुत्वम् । यत उक्तम् । "अनपभ्रष्टतानादिर्यद्वाभ्युदययोग्यता" साधुतेति । ननु यदि शब्दसाधुत्वे शिष्टाः प्रमाणं तर्हि तत एव सर्वशब्दानां साधुत्वसिद्धेः किमर्थं शास्त्रम् । उच्यते । शिष्टज्ञानार्थं शास्त्रम् । तथाहि । अधीतशास्त्रः पुमाननधीतशास्त्रं शास्त्रस्थान् शब्दान् प्रयुञ्जानं पश्यन्नूनमेवमध्यवस्यति नूनमस्य दैवानुग्रहः, स्वभावो वा यदयमनधीतशास्त्रोपि शास्त्रस्थान् शब्दान् प्रयुंक्ते नूनमन्यानपि जानातीति ॥ इति विसर्गसन्धिः ॥ श्रीजानार्दनिवत्सराजतनयः श्रीकाह्नुनामा द्विजो यं श्रीनायकदेविकापि सुधियं प्रासौत्सुतं माधवम् । तस्य व्याकरणार्णवैकतरणेः सारस्वतीयामगाद्व्याख्यासाधुविसर्गसन्धिविरतिं सिद्धान्तरत्नावली ॥ ५ ॥

अथ शब्दाधिकारः। तत्र शब्दा द्विविधाः । स्वरान्ता हसान्ताश्च । ते पुनस्त्रिविधाः पुँल्लिङ्गाः स्त्रीलिङ्गा नपुंसकलिङ्गाश्च तत्र प्राथम्यादुपजीव्यप्रक्रियात्वाच्च आकारान्तादिक्रमेणादौ स्वरान्तान् पुँल्लिङ्गान् प्रतिपादयितुमाह । अथ विभक्तिरिति । अथेति सन्धिप्रकरणकथनादनन्तरं ये विधयो वक्ष्यन्ते तेषां विभक्तिसंज्ञा स्यात् सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यत इति विभक्तिशब्दावृत्त्या योज्यम् । अभेदोपादानाच्च द्वितीयो विभक्तिशब्दः संज्ञिवचनः । आद्यः संज्ञावचनः । महासंज्ञाकरणन्तु विभज्यंते विविच्यन्ते संख्याकर्म्मादयोऽर्था अनयेति विभक्तिरित्यन्वर्थसंज्ञाविज्ञानार्थम् । तेनागमादीनामत्र वक्ष्यमाणानामपि विभक्तिसंज्ञा न भवति । पूर्वाचार्य्यसंज्ञाश्रयणाद्वा । तदाश्रयणं तु लाघवार्थमपि कर्त्तव्यम्।तथाहि यद्यत्र सीत्यादिर्विभक्तिरित्युक्त्वा आदिशब्दोयं नन्दिग्रहिपचादेरितिवत्प्रत्येकं संबध्यते तथात्यादिग्रहे त्यादौ भविष्यतीतिवत् यात् तुप् दिप् णवादीनामग्रहात्तेषां पृथक् संज्ञाविधाने च गौरवप्रसङ्गः एवमेकवचनादिसंज्ञा अपि ज्ञेयाः । सेति । तच्छब्दोऽत्र सान्निध्याद्विभक्तिं परामृशति विभक्तिशब्दश्च संज्ञिवचनः संबध्यते तेन विभक्तिसंज्ञिनौ

**विभक्त्यन्तं पदम्***२१ ॥ तत्र स्यादिर्विभक्तिर्नाम्नो योज्यते॥ **अविभक्ति नाम** * ॥ ७६ ॥ विभक्तिरहितं धातुवर्जश्चा-द्विधेत्यर्थः । एतदेव स्पष्टयति स्यादीति । व्यवस्थावचनोऽत्रादिशब्दः सि औ जसित्यत्रस्थान् प्रत्ययानाह । त्यादिरित्यत्र च प्रकारवचन आदिशब्दः तिप्स-दृशान् विभक्तिसंज्ञान् यात्-तुप्-दिप्-णवादीनाह । पूर्वाचार्य्यैर्विहितसंज्ञात्वाद्वा सर्वानप्याह । विभक्त्यन्तमिति । समुदायोऽत्र प्राधान्यात् संज्ञी अन्तशब्दोऽवयव-वाची । शब्दस्वरूपापेक्षया क्लीबम् । वक्तव्यमिदम् । देवः भवतः पदत्वादुभयत्र विसर्गादेशः । तत्रेति । तयोर्विभक्त्योर्मध्ये स्यादिरित्यर्थः किं तन्नामेत्याशङ्क्याह । अविभक्ति । नन्वविभक्तीति कथं विगृह्यम् । नास्ति विभक्तिर्यस्योत्पत्तौ कारणत्वेन आहोस्विन्नास्ति विभक्तिर्यस्योत्पत्तौ कार्य्यत्वेन । तत्राद्ये पक्षे गङ्गेत्यादावेव स्यात् । आबाद्युत्पत्तौ विभक्तिनिरपेक्षत्वात् ग्रामप्राप्त इत्यादौ तु तत्सापेक्षत्वान्न स्यात् । न च समासत्वाद्भविष्यतीत्यपि वाच्यम् । एवं हि समासग्रहणस्य वाक्यव्यावृत्तये नियमार्थताभज्येत, तस्मान्नाद्यः पक्षः । नापि द्वितीयः भवतीत्यादावपि प्रसङ्गात् । ततश्च तिबाद्यभिहितैकत्वादिसंख्यायामप्यव्ययेभ्य इवैकवचनं स्यात् । एवं तर्हि विग्रहः करिष्यते नास्ति विभक्तिर्यस्मिन्नाश्रयत्वेन विभक्त्याश्रयो यन्नास्तीत्यर्थः इत्य-भिप्रेत्याह । विभक्तिरहितमिति । अत एव धातूनां व्यावृत्तिः । तिबादिविभक्त्यन्त-त्वात्तेषाम् । हन्तेरहन्नित्यादावपि भूतपूर्वगत्यानाविभक्तित्वमितिमत्वाह धातुवर्ज-मिति । धातून् वर्जयित्वा अधातुसंज्ञमित्यर्थः । धातुसंज्ञां वक्ष्यति । अत्राविभ-क्तीति नञ् नञिवयुक्तन्यायेन विभक्तितुल्यमर्थवदेव संज्ञि प्रत्याययतीत्याह । अर्थवदिति । अभिधेयवदित्यर्थः । तेनाभावशशविषाणादीनामप्यभिधेयवत्त्वात्संज्ञा सिध्यति अभिधेयचातुर्विध्यन्तु जातिगुणक्रियाद्रव्यभेदेन प्रपञ्चितं महाभाष्यादेर-वगन्तव्यम् । शब्दस्वरूपमिति । शब्दशास्त्रत्वात्प्रतीतमित्यर्थः । एतदपेक्षमेवावि-भक्तीति नपुंसकम् । अविभक्तीति किं काण्डे[1] । अन्यथा अत्र संज्ञायां पुनः संख्या-कर्म्माद्यर्थायोगाद्विभक्तेरनुत्पत्तावपि संज्ञाश्रयो नपुंसकस्य ह्रस्वः स्यात् । धातुवर्ज-मिति किम् । अहन् । अत्र हन्तेर्दिवादावटोऽयदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इत्यनेन धातुग्रहणेन ग्रहणादसंज्ञायां नलोपाभावः । अर्थवत्किम् । धनम् । अत्र नान्तावयवस्यानर्थकत्वादसत्यां संज्ञायां नलोपो न । वर्णानामानर्थक्यन्तु महाभाष्ये ।

---

१ कांडे कुडये अत्र भाष्ये विभक्त्यंतं शक्यमकर्तुं कांडे कुंडये कस्मान्न भवति । कृत्त-द्धितग्रहणं नियमार्थं भविष्यति । कृत्तद्धितस्यैव प्रत्ययांतस्य प्रातिपदिकसंज्ञा भवति एवं च विभक्त्यंतपदाभावेपि कांडे इत्यत्र दूषणमेव नास्ति माधवोक्तिर्विचिन्त्या ।

**र्थवच्छब्दस्वरूपं नामोच्यते ॥ कृत्तद्धितसमासाश्च ॥ प्रातिपदिकसंज्ञा इति केचित् ॥ तस्मात् ७७ ॥ सि औ जस् । अम् औ शस् । टा भ्याम् भिस् । ङे भ्याम् भ्यस् । ङसि भ्याम् भ्यस् । ङस् ओस् आम् । ङि ओस् सुप्**

अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेरित्यादिना ग्रन्थेन सुविशदं प्रत्यपादि तत्ततोवगन्तव्यं विस्तरभयादत्र नोक्तम् । इह प्रकरणोत्कर्षेण संज्ञाविधानं तस्मादित्यत्र संबन्धार्थं तत्तत्रैव वक्ष्यामः । नामप्रदेशा नाम्नो नो लोपशधावित्यादयः । कृत्तद्धितेति । एषां द्वन्द्वः तत्र कृत्तद्धितानां प्रत्ययत्वात् प्रत्ययग्रहणेन तदन्तग्रहणात् कृदन्तास्तद्धितान्ता इत्यर्थः । समासश्चेति चकारो नामसंज्ञानुकर्षणार्थः । तेनैतेपि नामसंज्ञा भवन्तीति वक्तव्यमित्यर्थः । ननु किमर्थमिदं नामसंज्ञा तु पूर्वेणैव सिद्धा । न सिध्यति तत्र कृत्सु क्विबाद्यन्तानां धातुत्वानपायात् अत एव हे सोमपा इति धिलोपो न । स्वार्थतद्धितानामपि गुणीभूतार्थवत्त्वात् । तथाहि चोर एव चौरः । स्वार्थेऽण् आदिवृद्धिः । अत्र हि चोरशब्दस्य साक्षादर्थवत्त्वं चौरशब्दस्य तु चोरशब्दस्मरणद्वारकमिति गौणमुख्यन्यायेन चोरशब्दस्यैव पूर्वेण संज्ञा स्यान्न चौरशब्दस्येति विध्यर्थं कृत्तद्धितग्रहणम् । समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावात् । अत एव पञ्चाग्नीति पदान्ताश्रयो नलोपः । नन्वेवमप्यव्ययीभावादिति विभक्तेर्लुग्विधानाज्ज्ञापकात्समासे नामसंज्ञा भविष्यति । एवमपि नियमार्थं समासग्रहणम् । अर्थवत्समुदायानां मध्ये समासस्यैव यथा स्यात्तेन वाक्यस्यार्थवतोपि न भवति । मतान्तरमाह । प्रातिपदिकसंज्ञा इतीति । एते प्रातिपदिकसंज्ञाः स्युरिति केचित्पाणिन्यादय आहुरिति वाक्यशेषः । तथाह भगवान् पाणिनिः–अर्थवदधातुरप्रत्ययः प्रातिपदिकम् । कृत्तद्धितसमासाश्चेति । ननु किमर्थमिह तत्कृतसंज्ञानुवादः । उच्यते । तच्छास्त्रवदस्यापि छान्दसप्रक्रियानिरूपणद्वारा वेदाङ्गत्वमस्तीति ज्ञापनार्थं, तेन छन्दोवत्सूत्राणि भवन्तीत्यादिन्यायजालमत्राप्याश्रयणीयमिति फलितं भवति । इह चान्ये कृदादयः प्रातिपदिकसंज्ञा इति केचिदिति व्याख्यान्ति । तदसत् एवं तर्हि कृदादीनां नामसंज्ञा न लभ्येत । पूर्वेण तु न भवतीत्युक्तमेव चोप्यनर्थक एव

**॥ ७८ ॥ तस्मान्नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति । तत्रापि प्रथमैकवचने देव सीति स्थिते ।**

स्यात् । तस्मात् । सि औ जस् । अत्र तच्छब्दः प्रकृतं नाम परामृशतीत्याह । तस्मान्नाम्न इति । ननु यदि प्रकृतं नाम तर्हि तत एव सिद्धेः किं तस्मादित्यनेन । न च वाच्यं तत्प्रथमान्तमिह चोपयोगः पञ्चम्यन्तस्येति । अर्थवशाद्विभक्तिविपरिणामात् ङ्ण इत्यत्राम इत्यनुवृत्तस्यामीतिवत् । उच्यते तदनुवृत्तौ हि तस्य स्वरूपपरत्वादिहापि तत्स्वरूपप्रतीतिः स्यात् । एवमपि स्पष्टत्वात् नाम्न इति वाच्यम् । स्वरूपप्रतीतिरपि पुनर्नामग्रहणान्न भविष्यति । ज्ञापकाच्च यदयं रःसंख्याया इत्याह तज्ज्ञापयति नात्र स्वरूपग्रहणमिति अन्यथा नामशब्दादेव स्यादय इति रेफान्तसंख्याया आमो लुड्विधानं व्यर्थं स्यात्, अत एव षष्ठीभ्रान्त्या आदेशा अपि स्यादयो न भविष्यंति ॥ किञ्च स्वरूपग्रहणं संज्ञाविधानवैयर्थ्यप्रसङ्गाच्च न भविष्यतीति । तस्मादिति व्यर्थमिति चेन्न । ज्ञापनार्थत्वात् इह शास्त्रीयसंज्ञातोऽन्यत्र स्वरूपमेव शब्दस्य ग्राह्यं नार्थ इति । तेन सखिपत्योरीगित्यादौ तदर्थानां मित्रभर्त्रादीनां ग्रहणं न भवति । इह स्यादीनां क्रमेण प्रथमाद्वितीयातृतीयाचतुर्थीपञ्चमीषष्ठीसप्तमीति पूर्वाचार्य्यकृतसंज्ञानां सप्तानां त्रिकाणां निर्देश इत्यभिप्रेत्याह । स्यादयः सप्तेति । तत्राप्येषामेकत्वद्वित्वबहुत्वेषु वाच्येषु एकवचनद्विवचनबहुवचनसंज्ञाः क्रमेण भवन्तीत्याह । तत्रापीति । सन्मात्रैकत्वविवक्षायामित्यर्थः । ननु चैकत्वं प्रकृत्यर्थः, विभक्त्यर्थो वा । उच्यते । इह केषांचित्स्वार्थद्रव्यलिङ्गसङ्ख्याकर्माद्यात्मकः पञ्चको नामार्थ इति मतम् । अन्येषान्तु स्वार्थद्रव्यलिङ्गात्मकस्त्रिक इति, तत्राद्ये पक्षे सङ्ख्यादयः प्रकृत्यर्था विभक्त्या द्योत्यन्ते । द्वितीये तु ते विभक्त्योच्यन्ते । तदुभयमपि प्रमाणम् । देव सीति । देवशब्दस्याव्युत्पन्नस्याविभक्तीति व्युत्पन्नस्य तु कृत्तद्धितेति नामसंज्ञायां तस्मात् स्यौजसिति युगपत्सप्तविभक्तिप्रसङ्गे वक्तुर्विवक्षितपूर्विकाशब्दार्थप्रवृत्तिरिति, सन्मात्रैकत्वविवक्षायां प्रथमैकवचने सौ कृते देव सीति स्थिते सतीत्यर्थः । ननु च सेरिकारः किमर्थः । न तावत् ङेरितिवच्छ्रवणार्थः गुण इति निर्देशात् । नापि सेरेत्यादौ सुपो व्यावृत्त्यर्थः अर्थवद्ग्रहणेनानर्थकस्येति परिभाषयैव तद्व्यावृत्तेः । न चापि सुरां सुनोतीति सुरासुत् क्विप्तुकौ । तं करोति सुरासयतीति ञ्णिडित्करण इति ञिः टिलोपः सधातु-

इकार उच्चारणार्थः ॥ स्रोर्विसर्गः ॥ २२८ ॥ सकाररेफयोर्विसर्जनीयादेशो भवत्यधातो रसे पदान्ते च । देवः । द्वित्वविवक्षायाम् औ । ओ औ औ कृते । देवौ । बहुत्वविवक्षायां जस् । जकारस्येत्संज्ञायां लोपः । प्रयो-

रिति धातुत्वात्तिबब्गुणायादेशाः सुरासयतीति सुराः क्विप् ञिलोपः नामत्वात्सि हसेप इति सिलोपः तत्र सुरास् इति स्थिते पुनराप इति लोपनिवृत्त्यर्थः विभक्त्यधिकारादेव तन्निवृत्तेः । सत्यपि हीकारेऽज एवात्र भूतपूर्वगत्या लोपाभावात् एवं तर्ह्यसन्देहार्थः । तथाहि । सौजसिति निर्देशे संशयः स्यात् । किं सौजसिति द्वे विभक्ती तिस्रो वा । यथान्यासे सति पुनरिकारे सि औ जसिति पृथङ्निर्दिष्टाः तिस्र एवेत्यसन्देह इत्यभिप्रेत्याह । इकार इति । उच्चारणेनार्थः प्रयोजनं यस्य स तथोक्तः । सिऔजसित्युच्चारणेन हि उक्तसंशयनिवृत्तिः प्रयोजनं भवतीत्यर्थः । स्रोः सूच रूच स्रौ तयोः अत्र नाम्नो नोलोपश्चेत्यतो नाम्न इत्यनुवर्त्तते वसांरस इत्यतो रस इति च पदान्ते चेत्यनेन पदान्तेपीदं भवतीति सर्वं मत्वाह । अधातो रसे पदान्ते चेति । ननु यद्यधातोरित्युच्यते कथमचकाः अपिपरित्यत्र धातोः प्राप्नोति । उच्यते । अत्राधिकारे अधिकारशेषः उत्तरत्र धातोर्झस इति सूत्रमस्ति तत्र पदान्त इत्यनुवर्तते तेन धातोरपि पदान्त इति भविष्यति । देव इति । अनेनात्र सोर्विसर्गादेशः । द्वित्वविवक्षायामिति । देवशब्दार्थगतद्वित्वसंख्याविवक्षायां पूर्ववत् प्रथमाद्विवचने इत्यर्थः । औ औ औ कृत इति । अनेनात्र विभक्त्यौकारेण सह देवशब्दान्ताकारस्यौकारे कृते देवौ इति भवतीत्यर्थः । एकशेषस्तु जातिपक्षमाश्रित्य नारब्धः । बहुत्वेति । पूर्ववदिति भावः । जकारस्येति । तत्र समाना इति निर्देशात् भ्यामो मकारस्येव श्रवणं नोपपद्यत इत्यत आह । इत्संज्ञायामिति । कार्य्यायेदित्यनेन । लोप इति । यस्येत् संज्ञा तस्य लोप इत्यनेन । नन्वित्संज्ञा सत्येव प्रयोजने भवतीत्याह । प्रयोजनमिति । प्रयुज्यतेऽनेनेति प्रयोजनं साधनाधारयोरिति करणे युट् । भावे वा प्रयुक्तिः प्रयोजनं तच्च न सौरव सन्देहनिवृत्तिः असन्धिनिर्देशादेव तत्सिद्धेरित्याशङ्क्याह जसीति । अन्यथात्रासीत्युक्ते शसादीनामपि ग्रहणं प्राप्नोति सति च जकारे जस एव । जसीत्युपलक्षणं

**जनं जसीति विशेषणम् । देव असिति स्थिते । दीर्घविसर्गौ । देवाः ॥ अकाराज्जसोऽसुक् क्वचिद्वक्तव्यः ॥ देवासः ब्राह्मणासः । द्वितीयैकवचने देव अमिति स्थिते**

तेन जसीत्यादौ विशेषणमन्यव्यावृत्तिजंकारस्येत्संज्ञायाः प्रयोजनं स्यादित्यर्थः । विशेषणार्थ इत्यर्थशब्दस्य क्वाचित्कोपपाठः प्रयोजनशब्देन कृतार्थत्वात् । नन्वसीत्युक्तेप्यननुबन्धकग्रहणेन सानुबन्धकस्येति परिभाषया शसादीनां ग्रहणं न स्यात्तर्हि शसाद्याः सानुबन्धाः । एवं तर्हि जकारोपदेशोऽस्याः परिभाषाया अनित्यत्वज्ञापनार्थः । तेन कुर्वन्तीति कर्त्तारः करणशीला वा कर्त्तार इति तृतृनोरपि स्तुरारित्यार् सिध्यति । देव असिति स्थिते जलोपे सतीति शेषः । दीर्घेति । तत्र द्वयोरकारयोः सवर्णे दीर्घे सकारस्य पदान्तत्वात् स्रोरिति विसर्गः देवा इति उक्तप्रक्रियायां कृतायामेव स्यादित्यर्थः । अकारादिति । नाम्नोऽकारात्परस्य जसः क्वचिदसुगागमो भवतीति वक्तव्यार्थः । इदञ्च छन्दस्येव द्रष्टव्यं तत्रैव तथा प्रयोगदर्शनात् । तथा च छन्दोधिकारे भगवान् पाणिनिरसूत्रयत् आज्जसेरसुगिति । व्याख्यातवांश्च वृत्तौ काशिकाकारः अवर्णान्तादङ्गादुत्तरस्य जसोऽसुगागमो भवति छन्दसि विषये । 'ब्राह्मणासः पितरः सोम्यासः' इति । असुकः ककारो देशविध्यर्थः उकार उच्चारणार्थः । देवासः इति । देव असिति स्थिते असुकः कित्त्वाद्टित्किताविति जसः परे सति प्रकृतिजसकारयोः सवर्णे दीर्घे श्लिष्टोच्चारणे असुकः सस्य विसर्गः । प्रयोगस्तु 'ये देवासो दिवि' इति । क्वचिदिति किं 'ये देवा अग्निनेत्राः ये पूर्वासोऽपरासः' इत्यत्रालौकिकत्वेन सामान्यम् । जसीत्वं छान्दसेन विशिष्टेनासुकाबाधितमिति सकृद्विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति पश्चान्न प्रवर्त्तते छन्दसि दृष्टानुविधित्वाद्वा । द्वितीयैकवचन इति । कर्मैकत्वविवक्षायां देवशब्दान्नाम्नस्तस्मादित्यादिना अमौशसिति द्वितीयाया एकवचनेऽमिति सति देव अमिति स्थिते सत्युच्यत इत्यर्थः । ननु मकारस्येत्संज्ञा कस्मान्न भवति । न च जसः सस्येव प्रयोजनाभावादिति वाच्यम् । रुधादिनमोमस्येव मिदंत्यात् स्वरात्पर इति प्रयोजनस्य सत्त्वात् । तस्मादिति पञ्चमी तु स्याद्यपेक्षया चरितार्थेह षष्ठ्या विपरिणम्यते । अम्शसोरस्य आम्शसि आम्स्भौ एषां प्रवृत्तिस्तूभयथापि समानैव । नापि वाच्यमेवं प्रत्ययपरत्वेनापि

**अम्शसोरस्य॥ ८० ॥ समानादुत्तरयोरम्शसोरकारस्य लोपो भवत्यधातोः। देवम्। देवौ। बहुवचने देव शसिति स्थिते। शकारस्येत्संज्ञा शसीतिविशेषणार्था॥ सोनः पुं-**

देवं हरिमित्यादावविशेषान्मोपदेशो व्यर्थ इति गोदुहमित्यादौ विशेषस्य सत्त्वात् इति चेदुच्यते। यदयं त्वामामेत्यत्र मस्याश्रवणार्थममेत्याह तज्ज्ञापयति न मस्येत् संज्ञेति। अन्यथाऽश्रवणस्येत्त्वेनापि सिद्धौ लाघवार्थममीत्येव वाच्यं स्यात् । तेमे प्रतिषेधार्थं वा नामोत्येव ब्रूयात् अप्राथम्याद्बहिरङ्गत्वाच्च न आम् प्रतीतिः अकारप्रतीतिपूर्वत्वादाकारप्रतीतेर्बहिरङ्गत्वम्। अत एव वसोर्व उरिति निर्देशः। अम्शसोः अत्र स्याद्यधिकारात् स्यादिसम्बन्धिनोरम्शसोर्ग्रहणादचिनवं बहुश इत्यत्र नालोपः कुलं वर्तते उपकुम्भं देश इत्यत्र चालोपः। ननु च लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति लोपो न स्याल्लाक्षणिकत्वादमादेशस्य उच्यते। यदयं सूत्रेऽस्य ग्रहणं करोति तत् ज्ञापयति यथाकथञ्चिदम्शसोरस्य लोप इति। अन्यथा अम्शसोरित्येव वाच्यं स्यात्।न च तथा सति षष्ठीनिर्दिष्टस्येत्यन्तादेशो लोपः स्यादिति वाच्यम् । सो नः पुंस इत्यत्र शसः सस्य नत्वविधिसामर्थ्यात्। अन्तादेशे हि लोपे शसः स एव नास्तीति कस्य नत्वं स्यात्, अत एव सनपुंसकमिति निर्देशः। अत्र सुश्रियमित्यादौ सर्वविधिभ्यो लोपविधिर्बलवानिति प्राप्तालोपवारणायाह अधातोरिति । समानाद्धेरित्यतोऽनुवर्तत इत्यर्थः। केचिदत्राधातोरिति नानुवर्तयन्तः सोमपः सुश्रियमित्यादौ आलोपादिना अल्लोपं बाधमानाः सर्वविधिभ्य इति नाश्रयन्ति। अम्शसोः किं देवाः। समानात्किं राजानम्। देवमिति । अहसपरत्वात्पदान्तेपि नानुस्वारः। देवाविति प्राग्वत्। बहुवचन इति। कर्मणो बहुत्वविवक्षायां प्राग्वत् देवशब्दात् द्वितीयाबहुवचने शसि कृते देवशसिति स्थिते सतीत्यर्थः। शकारस्येति। शसादौ स्वर इत्युक्तत्वात्तच्छ्रवणमसहमान आह । इत्संज्ञेति । कार्य्यायेदित्यनेन तत्प्रयोजनमाह शसीति । अन्यथात्रासीत्युक्तौ सानुबन्धकत्वाज्जसादीनामग्रहणेपि सकारादन्यत्र दीर्घ इत्यपि सम्भवः स्यादिति तन्निरासाय शसीति विशेषणं शकारस्यार्थः प्रयोजनं स्यादिति भावः। सो नः। अत्रामशसोरनुवृत्तावपि अमिसस्याभावाच्छशैव संबध्यत इत्याह शसः सकारस्येति। सः किम्।अमो मस्य मा भूत्। पुंसः किं गङ्गाः पश्य।

**सः * ॥ ८१ ॥ पुँल्लिंगात्समानादुत्तरस्य शसः सकारस्य न-कारादेशो भवति ॥ शसि * १३८ ॥ शसि परे पूर्वस्य दीर्घो भवति ॥ देवान् । तृतीयैकवचने देव टा इति स्थिते । टकारोनुबन्धष्टेनेति विशेषणार्थः ॥ टेन * ८८ ॥ अकारात्परष्टा इनो भवति । देवेन ॥ अद्भि ८२ ॥ अकार आ भवति भकारे परे । देवाभ्याम् ॥ भ्यः***

ग्लावः पश्य । एतान् गाः पश्येत्यत्र नत्वाभावस्तु सैषादित्यत्रोक्त एव । असत्वा-त्तस्य सन्ध्यक्षरस्य सद्भावान्नत्वाभावः । अथवा अमृशसोरस्येत्यतोनुवृत्तस्यास्येत्य-स्यार्थात्पञ्चम्यन्तस्य नियमार्थत्वादाकारव्यावृत्तेर्न नत्वम् । अत एव हाहाः पश्येत्या-दिसिद्धिः । तथोक्तं रामचन्द्राचार्यैः । आदन्ताच्छशो नत्वाभाव इत्येके इति । नियमस्य च तुल्यजातीयविषयत्वात् समानग्रहणानुवृत्तिसामर्थ्याद्वानेकारादिव्या-वृत्तिः । शसि । ननु बहुश इत्यत्र कथन्न दीर्घः । न च निरनुबन्धकत्वादिति वाच्यम् । अन्यतरग्रहणे प्रमाणाभावात् । एवं तर्हि स्याद्यधिकारान्न भविष्यति । देवानिति । बलवत्त्वात् पूर्वमलोपे एकदेशविकृतमनन्यवदिति नत्वे च यदादेशस्तद्वदिति दीर्घे च एवं स्यादित्यर्थः । तृतीयैकवचने इति । कर्तृकरणैकत्वविवक्षायां पूर्ववद्देवश-ब्दात् टाभ्याम्भिसित्यस्या एकवचने टा इत्यस्मिन् सति देव टा इति स्थिते सती-त्यर्थः । टकार इति । यूयं वयं जसेति निर्देशान्नायं स्थायीत्याह अनुबन्ध इति । इत्संज्ञ इत्यर्थः । तत्फलन्तु सिनेति निर्देशान्न टित्किताबाद्यन्तयोरित्यत आह टेने-तीति । अन्यथात्र एनेत्युक्ते समाना इति निर्देशादकारासंशये आमोप्याकारस्येनः प्राप्नोति । नन्वर्थवद्ग्रहणेनानर्थकस्येत्यामोवयवस्यानर्थकत्वान्न भविष्यति एवं तर्हि अनित्यत्वमस्याः परिभाषायाः ज्ञाप्यते, तेनानिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्तीति दण्डी यशस्वीत्युभयत्रापीनां शौसाविति दीर्घत्वं भ-वति, अत एवाह विशेषणार्थ इति । विशेषणंनैवार्थो यस्य स तथोक्तः टेनेति विशेषणेनह्युक्तोर्थो भवति । टेन । अत्राद्भीत्यतोदितिप्रथमान्तमप्यनुवर्त्तमानमर्था-त्पञ्चम्यंतं स्यादित्याह अकारादिति । तस्मादित्यनुवृत्तेरकारान्तान्नाम्नः पर इत्यर्थः । एवमुत्तरत्रापि व्याख्येयम् । देवेनेति । इनादेशे कृते अइएइत्येत्वम् । अद्भि । आभ-वतीति । वास्वित्यतोनुवर्त्तमान इत्यर्थः । देवाभ्यामिति । अहसपरत्वान्नानु-

८३ ॥ अकारात्परस्य भिसो भकारस्याकारादेशो भवति । देवैः ॥ अकारस्य भिसि छन्दस्येकारो वक्तव्यः * ॥ देवेभिः । कर्णेभिः । चतुर्थ्येकवचने देव ङे इति स्थिते ।

स्वारः । इत्संज्ञात्वात्वविधिवैयर्थ्यप्रसङ्गान्न । अन्यथा मित्त्वादात्परे भ्यामि आगमाय-द्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इति नाम्नोवयवे सति भकारेऽकारान्तनामैवनास्तीति कस्यात्वं स्यात्, अतएवेदुद्भ्यामितिनिर्देशः । अत् किम् हरिभ्याम् । भीतिकिं देवः । भ्यः । इहाड्डीत्यतोनुवृत्तौपुनर्भिग्रहणात् नामैकदेशेनसकलमपि नाम गृह्यत इति भीमसेनोभीमइतिवदेकदेशेनभिसेवगृह्यते तत्रापिभीति प्रथमायांनिर्दिश्यमानस्यादेशा भवन्तीति सर्वस्यभिसोकारादेशोजसीत्ववत्स्यात् षष्ठयामपिषष्ठीनिर्दिष्टस्येति सकारमात्रस्य स्यात् । तस्मात् लुप्तषष्ठीकः स्थानीद्वितीयोभकारोत्र निर्दिश्यत इत्येतत् सर्वमालोच्याह । भिसोभकारस्येति । अर्थाद्विपरिणतविभक्तिकेड्डीत्यतोनुवृत्त्यनु-मितेसत्यपिभेस्थानिनिश्रौतोभिसुस्थानीमाविज्ञायीतिपुनर्भग्रहणम् । देवैरिति । एतत् कृतात्वभिसिकारयोरइए इतिकृतैकारप्रकृत्यकारयोरेऐऐइत्यैत्वेसस्यविसर्गेएवंस्यादि-त्यर्थः । ननुचात्रात्वेकृते देवअइस् इतिस्थिते अन्तरङ्गबहिरङ्गयोरन्तरङ्गो विधिर्बल-वानितिप्रकृतिप्रत्ययाश्रयोन्तरङ्गःसवर्णेदीर्घएत्वैत्वात्प्राक्कथं नस्यात् । नचवाच्यंपर-त्वात् कृताकृतप्रसङ्गित्वेननित्यत्वाच्चएत्वेनबाधिष्यतइति।अन्तरङ्गस्यचपरादिनाबाधि-तुमशक्यत्वात् यतउक्तं—"परंविदुःपूर्वपरोपपत्तौ परस्यनित्यस्यचनित्यमेव।नित्यान्त-रङ्गोपगमेन्तरङ्गस्तस्माद्विधिः प्रातिपदोबलीयान्"इति । किञ्चनित्यमप्येत्वं नकृतेदीर्घे-न्यस्य प्राप्नोत्यन्यस्याकृते शब्दान्तरस्य च प्राप्नुवन् विधिरनित्योभवतीति एवं तर्हि यद्येवमिष्टंभविष्यत् तर्हिजश्शसोर्लुगित्यतोनुवर्त्त्य लाघवार्थं भस्यलुकमेव व्यधास्यन् । अतएवास्मदिच भार्गैरिति निर्देशः भितिकिं सस्य मा भूत् भीति किं देवाभ्याम् । ननुचात्वेकृतेनाकारात्परो भिति न भविष्यत्यत्वम् । मैवं यदाभीति नोच्येत तदात्र परत्वादात्वंस्यात् वचनसामर्थ्यादात्वमपि कदाचित् । अकार-स्येति । नाम्नोकारस्यभिसिपरेछन्दस्येकारोभवतीतिवक्तव्यार्थः । ननुचात्वमेवप्रति-षिध्यताम् एत्वंतु एरिभबहुत्वइति सिद्धमेवलाघवमप्येवम्भवति । एवंतर्ह्यत्वमप्य-त्रभवतीति प्रतिपत्त्यर्थमेवमुक्तम् । तथा चोभयथाप्रयोगश्छंदसि दृश्यते देवे-भिर्युक्तमदिति सजूर्देवैर्वयोनाथैरिति । कर्णेभिरिति । एत्वेकृतेएकारान्तत्वान्नात्वम् ।

ङकारो ङित्कार्य्यार्थः सर्वत्र ॥ ङेऽक् * ॥ ८८ ॥ अकारात्परस्य ङे इत्यस्यागागमो भवति । कित्त्वादन्ते । ए अय् । दीर्घः । देवाय । देवाभ्याम् ॥ ए स्भि बहुत्वे *८४॥ आकारस्यैत्वं भवति सकारे भकारे च परे बहुत्वे सति । देवेभ्यः । पञ्चम्येकवचने देव ङसीति स्थिते ॥ ङसि-

प्रयोगश्च 'भद्रंकर्णेभिः शृणुयामदेवा इति । चतुर्थ्येकवचन इति । संप्रदानैकत्वविवक्षायांदेवशब्दान्नाम्नःप्राग्वन्ङेभ्यांभ्यसितिचतुर्थ्याएकवचने ङेइत्यस्मिन् सति देव ङेइति स्थितेइत्यर्थः । ङकार इति । ङइत्यस्यासौङित् ङिदाश्रितं कार्य्यंतदर्थो यस्य सतथाविधोङेइत्यत्रङकार इत्यर्थः । ङित्कार्य्यंतुङितीत्यादिवक्ष्यति । तत्संज्ञामन्तरेणनोपपद्यत इति नान्तरीयकतयेत्संज्ञाप्यस्योक्ता । किंङेइत्यत्रैवतदर्थो नेत्याह सर्वत्रेति । ङसिङस्ङिष्वपि वर्तमान इत्यर्थः । ङे । आगमापेक्षया । ङेइतिषष्ठीयसितिमत्वाह ङे इत्यस्येति । अकःकोदेशोविध्यर्थमित्याह कित्त्वादिति । टित्कितावाद्यन्तयोरित्यनेन । देवायेतिअकिकृते देव एअ इतिस्थितेपरत्वादन्तरङ्गत्वाच्चैएऐइत्यैकारे आयादेशेश्लिष्टोच्चारणेचकृतेसत्येवंस्यादित्यर्थः । क्वचिदिहपठ्यतेएअयदीर्घइतिअपाठएवज्यायान्‌यदत्रपरोन्तरोङ्गऐएवस्यान्नाय् । किञ्च एवंनियोगशिष्टोयमक् सन्निपातलक्षणपरिभाषयानैकारं विघातयतीति ऐकारस्तुनागागमानिमित्तमितिनायमस्या विषयः । देवाभ्यामिति । अह्नीत्यात्वेअहसपरत्वादनुस्वारो न ॥ एस्भि । स्चभ्चस्भ् तस्मिन् । ननुकिमर्थमिदमुच्यतेस्भीति यावतास्भीत्यतोनुवर्त्तिष्यते अह्नि, ङभ्यं इत्यत्रानुवर्त्तमानमपिपुनर्भिग्रहान्नसंभत्स्यतिएवंतर्हिबहुत्वाविशेषणार्थं पुनःस्भीत्युक्तं तेन बहुत्वे वाच्येसतिविहितोयः सकारोभकारश्चतस्मिन् परतोनाम्नोकारस्यैत्वं स्यादित्यर्थः । ततश्च सोमं सुनोतीति सोमसुत् तमाचक्षत इति सोमस इत्यत्र जसिसति सुनोतेः सकारेपरे सोमाकारस्य नैत्वम् । अतएवाह सकार इत्यादि बहुत्वे सतिविहितोयः सकारोभकारश्च तस्मिन्परइति वृत्तौयोज्यम् । देवेभ्यइति । एत्वेकृतेसस्यविसर्गः । स्भीतिकिं देव । बहुत्वेकिं देवाः । भिसित्वत्वस्य निरवकाशादेव प्रवृत्तिः नित्यान्तरङ्गनिरवकाशानिहिबलवन्ति । पञ्चम्येकवचन इति अपादानैकत्वविवक्षायां पञ्चम्याङसिभ्यांभ्यसित्यस्याएकवचनेङसौकृते ङकारेकारयोरित्संज्ञायां लोपे च देवअसिति स्थिते सतीत्यर्थः । तत्रङस्यप्रयोजनमुक्त-

१ इह गर्गाः शतं दंड्यंतामितिवत् समुदायवाक्यपरिसमाप्तिराश्रीयते तदा क्वापि प्राप्तिर्नास्ति एकस्मिन् लक्ष्ये सर्वेषामबादीनां स्थितेरभावात् । यदि च ब्राह्मणा भोज्यंतामितिवत् प्रत्येकं वाक्यपरिसमाप्तेराश्रयणं तदा अर्घ्येण इत्यत्र णत्वाभावः स्यात् अतो यथासंभवमिलितैरेव व्यवायो बोध्य एतदभिप्रायेणैव दीक्षितेनापि यथासंभवमिलितैश्चेत्युक्तम् ।

रत् ❀ ॥ ८६ ॥ अकारात्परो ङसिरद्भवति । देवात् । देवाभ्याम् । देवेभ्यः । षष्ठ्येकवचने देव ङसिति स्थिते ॥ ङस्स्य ❀ ॥ ८७ ॥ अकारात्परो ङस् स्यो भवति । देवस्य ॥ ओसि ❀ ॥ ८५ ॥ अकारस्य ओसि परे एत्वं भवति । देवयोः ॥ नुडामः ❀ ॥ ८२ ॥ समानात्परस्यामो नुडागमो भवति । टित्वादादौ । उकार उच्चारणार्थः ॥ नामि ❀ १३८

मिकारस्तुषष्ठ्येकवचनाद्भेदप्रतिपत्त्यर्थः । ङसि । देवादिति । अतिकृते सवर्णेदीर्घः देवाभ्यां देवेभ्य इति प्राग्वदात्वैत्वे । षष्ठ्येकवचन इति । संबन्धैकत्वविवक्षायां देवशब्दात् षष्ठ्याङ्सोसामित्यस्या एकवचने ङसिकृते उक्तप्रयोजनस्य ङस्येत्संज्ञायां लोपे देवअसिति स्थिते सत्युच्यत इत्यर्थः । ङस्स्य । देवस्येति । ङसोऽस्यः । इह टाङसिङसामिनात्स्याः इति वाच्ये पृथग्योगकरणं बालबोधार्थं लाघवार्थञ्च । ओसि । एत्वंभवतीति । एस्भीत्यतोनुवर्त्तमानम् । देवयोरिति । एत्वेकृतेऽयादेशविसर्गौ । नुडामः । इहसमानाद्धेरित्यतः समानादित्यनुवर्त्ततइत्याह । समानादिति । एवं च हाहां हूहां वातप्रम्यामिति प्राप्तोनुट् आगमशासनस्यानित्यत्वान्नभवति । अनित्यत्वं च सखिपत्योरीगित्यत्राचार्य्यः स्वयमेववक्ष्यतीति । वयमपि तत्रैव प्रतिपादयिष्यामः । ननुचाम इति किं ङेरामोग्रहणं, कासादिप्रत्ययादामोवांतरतमयोरामो वा, षष्ठीबहुवचस्य वा । नाद्यः तत्रहि परत्वाय्डटोः कृतयोर्नहिद्वयोरादिलिङ्गयोः समुच्चयो घटत इति नुटः प्राप्त्यभावात् । अथवा यदादेशस्तद्वदिति ङेङकारेणास्य सानुबन्धकत्वादननुबन्धकग्रहणेन सानुबन्धकस्येति परिभाषयातस्याग्रहणात् । लाक्षणिकत्वाद्वा । नापि द्वितीयः नाम्न इत्यनुवृत्तेः । तस्यधातोर्विधानात् । नच तृतीयः । स्याद्यधिकारात् । अतःपारिशेष्यात् तुर्य्यएव पक्षः प्रमाणमिति मत्वाह । परस्यामइति । सीनाम् आम्, स्याम् परश्चासौ स्याम् परस्याम् तस्यपरस्यामः । सीनामिति बहुवचने नस्यादयउच्यन्ते । यथादांहौदादीनामिति । नुटष्टकाराट्टित्किताबाद्यन्तयोरितिदेशविध्यर्थइत्याह । टित्वादिति । डकारोपिसप्रयोजनइत्याह । उकार इति । उच्चारणमर्थोयस्यसतथोक्तः । अन्यथा हिद्वयोर्हसयोरस्वरयोरुच्चारणं दुष्करं स्यादिति भावः । नामि । नन्वामीत्येवोच्यतां ।किं नकारेण । तस्याव-

नामि परे पूर्वस्य दीर्घो भवति । देवानाम् । सप्तम्येक-वचने देव ङि इति स्थिते । देवे । देवयोः ॥ किला-त्षः सः कृतस्य * १४७ ॥ कवर्गादिलाच्च प्रत्याहाराद्धु-

यं सत्त्वात् । नचव.चय्न्तेन व्यवधानान्नस्यादिति । परत्वाद्दीर्घे कृतेपश्चान्नुटप्र-त्तेः । ननुनित्यत्वात्पूर्वं नुडेवस्यादिति । किञ्च यदामीत्युच्येत तदासर्वेषामित्य-ापिपरत्वाद्दीर्घे कृते तदन्तत्वात्सुडेत्वे नस्यातामिति नामीत्युक्तम् । न चैवंदण्डिना-मित्यत्रापि प्रसङ्गः नस्याऽवयवीआम्नाम् तस्मिन्नामितिव्याख्यानात् । मधूनामित्य-ातुनुमः प्रकृतिभक्तत्वेपिनुमन्तस्यामिदीर्घ इति यत्नान्तरारम्भान्नदोषः । देवाना-मिति । नुटिदीर्घेचकृतेएवं स्यादित्यर्थः । ननुचात्रमस्येत्संज्ञायामन्त्यात्स्वरात्पर-यादिति हसान्तेषु दोषः । मैवं यदयं रःसङ्ख्याया इत्याह तज्ज्ञापयति नमस्ये-संज्ञेति । अन्यथारेफान्तसङ्ख्यायाः परआम् नास्तीति कस्यनुट्स्यात् । सप्तम्येक-वचनइति । अधिकरणैकत्वविवक्षायामुक्तरीत्या देवशब्दात्सप्तम्याङिओस्सुबित्य-याएकवचनेदेवङि सतिदेवङिइति स्थितेसतीत्यर्थः । ङःप्राग्वत् अइए अनेनाकारे-कारयोरेत्वे कृते देव इति स्यादित्यर्थः । देवयोरिति प्राग्वत् । किलात् । कुश्चइलश्च किलंतस्मात् तत्रकोकुकारान्तत्वादल्पस्वरत्वाच्चपूर्वनिपाते द्वन्द्वैकत्वम् । नन्वत्रकुइति कुशब्दइति धातोर्ग्रहणं, कुत्सितार्थाव्ययस्यवा, कवर्गस्यवा, नाद्यः इलादित्येव सिद्धत्वात् । ननुयदाकुधातुस्तदाइलोपिगत्यर्थोधातुरेव साहचर्य्यात् । मैवम् । अकारोच्चारणवैयर्थ्यप्रसङ्गात् । ननुप्रत्याहारइवोच्चारणार्थ एवाकारोस्तु । न शास्त्रे तथा धातुनिर्देशस्याप्रसिद्धत्वात् ईषद्दुःसुष्वितिनिर्देशाच्च । इलेत्यत्राकारान्ता-द्व्यर्थोपिनाकारः । किञ्च धातुतः प्रसिद्धतरत्वादपिप्रत्याहार एवेलो गृह्यते अतएवारात्रिष्वितिषत्वनिर्देशः । एवं कोरेवयथास्यात् । भूषेइत्यादावन्यस्माद्धातो-र्नभूदितिनियमार्थंकुधातुग्रहणंस्यात् । इलेनसंज्ञाशब्देनसाहचर्यात्संज्ञाशब्दस्यैवको-र्ग्रहणात्प्रसिद्धत्वाच्च । चोःकुरित्यादौकवर्गवाच्येशास्त्रेकुःप्रसिद्धो नतथाधातुरिति । अत एवपरोक्षइति निर्देशः । अन्यथाऽश्नोतेरौणादिकेसिप्रत्ययेशस्यषत्वेकुत्वेचकृते ककारात्सस्यषत्वाभावादक्षिशब्दानुपपत्तेःपरोक्षशब्दोनुपपन्नः स्यात् नापिद्वितीयः तस्य प्रथमपक्षवन्निरस्तत्वात् । अतस्तृतीयपक्ष एव प्रमाणमित्येतत्सर्वमालोच्याह । कवर्गादिलाच्चप्रत्याहारादिति । अत्र च सतो हि कार्य्यिणः कार्य्येणभवितव्यमितिसः

त्तरस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भ-

षः इतिनिर्देष्टव्ये विपरीतनिर्देशःषस्स इतिद्विसकारकनिर्देशेनषत्ववत्सत्वस्यापि क्वचिद्विध्यर्थः ततश्च सिस्वेदयिषतिसिस्वादयिषतिनिसेसिच्यतेसिसाहयिषतिइत्यादौ सत्वमपिभवतितद्विधिसामर्थ्याच्चपुनः षत्वं न षकारेअकारोप्येवमुच्चारणार्थः उपपद्यते· त्रिहसीदुरुच्चारेति । ष्टुत्वंतुनिर्देशस्यसौत्रत्वादपिवार्य्यते । स्थानीचात्रसएवनषः द्वितीयसविधिवैयर्थ्यप्रसङ्गात्कृतस्येत्यनेनाव्यवहितसंबन्धाच्च । किञ्च सकारस्यात्र विधानेउत्तरत्रापितदनुवृत्तौप्रादेश्चेतिसूत्रंनसंगच्छेततस्मात्सएवस्थानीषएवादेशः उभे अपिव्यञ्जने । अस्तूच्चारणार्थइत्युक्तम् । अतएवविपरीतविद्धयसंभवादिष्टइत्यादौ सत्वाभावः । कृतस्येति । कर्मणिक्तःक्रियतेविधीयतेस्मेतिकृतस्तस्येत्यर्थः । विधानञ्च शास्त्रे लक्षणमन्तरेण न भवतीति मत्वाह । केनचिदित्यादि । देवेष्विति । अधिक· रणबहुत्वविवक्षायां प्राग्वद्देवशब्दाज्जातस्यसुपः पकारस्येत्संज्ञायां लोपे देवसु इति स्थिते सति अकारस्य एस्भीत्येत्वे कृते तस्मादिति सूत्रेण कृतस्य सकारस्यानेन षत्वे एत्वं स्यादित्यर्थः । ननु चात्र सुबेव कृतो न सकारः तत्कथं तस्य षत्वम् । सत्यम् । अवयवावयविनोरभेदविवक्षायां सकारोपि कृत एवेति स्यादेव षत्वम् । अथवा कृतस्य स इति व्यधिकरणे षष्ठ्यौ तत्र कृतस्येत्यवयवषष्ठी स इति स्थानषष्ठी तेन कृतस्य प्रत्ययादेरवयवो यः सकारस्तस्य स्थान इत्यर्थः । सर्पिष्षु इत्यादौ तु दोषा-मिति रेफस्य विसर्गस्तस्य सत्वे अवयव एवाभेदोपचारादवयविव्यपदेशः राहोः शिर इति यथा । सुपः पकारः सुबिति संज्ञार्थः, तेनात्वसोः सावित्यादौनास्य ग्रहणम् । क्लिलात्किं देवस्य । कृतस्येति किम् बिसम् । अत्र च पुन्नोणोनन्त इत्यतोऽनन्त इत्यनुवृत्तेः पदान्तेन षत्वं हरिस्तत्र । अनन्त इत्यस्यचावृत्त्याक्लिला-दित्यनेनापि संबन्धात् दधिसेन्यौ दधिसादित्यादौपदान्तान्नषत्वम् । बहुसेचावित्य-त्रापदान्तत्वेपि शेषा निपात्याः क्त्यादय इति निपातनात् षत्वाभावः । क्लिलादि-त्यनेनैव सत्वस्यापि विधानाद्वा । पदान्तविधेरनित्यत्वज्ञापनाच्चयजुष्षं मातृष्वसेत्या-दावनन्त इति प्रतिषेधो न भवति । पितृष्वस्रादेरिति निर्देशाद्वा । तथा अवकुप्वि-त्यतोपोत्यनुवृत्तेः क्वचिदकृतस्यापि सस्य षत्वं भवति तेन घसादेः ष इति वक्ष्यमाणमुपपद्यते । सर्पींषीत्यत्र बहिरङ्गत्वेनासिद्धत्वात्षत्वेनुमो न व्यवधाय-कत्वम् । सजूष्षु इत्यत्रापि पूर्वस्य षत्वे परस्य ष्टुत्वम् । विसर्गपक्षेप्यन्तर इत्यनु-

**वति । देवेषु ॥ आमन्त्रणे सिर्द्धिः ❀ ६० ॥ आमन्त्रणमाभिमुख्यकरणं तस्मिन्नर्थे विहितः सिर्द्धिसंज्ञो भवति ॥ समानाद्धेर्लोपोऽधातोः ❀ ७८ ॥ समानादुत्तरस्य धेर्लोपो**

वृत्तेः सिद्धं षत्वं सजूःषु । अनुवृत्तेश्चेष्टसिद्ध्यर्थत्वान्नातिप्रसङ्गः । आम० । आमन्त्रयन्तिसंबोधयन्ति येन तदामन्त्रणम् । एवं ह्याभिमुख्यकरणमस्यार्थो भवतीत्याह आमन्त्रणमित्यादि । तस्मिन्विहित इति । तस्मिन्नर्थेवाच्येविहितायाः प्रथमायाः संबन्धीत्यर्थः । तस्या एव संबोधने विधानात् । ननु प्रथमापि न संबोधने विधीयते लिङ्गार्थे प्रथमेति विधास्यमानत्वात् संबोधनस्य च लिङ्गार्थातिरिक्तत्वात् ग्रस्त्वामन्त्रणे चेति वक्ष्यति तन्न सूत्रं सूत्रेष्वसत्त्वात् । एवन्तर्हि अयं योगो विभज्यते आमन्त्रणेसिर्द्धिरितितत्रामन्त्रणइत्येको योगः तत्र प्रथमानुवर्त्तते ततश्चायमर्थः आमन्त्रणेर्थे प्रथमा विभक्तिर्भवति अमुमेव योगमाचार्य्यो बालावबोधाय कारकेषु मूले व्याख्यास्याति । ततः सिर्द्धिरिति द्वितीयोयोगः तत्रामन्त्रण इत्यनुवर्तते प्रथमा च । ततोस्यापि आमन्त्रणे या प्रथमा तस्याः सिर्द्धिसंज्ञो भवतीत्यर्थः तथा चेदमेव योगद्वयं भट्टरामकृष्णेन पृथगेव व्याख्यातमुदाहृतञ्च । आमन्त्रणे आज्ञापनेर्थे प्रथमाविभक्तिर्भवाति हे देवदत्त । सिर्द्धिः आमन्त्रणेर्थे विहितः सिर्द्धिसंज्ञको भवति हे नदि इति इदं विधानमेव वा सम्बोधनेप्रथमाविधौलिङ्गम् । लिङ्गार्थएववासम्बोधनमितितत्रैववक्ष्यामः–धिप्रदेशाःसमानाद्धेरित्यादयः । समाना इहकृत्रिमाकृत्रिमयोः कृत्रिमेकार्य्यसंप्रत्ययइति विधिरित्यादावकृत्रिमस्य धेर्नलोपः । एवमपि हे हाहाः हे अतिलक्ष्मीरित्यादौ दीर्घात्प्राप्तो लोपःसंज्ञापूर्वकस्यविधेरनित्यत्वान्न भवति । यद्येवंह्रस्वादित्येवोच्यतां किमतिप्रसङ्गकेन समानग्रहणेन । एवं ह्यधातोरित्यपि न वाच्यं स्यात् धौ ह्रस्वान्तस्य धातोः क्वचिदप्यभावात् । सत्यम् एवमप्युत्तरसूत्रे अमूशसोरस्येत्यत्र समानादिवाच्यं नदीं मातॄरित्यलोपो यथ स्यात् उत्तरार्थञ्च तत्तत्र कर्तव्यमिहैव क्रियते दोषाभावात् ह्रस्वादिति न वाच्यं भूदिति । एवं च हे सोमपा इत्यादिनिरासायाधातोरित्यपि वाच्यम् । न वाच्यं सत्यपि तस्मिन्नामसंज्ञया धातुसंज्ञाया बाधितत्वात् प्रयोजनाभावात् ।

भवत्यधातोः । आभिमुख्याभिव्यक्तये हेशब्दस्य प्राक् प्रयोगः । हे देव । हे देवौ । हे देवाः । एवं घटपटस्तम्भकुम्भवृक्षादयोप्यकारान्ताः पुँल्लिङ्गाः । अकारान्तानामपि सर्वादीनान्तु विशेषः । सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम त्वत् त्व सम सिमः नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद्

एवं तर्हि इदमेव धातुग्रहणं ज्ञापयति भवत्यत्र संज्ञासमावेश इति, अतएव गोधुगिति घत्वं सोमप इत्यालोपः । ननु यद्यधातोरित्युच्यते हे ग्रामणि कुलेत्यत्र न प्राप्नोति एकदेशविकृतत्वेन धातुत्वानपायात् मा भूदमुना नपुंसकात् स्यमोरिति लुग् भविष्यति । गुणस्तु लुक्यपि विषयसप्तम्यासिध्यति । हे सोमपेत्यत्रातोमित्यत्राधाताविस्यनुवृत्तेर्नामूप्रसङ्गः । अथवा एकदेशविकृतन्यायस्यात्र विषयाभावं सोमपं कुलमित्यत्रोपपादयिष्यामः । उत्तरार्थं चाधातोरिति वाच्यं तत्र यद्यधातोरिति पर्युदासः तर्हि नञिवयुक्तन्यायेन क्रियाशब्देष्वेव स्यात् न जात्यादिशब्देषु । प्रसज्यप्रतिषेधाश्रयणात्सिद्धम् । तत्र हि नञः क्रियया सम्बन्धात् प्रतिषेधे प्राधान्यात् न सादृश्यप्रतीतिः । तदुक्तम् ० अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ॥ प्रसज्यप्रतिषेधोसौ क्रियया सह यत्र नञ् इति । एतदेव स्पष्टयति । अधातोरिति । धातोर्न भवतीत्यर्थः । समानात्किं हे गौः । अधातोः किं हे सोमपाः । आभिमुख्येति । अभिमुखस्य भाव आभिमुख्यं तस्याभिव्यक्तिस्तस्यै । अयं भावः सुश्रीरित्यादौ संबोधने सत्यसति च समानमेव रूपमिति तदर्थाभिव्यञ्जको हे शब्दः प्रयोज्य इति । केचित्तु संबोधनार्थस्य प्रथमयैवाभिहितत्वादानर्थक्यान्न प्रयुञ्जते हे देवेति प्राग्वदेवशब्दात् संबोधनार्थैकत्वविवक्षायां प्रथमैकवचने सौकृते तस्य घिसंज्ञायां समानादिति लोपे प्राक् हे शब्दप्रयोगे एवं स्यादित्यर्थः । द्विवचनबहुवचनयोस्तु प्राग्वदेव प्रक्रिया । एवमिति घटादीनांकृतद्वन्द्वानामादिशब्देनबहुव्रीहिः घटादयोप्यदन्ताः पुंसि वर्तमाना एवं देवशब्दोक्तप्रक्रियया व्युत्पाद्या इत्यर्थः । तेषां च भूयसामुपादानं शब्दानन्त्यप्रतिपादनार्थम् । अकारान्तानामपीति । अपिः समुच्चये । सर्वादीनामप्यकारान्तत्वादेवमेव रूपं स्यादित्यर्थः । किं सर्वमपि नेत्याह तुर्विशेष इति । तुरल्पार्थः । अल्पो विशेष इत्यर्थः । तं निरूपयितुं गणं प-

**एतद् इदम् अदस् द्वि किम् भवतु युष्मद् अस्मद् एते सर्वादयस्त्रिलिङ्गाः । तत्र पुँल्लिङ्गत्वे रूपनयः । सर्वः । सर्वौ ॥**

**जसी* १०३ ॥ सर्वादेरकारान्तात्परो जस् सर्व ईर्भवति ।**

ठति सर्वेत्यादि । नन्वस्मिन् ग्रन्थे नान्यत्र गणः पठ्यते । तथाहि गर्गादेर्य्यः । नडादेरायनणित्यादि । ननु पठ्यतेपि च वाहेति नचैवं सर्वः पठ्यते । सर्वोपि पठ्यते प्र परा अपेत्यादि । अस्ति तत्र पाठे प्रयोजनम् । किमुपसर्गसंज्ञाविधानं नह्यज्ञाते संज्ञिनिसंज्ञाशक्यते कर्तुम् । इहापितर्हिप्रयोजनंभविष्यति । किंविशिष्टार्थानांपाठपठितानामेवसर्वादिकार्यमिति । तथाहि सर्वेप्यसंज्ञार्थाः पठयन्ते । समोतुल्यार्थः । पूर्वादिर्व्यवस्थार्थः । व्यवस्थाच स्वाभिधेयापेक्षावधिनियमः। अन्तरमुपसंव्यानापुरवहिर्योगार्थोपि।स्वोऽज्ञातिधनाख्यार्थश्च। तथोक्तं रामचन्द्राचार्यैः-सर्वादिः सर्वनामाख्यो नचेद्गौणोथवाभिधा ॥ पूर्वादिश्च व्यवस्थायां समोऽतुल्येन्तरोऽपुरि ॥ परिधाने बहिर्योगे स्वोर्थेज्ञात्यन्यवाच्यपीति । एत इति एते त्रिलिङ्गाः सर्वादयः । नाममात्रग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाल्लिङ्गत्रयेप्येते सर्वादिकार्यं लभन्त इति तात्पर्य्यार्थः । तत्रेति । तेषु त्रिषु लिङ्गेषु सत्सु पुँल्लिङ्गत्वे पुमान्लिङ्गमेषां ते पुँल्लिङ्गास्तेषां भावस्तत्त्वं तस्मिन् रूपनयः । रूपाणां नयो रूपनयः नयनं नयः प्रापणं तच्च शब्दरूपविषयं सन्निरूपणं संपद्यते । रूपाणां नयो रूपनयः सर्वादीनां क्रियत इति शेषः । सर्वः सर्वाविति देवशब्दवत्प्रक्रिया । जसी । जस् ईइति च्छेदः । सर्वादेरकारान्तादिति । एतच्च सर्वादेः स्मडित्यतोनुवर्तत इति तत्रैव प्रतिपादयिष्यामः । ननु यद्यकारान्तादित्युच्यते तर्हि ह्रस्वेपि कृते अइए इत्येत्वे च सति न कश्चिद्विशेषः तत्किं दीर्घेण जसीत्वेन । न च ह्रस्वोयमन्तादेशः स्यात् दीर्घस्तु इश्च ईश्च ई इत्यनेकवर्णत्वेन गुरुत्वात्सर्वादेशो यथास्यादिति वाच्यम् । ह्रस्वोपि षष्ठीनिर्दिष्टत्वाभावान्नान्तादेशो भाविष्यतीति । वक्ष्यति षष्ठीनिर्दिष्टस्यादेशस्तदन्त्यस्य ज्ञेय इति । ततश्च निर्दिश्यमानस्यादेशा भवन्तीति सर्वादेश एव भविष्यति । ननु यदि नायं षष्ठीनिर्दिष्टस्तर्हि स्थान्यादेशभावप्रतिपत्तेरभावादादेश एव नायं कुतस्तरां सर्वादेशः । मैवम् । षष्ठीप्रयोगो हि स्थान्यादेशभावे षष्ठीनिर्दिष्टस्य गुरुःशिच्च सर्वस्य । ङिदन्त्यस्य । निर्दिश्यमानस्यादेशा इत्यादि व्यवहारार्थः । तत्त्वतस्तु आदेशविषये स्थानी न प्रयोज्य ईत्येतावत् । अत्राप्यकारान्तात्सर्वादेः

**सर्वे । सर्वम् । सर्वौ । सर्वान् । षुर्नो णोऽनन्ते** ✽ **१४९ ॥**
**षकाररेफऋवर्णेभ्यः परस्य नकारस्य णकारादेशो भ-**

परप्रसक्ते जस्प्रयोगे ईर्भवति ई एव प्रयोज्य इत्यर्थः । अत एवाह परो जस् सर्वईर्भवतीति । ईदृशे च स्थान्यादेशभावे नास्ति षष्ठ्यपेक्षा । सत्यामपि हि षष्ठ्यामीदृश एव स्थान्यादेशभावस्तात्त्विकः । तथाहि ब्रुवोवचिः । ब्रुवः प्रसङ्गेऽनपि वचिर्भवति वचिरेवात्र प्रयोज्य इत्यर्थः । एवमागमेष्वपि सागमकानामेव तत्र तत्र प्रयोग इति तत्त्वम् । ननु कथमेवं व्याख्यायते । शब्दानां नित्यत्वार्थम् । सत्यां ह्यादेशेन निवृत्तावागमेन च रूपान्तरापत्तौ अनित्यत्वं स्यात् । नित्याः शब्दाः शाब्दिकानाम् । तथा चोक्तं वार्तिककृता । सिद्धे शब्दार्थसम्बन्ध इति । व्याख्यातं चेदं भगवता महाभाष्यकारेण । सिद्धे शब्देर्थे संबन्धे चेति । अथ सिद्धशब्दस्य कःपदार्थः नित्यपर्य्यायवाची सिद्धशब्द इति । तदेवं ह्रस्वोप्ययं षष्ठ्यभावे स्यादेव स्थानिनिवृत्त्यै, इति किं दीर्घेण जसादेशेन । एवं तर्हि सप्तमीभ्रमव्यावृत्त्यर्थं दीर्घविधिः । ननु तदर्थमपि जसिरिति निर्देक्ष्यामः । मैवम् । एवमपि हि सूत्रे लाघवं किञ्चिदेव । आदेशस्य सान्तताभ्रमोपि स्यात् । यद्वा विभक्त्यन्तरनिर्दिष्टोप्यादेशस्तदन्त्यस्य स्यादिति ज्ञापनार्थम् । उत्तरार्थं वा दीर्घग्रहणमिति वयम् । यथास्तु तथास्तु । सर्वे इति । अनेनेत्वे पूर्वपरयोःअइए इत्येत्वम् । ननु सन्निपातलक्षणपरिभाषयादन्तत्वसन्निपातेन जातईर्नैत्वं प्रवर्तयति । मैवम् । सत्येव हि सन्निपातलक्षणो विधिरनिमित्तम् । इहतु समकालमेव पूर्वपरयोरेत्वं विधीयत इति नायमस्याविषयः । अत एवोभयेस्वरा इतिनिर्देशः । सर्वमित्यादिद्वितीयाप्राग्वत् । षुर्नो । षूच रूच ऋश्चप्लुतसात्पुरितिद्वन्द्वैकत्वेछान्दसंपुंस्त्वम् । आगमशासनस्यानित्यत्वाद्वानुमभावः परेफवर्णसान्निध्याच्च ऋरपि वर्णो गृह्यते नधातुरिति मत्वाह । षकाररेफऋवर्णेभ्यइति । यद्येवं मातॄणामित्यादावपि ऋकारैकदेशं रेफमाश्रित्य रेत्येव सिद्धं णत्वं किमृग्रहणेन । नच वाच्यं परेणस्वरांशेनव्यवधानान्नस्यादिति । अवकुप्वन्तरेपीत्यत्रान्तरेपि इति विभज्य तद्व्यवधानेपि विधानात् । अवकुप्वित्यस्ययोगस्याक्षरसमाम्नायिकैस्तत्प्रत्यायितैश्चेत्तदेभिरेवान्तरेस्यान्नान्यैरिति नियमादर्थेनेत्यादावप्रसङ्गः । ऋकारांशस्यत्वनाक्षरसमाम्नायिकत्वान्न नियमेन व्यावृत्तिस्तदेवं व्यर्थमृग्रहणमिति चेन्न । ज्ञापनार्थम् इहाक्षरसमाम्नायिकवर्णेष्ववयवस्य

**वति अन्ते स्थितस्य न भवति सर्वानित्यादौ ॥ अवकु-**

वर्णकार्य्यं न स्यादिति। तेन निपीयेत्यत्र ह्रस्वाश्रयस्तुक् न भवति। ज्ञापकात्सिद्धम्। यदयं दीर्घाच्छस्य द्वित्वं शास्ति तज् ज्ञापयति न दीर्घे ह्रस्वकार्यं स्यादिति, अन्यथा छ इत्येव सिद्धत्वाद्व्यर्थं तत् स्यात् । इह तर्हि याता यत इत्यलोपो न स्यात्। नच तपरत्वसामर्थ्यान्न भविष्यतीति वाच्यम्। तपरत्वस्य सर्वाकारलोपनिरासार्थत्वात् तन्निरासश्च परस्यलोपेकृतेतस्यतद्भावात् पूर्वलोपाभावद्वारेण । तथा पुनर्ऋषभः रिलोपोदीर्घश्चेति नस्यात्। तथा हरे इदं विष्णो उदकमित्यत्रैकारौकारयोः परांशयोरिदुतोः पराभ्यामिदुद्भ्यां परत्वादन्तरङ्गत्वाच्चसवर्णादीर्घोनस्यात्। अन्तरङ्गत्वं चावयवाश्रयस्यदीर्घस्यैव । नसमुदायाश्रययोरयवोः । अवयवप्रतिपत्तिपूर्वकत्वात्समुदायप्रतिपत्तेः । तथाचोक्तं काशिकायाम् । वर्णेषु ये वर्णैकदेशाः वर्णान्तरसमानाकृतयस्तेषु तत्कार्य्यं नेति । अथवान्यथानुपपन्नैकत्वबुद्धेरेकवर्णोच्चारणेच्छापूर्वकैकप्रयत्ननिर्वर्त्यत्वाच्चाकारादीनामिव एषामप्येकवर्णत्वमिति नरसिंहवज्जात्यन्तरत्वादवयवाभावादृकारेप्येकदेशेरेफाभावात्णत्वाप्राप्तेर्विध्यर्थमृकारग्रहणम् । इहानन्तइति नञ् प्रसज्यप्रतिषेध एवसंभवतीत्याह अन्ते स्थितस्य न भवतीति । तत्र व्याकरणस्य पदसंस्कारकत्वात्पदस्यैवान्तो नवाक्यस्येति मत्वा पदान्तमुदाहरति ॥ सर्वानित्यादाविति । उत्तरत्रसूत्रेप्यनन्त इत्यस्तीति ज्ञापनार्थमेतदुदाहृतम् । अन्यथा पितॄनित्युदाहर्त्तव्यंस्यात् । ननुचैवमपिप्रातर्नमस्तइत्यादौ पदादेर्नस्यणत्वंस्यात्। अनन्ते इतिनिषेधानुपस्थानात् । अनन्तइत्यस्यकाकाक्षिगोलकन्यायेनावृत्त्या वा पुरित्यनेनापि संबन्धात् पदान्तेभ्यः षकाररेफऋवर्णेभ्योऽपिप्रतिषेधात् । तदुक्तं, हेतौपदादेर्णत्वंस्यादनन्ते स्थानिनैवचेत् ॥ स्थानिनापिनिमित्तेन युज्यते तन्निवृत्तयइति । एतत्तुसूत्रं पितॄणामित्यादौ विध्यर्थमिति तत्रैव व्याकर्त्तव्यम् । इहतु उत्तरसूत्रेऽर्थसंगत्यर्थम् । सर्वमपिणत्वंषरेफऋनिमित्तंनव्यभिचरतीति ज्ञापनार्थं चादौव्याख्यातम् । अवकु । पूर्वसूत्रे पुरिति पञ्चमीनिर्देशान्नव्यवधानेणत्वं प्राप्नोतीति विध्यर्थमिदमारभ्यते । तत्रैवचानन्तइत्यस्य पुरित्यनेनापि सम्बन्धात् तत्संबद्धस्यैव पुरित्यस्येहानुवृत्तेः पदान्तरेऽनन्त इति निषेधादवादयः प्रत्याहारवर्गवर्णाएवगृह्यन्ते। न धातवः, नाप्यवकु अव्ययं नापिकुशब्दः, कृत्रिमत्वाच्चवर्णपराह्यवादयः कृत्रिमाः संज्ञाशब्दाः । अकृत्रिमाश्च धात्वादिप-

**ष्वन्तरेऽपि** ॥ १४६ ॥ **अवप्रत्याहारेण कवर्गेण पवर्गेण च मध्ये व्यवधानेपि भवति नान्येन । सर्वेण । सर्वाभ्याम् । सर्वैः ॥ चतुर्थ्येकवचने सर्व ङे इतिस्थिते ॥ स-**

रा इति सर्वमभिप्रेत्याह । अवप्रत्याहारेणेत्यादि । अन्तरशब्दोऽत्र मध्यवाचीत्याह । मध्यइति । अस्यार्थमाह व्यवधानेऽपीति । षकाररेफऋवर्णेभ्योऽपदान्तस्यः परस्यनकारस्यणकारादेशइति शेषः।अत्रसर्ववाक्यं सावधारणं भवतीत्येभिरेवान्तरे स्यान्नान्यैरिति सत्वाह । नान्येनेति । अवाद्यनन्तर्भूतेनेत्यर्थः । यद्येवं कथं प्रेङ्खणं प्रोम्भणमितियावताअवाद्यनन्तर्भूतोऽनुस्वारः । नन्वनन्तर्भूतत्वमुष्मिन्नत्रनस्याक्षिप्तपदत्वात् । तथाहि । अत्रसूत्रेऽनन्तइत्यनुवर्त्तते अवकुप्वितिलुप्तषष्ठीकं पृथगेव पदम् । तेनायमर्थः अनन्ते स्थितानामवादीनामन्तर इति ततश्च भिन्नपदे हरे नमस्ते इत्यादौ नभवति एवमिहापि नस्यात् । प्रेङ्खणं प्रोम्भणमिति । नैष दोषः इदंह्येकमेवपदम् । तथाहि । प्रकृष्टमिङ्खनंप्रेङ्खणं प्रकृष्टमुम्भनप्रोम्भणमिति नाम्नश्चकृतेति समासेतज्जातयाविभक्त्याणत्वंप्रतिसमासापेक्षमैकपद्यमेवाश्रीयते । अन्तर्वर्त्तिन्याविभक्त्यापदान्तरत्वंतुसदप्यनाश्रितत्वादकिञ्चित्करम् । यथागृहंसंमार्ष्टीत्यत्रकर्म्मत्वमाश्रितम् । एकवचनंतु तदप्यनाश्रितत्वादकिञ्चित्करम् । अतएववक्ष्यति समासेकचिदैकपद्यं णत्वहेतुरिति । तदेवमनुस्वारस्यावादिष्वनन्तर्भावादेवात्रणत्वं नस्यात् । यथाप्रेन्वनमित्यत्र नकारस्येति चेदुच्यते । माभूदनुस्वारान्तरे । तस्यतुयमायपेस्येति ङकारमकोरचयमादेशेकृते अवकुप्वन्तरइत्येवंभविष्यति । नच वाच्यं कुर्वन्तीतिवदसिद्धपरिभाषयायमादेशस्य णत्वम्प्रत्यसिद्धत्वं तस्यसमासात्प्रागुजत्वेनान्तरङ्गत्वात् । बहिरङ्गत्वाच्च समासोत्तरकालजत्वेन णत्वस्य अतः सुष्ठूक्तं नान्येनेति । अवकुप्विति किम् अर्थेन । पुरित्येव भानुना । अनन्तइत्येव सर्वान् । सर्वेणेति पूर्ववत्सर्वशब्दाज्जातस्य तृतीयैकवचनस्य टेनेतीने अइए इत्येत्वे सत्यनेनणत्वे कृते एवं स्यादित्यर्थः । द्विवचनबहुवचनयोर्देववत् प्रक्रिया । चतुर्थ्येकवचनइति । एवं तुविशेषविहितात्स्मडागमात्प्रागगागमोनास्तीतिप्रदर्शनार्थमुक्तम् । सर्वादेः । अत्रचादभीत्यतोऽदितिप्रथमान्तमप्यनुवर्त्तमानंसर्वादेरिति पञ्चम्यासमानाधिकरणत्वात्पञ्चम्यन्तं स्यात् । सर्वादेरत इति । तत्राकारमात्रत्वं

**र्वादेः स्मट् ॥ १०० ॥ सर्वादेरकारान्तात्परस्य चतुर्थ्येकवचनस्य स्मडागमो भवति । एऐऐ । सर्वस्मै ।**

सर्वादेर्न संभवति अस्मैइत्यादौसंभवदपिसर्वादिकार्य्योत्तरकालजत्वादकिञ्चित्करम् । अतः सामर्थ्यादकारेणतदन्तविधिःस्यात् । अथवासर्वादेरिति षष्ठ्यन्तं संबध्यते । आदिति प्रथमापि परस्य प्रत्ययस्य कार्य्यविधानात्पञ्चमी भवति सर्वादेरकारात्परस्येतियोहिसर्वादेरकारात्परः प्रत्ययः अर्थादसावकारान्तात्सर्वादेः परइत्यभिप्रायेणाह सर्वादेरकारान्तात्परस्येति । चतुर्थ्येकवचनस्येति । ङेअगित्यतोऽनुवृत्तस्य ङेइत्यस्येत्यर्थः । एऐऐइति । अनेन स्मटिकृते ऐत्वमेव भवति नतन्निमित्तोऽगागम इत्युक्तं भवति । पूर्वमेव स्मटाबाधितत्वादिति भावः । अथवा ङे अगित्यत्र नाम्नोऽतइत्यनुवर्त्तते स्मट् । आगमायद्गुणीभूतास्तद्ग्रहणेन गृह्यन्तइतिङे इत्यस्याङ्गम् । ननाम्नइति । अतएवायं पूर्वान्ते न कृतः । सर्वस्माइति । स्मटिटित्त्वान्ङेइत्यस्यादौ कृते ऐत्वे चैवंस्यादित्यर्थः । अथेह कस्मान्नभवति । प्रियः सर्वो यस्य स तस्मै प्रियसर्वायेति । उच्यते । इहसर्वादेरिति षष्ठी ङेइत्यमुनासंबध्यते । सर्वादेर्ङेइति । सर्वादेरेकत्वे वाच्ये विहितस्य ङेइत्येतस्येत्यर्थः । अत्रतुसर्वाद्येकत्वेन ङेविधीयते किं तर्हि बहुव्रीहौ । सह्यन्यपदार्थप्रधान इति सर्वादीनां गौणत्वमिति नदोषः । एवं द्वन्द्वेऽप्युभयपदप्राधान्यान्नसर्वादिकार्य्यम् । यत्रतु सर्वादीनां प्राधान्यं तत्रस्यादेव समासे सर्वादिकार्य्यं परमसर्वस्माइति । नन्वेवमपिसर्वोनामकश्चित्तस्मै सर्वायेत्यत्र प्राप्नोति । न सर्वादेरित्यत्र सर्वआदिर्यस्यासौतस्यसर्वादेरित्यादिशब्दोयं व्यवस्थार्थः सर्वादिगणेपठितानेव सर्वादीनाह । प्रकारार्थे त्वमुष्मिन्सकलायकृतस्नायेत्यादावपि प्राप्नोति । गणपाठानुपपत्तिश्च । गणेतु विशिष्टार्थाः पठ्यन्ते इत्युक्तम् । अत एवाव्यवस्थायांपूर्वायतुल्यार्थे समाय पुरिअन्तरायैनगर्य्यै मध्येन्तराय धनेज्ञातौ च स्वायेत्यादौ सर्वत्र सर्वादिकार्य्यं न भवति नाम्निच सर्वत्रापि । नन्वेवमपि सर्वशब्दस्य नस्यात् बहुव्रीहेरन्यपदार्थप्राधान्याद्वृत्तेरकार्य्ययोगात् । यथाबहुधनमानयेति न बहोर्धनस्यानयनं किंतु तद्वतः । युक्तं चैतत् यत्रस्वस्वामिसंबन्धः षष्ठ्यर्थः यथा गोमन्तमानयेति न गवानयनं किंतुतद्वतः स्यादेवहि । देशान्तरस्थेपि स्वस्वामिभावः दूरस्थेपि पुरुषेप्रयुज्यते एवं राज्ञः सपुरुषइति यत्रतुसंयोगः स समवायो

**सर्वाभ्याम् । सर्वेभ्यः । पञ्चम्येकवचने सर्व अदिति स्थिते ॥ अतः *॥ १०३ ॥ सर्वादेरकारान्तात्परस्यातः स्मडागमोभवति ॥ सर्वस्मात् । सर्वाभ्याम । सर्वेभ्यः। सर्वस्य । सर्वयोः॥ सुडामः * ॥ १०४ ॥ सर्वादेः परस्यामः सुडागमो भवति ।**

वा षष्ठ्यर्थः स्यादेव तत्र स्वसामर्थ्याद्वृत्तेरपि कार्य्ययोगः । यथा पीताम्बरं लम्बकर्णं चानयेत्यम्बरकर्णयोरप्यानयनम् । न हि वियुक्ताम्बरकर्णयोरप्यानयनं नहि वियुक्ताम्बरकर्णे एवमुच्यते यथानोच्यते । दूरस्थे दण्डे दण्डीति विषाणे विषाणीति अतएवायं तद्गुणसंविज्ञानोबहुव्रीहिरुच्यते । तस्यान्यस्य पदार्थस्य गुणोवृत्तिपदार्थः सोपि कार्य्यी संविज्ञायतेयस्मिन्निति व्युत्पत्त्याप्राग्निरूपितस्त्वतद्गुणसंविज्ञानः अतोवैपरीत्यात् एवं स्थिते सर्वादेरित्यत्रावयवार्थेनादिशब्देनतद्गुणसंविज्ञाने बहुव्रीहौ उद्भूतावयवभेदः समुदायः समासार्थः । सच समुदायो युगपल्लक्ष्ये नास्तीति अन्तर्भूताः कार्य्यं भजन्तइति स्यादेव विश्वस्सर्वस्यापि कार्य्ययोगः । स्यादेवहि यथादेवदत्तशालायां ब्राह्मणानयने देवदत्तस्यापि ब्राह्मणस्य स्वशालास्थस्य सतः आनयनम् । तदेवं सर्वत्रापि सर्वादिकार्य्यं ज्ञेयम् । अथवावास्त्वित्यतोमण्डूकप्लुत्यावानुवृत्तेरुक्ता व्यवस्था कर्त्तव्या * । निविष्टः शास्त्रग्रहणे सुस्वरः पण्डितान्नरान् ॥ माधवोयुक्तिकुसुमैरानन्दयति कामिनः * । सर्वाभ्यामिति प्राग्वत् । पञ्चम्येकवचनइति । एतत्तु जसेरति कृते वक्ष्यमाणं सूत्रं प्रवर्त्तते तत्र तथा निर्देशादिति ज्ञापनायोक्तम् । अतः । इहातइति नाकारस्य ग्रहणमङ्गीत्यतोनुवृत्त्यैवसिद्धेः । न च वाच्यं तत्सर्वादिसंबद्धामिति विभक्तिविशेषणायेदंस्यात् सर्वादेरकारान्तात्परस्य विभक्तेरकारस्येति एवमपि तपरत्वस्यानुपपत्तेः । न च षष्ठीबहुवचनव्यावृत्त्यर्थं तत्स्यात् तत्र परत्वात्सुटिकृते नहिद्वयोरादिलिङ्ग्योःसमुच्चयोघटत इति स्मटः प्राप्त्यभावात् । सुटाव्यवधानाच्च । अतः सामर्थ्याल्लाक्षणिकस्यापि जसेरत एवग्रहणमिति मत्वाह । परस्यातइति । अन्यथाकारस्येवावक्ष्यत् । सर्वस्मादिति । स्मटिकृते सवर्णेदीर्घः । सर्वाभ्यामित्यादि । ओसन्तं प्राग्वत् । सुडा । आमत्र यथा षष्ठीबहुवचनमेव गृह्यते तथा नुडामइत्यत्र प्रत्यपादि । इहात इत्यनुवर्त्तते तेन सर्वं कुर्वन्तीति सर्वयन्तीति णिर्डित्करण इति णिःटिलोपः सर्वयन्तीति क्विप् णेरिति णिलोपः सर्वः तेषां सर्वामित्यत्र सुड्न भवति । यद्येवं स-

**उकार उच्चारणार्थः । सर्वेषाम् । ङि स्मिन् *१०२॥ सर्वादेर-कारान्तात्परो ङिस्मिन् भवति । सर्वस्मिन् । सर्वयोः । सर्वेषु । हे सर्व । हे सर्वौ । हे सर्वे । एवं विश्वादीनामेकशब्द-पर्य्यन्तानां रूपं ज्ञेयम् । डतरडतमौ विहाय, तौ प्रत्ययौ ।**

र्वासामित्यत्रापि नस्यात् । मा भूदमुनापरेणत्वाप इति सूत्रेणभविष्यति । तस्यचाय-मर्थः । आपः आबन्तात्सर्वादेः परस्यामः सुडागमो भवति सर्वासामिति । तथाचसूत्रपाठः सुडामः आपः यटोच्चेति । ननुचात्रात इति मानुवर्त्तिष्ट मा-रभ्यतां चाप इति सूत्रमविशेषाच्च सुडामइत्येव सर्वासामित्यत्रापि सुड्भवि-ष्यति सर्वंकुर्वतां सर्वामित्यत्र तु गौणत्वान्नभविष्यतीति सत्यमुत्तरार्थं चापइत्य-वश्यंकर्त्तव्यं यटोच्चेत्याबन्ताद्यथास्यात् । अन्यत्र मा भूदिति नैतदस्ति प्रयोजनं यट इति हि तत्रवर्त्तते यडाबन्तादेवविधीयत इति सुडपि तत एव भविष्यति । एवं तर्हि अच्चेत्यत्वमापएवयथास्यादन्यस्य माभूत् अतएव यटोच्चेत्यत्र वक्ष्यति पूर्वस्य चापोकार इति । एवमेतदर्थं कर्त्तव्यमिहैवक्रियते । सुडामइत्यत्रातइ-त्यनुवृत्तिर्दुर्वारेति सर्वासामित्यत्रापि सुट् यथा स्यादिति तत्रादोषादाचार्य्योयोगद्व-यमपि सहव्यापिचिख्यासुरतइत्यनुवृत्तिमनादृत्याह सर्वादेः परस्यामइति । अत एव च सर्वाशब्देवक्ष्यति । आमितुसुडागम इति । सुट् उरुच्चारणार्थः । टो देशविध्यर्थः। सर्वेषामिति । अनेन सुटिएस्भीत्येत्वेकिलादिति षत्वम् । ङि । ङकारो जसीत्वक्लीबे-ष्वव्यावृत्त्यर्थः । न च विधिसामर्थ्यात्तद्व्यावृत्तिः विधेः स्मिन्नर्थत्वात् । औजसोर्हि स्मिनिगौरवप्रसङ्गात् । इत्स्मिन्निति कृते कृत्रिमत्वादित्संज्ञकस्यैवग्रहः स्यात् अस्तुक-स्यापि स्मिनस्तद्भावेनलोपः स्यात् इति विधिसामर्थ्यात्सप्तम्येकवचनस्यैव ग्रहणं भविष्यति । एवं तर्हि स्पष्टार्थोऽयम् । सर्वस्मिन्निति । अनेनात्र स्मिन् शेषं देववत् । सं-बोधनेतु जसि हे सर्वे । एवमिति। विश्वैकशब्दाद्यन्तावयवानामुभयप्रभृतीनामपि स-र्वादित्वात्सर्वशब्दवद्रूपाणि ज्ञातव्यानीत्यर्थः।उभशब्दस्यतुविशेषं वक्ष्यति । उभयश-ब्दस्यापि तत्रैव वक्ष्यामः।नन्वत्र पठितयोर्डतरडतमयोः प्रत्ययस्य च केवलस्य प्रयो-गाभावात्सर्वादिकार्य्यस्य च प्रयोगशरणत्वात्कथं तद्वद्रूपं स्यादित्याशङ्क्याह।डतरेति।

**पूर्वः । पूर्वौ ॥ पूर्वादीनां तु नवानां जसीकारो वा वक्तव्यः ॐ ॥ पूर्वे । पूर्वाः । परे । पराः । इत्यादि ॥ ङसिङ्योः स्मात्स्मिनौ वा वक्तव्यौ ॐ ॥ पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे इत्यादि ॥ प्रथमचरमतयायडल्पार्द्धकतिपयनेमानां जसी वा ॥ प्रथमे । प्रथमाः । शेषं देववत् । नेमे नेमाः । शेषं सर्ववत् । तयायडौ**

तौपरित्यज्य विश्वादीनामेवं रूपं ज्ञेयमिति संबन्धः । तत्रहेतुगर्भं विशेषणमाह । ताविति । द्वयोर्बहूनां चैकस्येति विधास्यमानावित्यर्थः । यद्येवं किमर्थस्तयोरत्रपाठः। उच्यते । प्रत्ययग्रहणपरिभाषाया ज्ञापनार्थः । तेनतदन्तानां कतरादीनां सर्ववद्रूपं स्यादिति सिद्धम् । पूर्वादीनामिति । तुर्विशेषे । एषां सर्वादित्वेपि विशेषइत्यर्थः । सच जसीत्वविकल्पादिः पूर्वपरावरदक्षिणोत्तरापराधरस्वअन्तरइत्येतेषां नवानां गणपठितानां जसीति विधीयमान ईकारो विकल्पेन स्यादिति वक्तव्यमित्यर्थः। प्राप्तविकल्पश्चायामिति गौणत्वेप्रियपूर्वाइत्येव पूर्वादीनामिति षष्ठयाविभक्त्यासंबन्धाद्वा । एवं ङसिङ्योरपि । प्रियपूर्वाःप्रियपूर्वे इत्येव । पूर्वइति । जसीत्वेएत्वम् । पूर्वाइति जसीत्वाभावपक्षे दीर्घविसर्गौ । परे परा इति प्राग्वत् । इत्यादीति आदिनाअवरेअवरादक्षिणे दक्षिणाः उत्तरेउत्तराः अपरे अपराः अधरे अधराः । स्वेस्वाः आत्मीयाइत्यर्थः । अन्तरे अन्तराः शाटकाः परिधानीयाइत्यर्थः । ङसिङ्योरिति । अधिकारात्पूर्वादीनामेव । ङस्यल्पस्वरत्वेपि क्रमार्थं परत्वम् । पूर्वस्मादिति । स्मात्पक्षे पूर्वादिति । तदभावे । ङसेरतिद्धिः । पूर्वस्मिन्निति स्मिन्पक्षे । पूर्वेइति । तदभावे एत्वम् । इत्यादीति । आदिनापरस्मात् परात् परस्मिन्परेइत्यादि शेषं रूपमेषां सर्वादित्वात्सर्ववत् । प्रथमेति तत्रप्रथमादीनां नेमान्तानां द्वन्द्वे आभिनुटिदीर्घेचकृते रूपं नेमानामिति । नेमस्य सर्वादित्वेपि सुडभावस्सर्वादेःस्मडित्यत्र प्रत्यपादि । जसीवेति । कतिपयान्तानामसर्वादित्वात् पाक्षिको विधिः । नेमस्य तु प्राप्तविकल्पः । प्रथमे इति इत्वपक्षे । प्रथमा इति तदभावे । शेषमिति । जसोन्यत्र एषां कतिपयान्तानां रूपम् । नेमस्यतु सर्ववत् सर्वादित्वात् । तयायडाविति । सङ्ख्यायाविधास्यमानावित्यर्थः । अत्र तु तदन्तानां ग्रहणार्थः पाठः ।

**प्रत्ययौ ॥ तीयस्य सर्ववद्रूपं ङित्सु वा वक्तव्यम् ॥ । द्वितीयस्मै । द्वितीयाय । द्वितीयस्मात् । द्वितीयात् । द्वितीयस्मिन् । द्वितीये । शेषं देववत् । एवं तृतीयः मासस्यालोपो वा । माः । मासौ । मासः । मासम् । मासौ । मासः ।**

तेन द्वितीयेद्वितीयाइति सिध्यति । तीयस्येति । तीयप्रत्ययान्तस्येत्यर्थः । सर्वस्येव । सर्ववत् । ङइद्येषां ते तेषु ङेङसिङस्ङिषु । तथा सर्वस्यरूपं सर्वस्मादित्यादि तथाऽस्यापिद्वितीयस्मादित्यादि पक्षे स्यादिति वक्तव्यार्थः । ननु च प्रत्यक्षविरुद्धमेतत्कथं यावता नायं सर्वादिरूपं च सति सर्वादिकार्य्ये स्मडादौ तथा स्यात् नच सर्वादित्वमतिदिश्यते । किंच रूपातिदेशे अतिद्वितीयायेत्यादावपि तद्वद्रूपं स्यात् । अस्तु अतिसर्वायेतिवद्भविष्यति । नदुर्लभो ह्ययमर्थः तस्मादिदमेव योज्यं तीयस्येति रूपं स्वरूपं तीयइति तत्सर्ववत् सर्वेण तुल्यं रूपस्यरूपेणैव साम्यमिति सर्वइति रूपं यथा सर्वादितद्वद्द्वितीय इत्यपि ङित्सु वाच्यमिति । एतेनास्यापि सर्वादित्वसिद्धेर्नोक्तदोषप्रसङ्गः । तथाचोक्तं रामचन्द्राचार्यैः । तीयस्य ङित्सु सर्वनामता वाच्येति । द्वितीयस्मा इति । सर्ववद्भावपक्षे स्मडादि । द्वितीयायेति । तदभावपक्षेऽगादि । एवं द्वितीयस्मादित्यादावपि । सर्ववद्भावपक्षे सर्ववत् तदभावेच देववत् प्रक्रिया ज्ञेया । शेषमिति । ङिद्वचनानि वर्जयित्वेत्यर्थः । एवमिति । तीयप्रत्ययान्तत्वसाम्याद्द्वितीयवत्तृतीयोपि साध्य इत्यर्थः । पटुः प्रकारः पटुजातीय इत्यस्य प्रत्ययावयवतीयस्यानर्थकत्वादर्थवद्ग्रहणपरिभाषया नेह ग्रहणम् । मासस्येति । अस्य लोपः अलोपः लोपोऽदर्शनमप्रयोग इति यावत् । मासशब्दान्ताकारस्य वा लोपः । प्रयोगाधिकाराद्विभक्तौ परतः स्यादिति वाच्यम् । सान्त एवायं पक्षे प्रयोज्य इत्यर्थः । अलोपे हि तस्य तद्वद्भावात् सिलोपादि न स्यादिति । मा इति । सान्तपक्षे हसेपः सेरिति लोपे सस्य विसर्ग एवं स्यादित्यर्थः । मासावित्यादि टापर्य्यन्तं सान्तपक्षे श्लिष्टोच्चारणं कर्तव्यम् । माभ्यामिति । सस्य विसर्ग आदबइति तल्लोपः । इत्यादीति । आदिना माभिः । मासे माभ्यां माभ्यः । मासः माभ्यां माभ्यः । मासः मासोःमासां मासि मासोः मास्सु इतिपक्षे इति सान्ताभावपक्षे इत्यर्थः । मासइत्यादि प्रक्रिया तु देववत् । इत्यादिशेषमिति । द्वितीयतृतीयान्तव्यतिरिक्तं शेषं मासेन मासाभ्यां मासैरित्यादि देववत्स्यादित्यर्थः । प्रक्रिया तु सर्वापि देववद्देवादन्तत्व

मासा माभ्यामित्यादि । पक्षे मासः । मासौ । मासाः । मासम् मासौ मासानित्यादि शेषं देववत् । उभशब्दो नित्यं द्विवचनान्तः । उभौ २ उभाभ्याम् ३ उभयोः २ । आकारान्तः सोमपाशब्दः । सोमपाः । सोमपौ । सोमपाः । अधातोरिति विशेषणार्द्धलोपो नास्ति। हे सोमपाः । सोमपाम् । सोमपौ । बहुवचने सोमपाअस् इतिस्थिते । आतोधातोर्लोपः ❀१६२

साम्यात् । उभशब्द इति । नित्यं द्विवचनान्त इति । नित्यपदेनाबन्तोप्यापासह दीर्घे यन्मध्ये पतितस्तद्ग्रहणेन गृह्यते इत्यापोप्युभग्रहणेनैव ग्रहणात्तथा स्वार्थिकानामप्यर्थाभेदात् प्रकृत्यन्तरभूतत्वेनोभकाविति कप्रत्ययान्तोपि द्विवचनान्तत्वं न व्यभिचरति लुप्ते च द्विवचने न प्रयोज्य इत्युक्तं भवति । अतएवोभयपुत्र इत्यादौ तत्पर्यायः उभयशब्दःप्रयुज्यते नोभशब्दः शब्दशक्तिस्वाभाव्यात् । यथोभयशब्दस्य द्विवचनान्तस्याप्रयोगः तस्य नित्यमेकवचनबहुवचनविषयत्वात् । तथा चोक्तं महाभाष्ये। यदा पुनरयमुभशब्दो द्विवचनेकविषयः क इदानीमस्यायच् भवति उभयोन्यत्र उभयशब्दोन्यत्र भवति उभये देवमनुष्याः उभयोमणिरिति । उभावित्यादिदेववत्प्रक्रिया। एवमेतस्यास्तु द्विवचनान्तत्वात् सर्वादिकार्याणां चैकवचनबहुवचनविषयत्वात् सर्वादिषुपाठः शास्त्रस्यप्रयोगानुसारित्वात् सर्वादिभ्यो हेतुप्रयोगे तृतीयांज्ञापयति । इदानीं क्रमप्राप्तानादन्तानाह । आकारान्तइति । एतत्तुक्रमदर्शनार्थमुक्तम् । सोमपाइति । सोमंपिबतीति क्विप्तस्य कृत्त्वात्कृत्तद्धितेति नामत्वाज्जातस्यसेः स्रोर्विसर्गः । अधातोरितीति । सामानाद्धेरित्यत्र । बहुवचनइति । द्वितीयायाइतिशेषः । असितीति । शस्येत्त्वाल्लोपेसतीत्यर्थः । आतो । आकारमात्रस्यधातोः शसादौकचिदप्यभावादातोधातोरिति व्यधिकरणषष्ठ्यौ । तत्रात इतितुस्थानषष्ठी धातोरित्यवयवषष्ठी । तेनायमर्थः धातोरवयवस्यातो लोपइति । अतएवार्थवद्ग्रहणपरिभाषापितत्रन प्रवर्त्तते इति मत्वाह । धातुसंबन्धिन इति । धातुः संबन्धी अवयवी यस्यतस्यधातोरवयवभूतस्येत्यर्थः । अथवाधातूनां समवायसंबन्धवतोऽवयवस्येत्यर्थः । सोमपइत्यादिस्वरेसर्वत्रलोपः । एवमिति । कीलालपादयोपि धातुजाएवं स्युरित्यर्थः । धातोः किम्, हाहान् । उक्तञ्च । हाहाहूहूस-

धातुसंबन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे सोमपः । सोमपा । सोमपाभ्याम् । सोमपाभिरित्यादि । एवं कीलालपाशङ्खध्माप्रभृतयः । इकारान्तो हरिशब्दः । प्रथमैकवचने । हरिः । औयू* ११८ ॥ इकारान्तादुकारान्ताच्चपर औयू आपद्यते ईऊ भवतः । हरी । एओजसि* १२१। इकारान्तस्योकारान्तस्य च जसि परे एकार ओकारश्च

स्वस्तस्यशसिहाहा नधातुतः । ङयिहाहैओसिहाहौरामिहाहांगुणश्चङाविति ॥ गुणः एत्वम् । अथेदन्तान्वक्तुमाह । इकारान्तइति । प्रथमैकेति । हरिरिति । एतेनात्र-वक्ष्यमाणविशेषाभावं दर्शयति । औयू । अत्रनाम्न इदुद्भ्यामित्यनुवृत्तेर्नाम्न इकारो-काराभ्यामित्यर्थः स्यात् । योहिनाम्नइकारोकाराभ्यांपरः अर्थादिकारान्तादुकारान्ता-च्चं परइतिमत्वाह । इकारान्तादुकारान्ताच्चपरइति । नाम्नइतिशेषः । तत्रौकारस्यस्था-निनोद्विमात्रत्वादादेशयोरपि ह्रस्वयोः सावर्ण्यात् गृहीतदीर्घयोरेवसिद्धत्वाद्भाव्य-मानः स्वरः सवर्णान्नगृह्णातीतिज्ञापनार्थंदीर्घयोर्विधानमितिमत्वाह ईऊभवत इति । तेनधीरिरित्यादौ दीर्घस्याग्रहणम् । अथवाह्रस्वादेव पूर्वप्रकृतेरिदुद्भ्यां कृतसवर्णदीर्घा-वीऊभवत इत्यर्थः । अत्रपक्षेभाव्यमानस्यसवर्णाग्रहणे मादूइति उभयोरूकारो-कारयोर्निर्देशोज्ञापकः । एओ । अत्रेदुद्भ्यामित्यनुवर्त्तमानंपञ्चम्यन्तमप्यर्थात्षष्ठ्यन्तं स्यादिति मत्वाह । इकारान्तस्येति । अत्र लाघवार्थं गुणो जसीति वाच्येऽसा-वर्ण्यादरोऽप्रसङ्गेपि एओग्रहणं संज्ञापूर्वकस्य विधेरनित्यत्वज्ञापनार्थम् । तेन कनयतीत्यत्र नोपधावृद्धिः । हरय इति । अनेनैत्वेऽयादेशे चैवं स्यादित्यर्थः । धौ । ननु चायं पूर्वेण सह एओ धिजसोरित्येकयोगः क्रियतां किं पृथग्योगकरणेन । उच्यते । एवं ह्युच्यमाने एदोतोरिदुद्भ्याभिवधिजस्भ्यामिति क्रमः स्यात् । ततश्चे-दन्तस्य धावेकारः उदन्तस्य जस्योकार इत्यर्थः स्यात् । पृथग्योगे तु नैष दोषः । अन्यच्च धिजसोरित्युच्यमानेजसीव धौ परे एओ स्याताम् । पश्चाच्चासमानत्वान्न धिलोप इति श्रवणप्रसङ्गः । पृथग्योगे तु विषयसप्तमीयामिति लुप्तेपि धौ तद्विषयस्य सत्त्वात् एओस्त इति न कश्चिद्दोष इति सर्वमालोच्याह । इकारान्तस्येत्यादि ।

भवति हरयः ॥ धौ * १२२ । इकारान्तस्योकारान्तस्य च विधिषये एकार ओकारश्च भवति। हे हरे। हे हरी। हे हरयः। हरिम्। हरी । हरीन् । टानाऽस्त्रियाम्* १२० । इकारान्तादुकारान्ताच्च परष्टा ना भवति अस्त्रियां विषये। हरिणा। हरिभ्याम्। हरिभिः ॥ ङिति * १२३ ॥ इकारान्तस्यौकारान्तस्य च ङिति परे एकार ओकारश्च भवति। हरये।

अनन्यभावो विषयः । हे हरे इति । सर्वविधिभ्यो लोपविधिर्बलवानिति प्राक्समानाद्धेरितिलोपः ततएत्वम् ननु कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वमेत्वं स्यात् । नैवम् । विषयसप्तम्या इदमेव फलं यत् प्राग्लोपो भवतीति।हे हरी इति । औजसोः प्राग्वत् । हरिमिति । अमृशसोरिति लोपः औप्राग्वत् । हरीनिति । अमृशसोरित्यलोपे सोन इति नत्वे शसीति दीर्घत्वे एवं स्यादित्यर्थः । टाना । अत्र स्त्रिनेति निर्देशादस्त्रियामिति प्रश्लिष्टो नञस्तीति मत्वाह । अस्त्रियां विषये इति । किमर्थमिदमुच्यतेऽस्त्रियामिति नापुंसीत्युच्येत । क्लीबेपीष्टत्वात् अमुनेति । नन्वत्र नामिनः स्वरे इति नुमि नाभावेपि समानमेवेति नुमेवास्तु । नैवम् । असति अस्त्रियां ग्रहणेऽमुनेत्यत्रादसष्टाप्रत्ययेत्यदात्यत्वे मत्वे च अमटेति स्थिते परत्वान्नित्यत्वाच्च मादू इत्युत्वं प्राप्नोति । प्रकृतिप्रत्ययाश्रितत्वेनान्तरङ्गत्वादिनादेशश्च तत्र बलीयस्त्वादिनादेश एव स्यात् । यत उक्तम् । परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव । नित्यान्तरङ्गोपगमेन्तरङ्गस्तस्माद्विधिः प्रातिपदो बलीयानिति । अत एव वक्ष्यति अद्वीत्यात्वं पश्चादूकार इति । तदेवमिनादेशे एत्वे पश्चादुत्वे चामुनेति स्यात् इति कुत्र नुम् स्यात् । कुत्रतराञ्च नाभावः । सति पुनरस्त्रियां ग्रहणे क्लीबे नुमा बाधितसकलविषयो नाभावः । स्वसामर्थ्यात्तुदुर्बलमप्युत्वंप्रवर्त्यंप्रवर्त्तते । तदेवंक्लीबेप्राक्प्रवृत्त्याजातबलमूत्वं पुंस्यपि प्रागेव प्रवर्तते ततो नाभावः । अतएव वक्ष्यति । मत्वे उत्वे च कृतेटानास्त्रियामिति हरिणेति । अकुप्वीति णत्वम् । ङिति । ङ्इद्यस्यासौ ङित्तस्मिन् । ङे ङसि ङसूङिप्रत्यये इत्यर्थः । एकार ओकारश्चेति । एओ जसीत्यतोनुवर्तमानावित्यर्थः । हरये इति । अनेनैत्वेऽयादेशः । ङस्य अत्रेदोत इत्यत एदोतावकारश्चानुवर्तते । सूत्रे च ङस्येति ङसिङसोर्ङकारेण सामान्यनिर्देशः ।

भवति हरयः ॥ धौ * १२२ । इकारान्तस्योकारान्तस्य च विधिषये एकार ओकारश्च भवति।हे हरे। हे हरी। हे हरयः । हरिम् । हरी । हरीन् । टानाऽस्त्रियाम् * १२० । इकारान्तादुकारान्ताच्च परष्टा ना भवति अस्त्रियां विषये। हरिणा । हरिभ्याम् । हरिभिः ॥ ङिति * १२३ ॥ इकारान्तस्यौकारान्तस्य च ङिति परे एकार ओकारश्च भवति । हरये ।

अनन्यभावो विषयः । हे हरे इति । सर्वविधिभ्यो लोपविधिर्बलवानिति प्राक्समानाद्धेरितिलोपः ततएत्वम् ननु कृताकृतप्रसङ्गित्वेन नित्यत्वात् पूर्वमेत्वं स्यात् । नैवम् । विषयसप्तम्या इदमेव फलं यत् प्राग्लोपो भवतीति।हे हरी इति । औजसोः प्राग्वत् । हरिमिति । अम्शसोरिति लोपः औप्राग्वत् । हरीनिति । अम्शसोरित्यलोपे सोन इति नत्वे शसीति दीर्घत्वे एवं स्यादित्यर्थः । टाना । अत्र स्त्रिनेति निर्देशादस्त्रियामिति प्रश्लिष्टो नञस्तीति मत्वाह । अस्त्रियां विषये इति । किमर्थमिदमुच्यतेऽस्त्रियामिति नापुंसीत्युच्येत । क्लीबेपीष्टत्वात् अमुनेति । नन्वत्र नामिनः स्वरे इति नुमि नाभावेपि समानमेवेति नुमेवास्तु । नैवम् । असति ह्यस्त्रियां ग्रहणेऽमुनेत्यत्रादसष्टाप्रत्ययेत्यदात्यत्वे मत्वे च अमटेति स्थिते परत्वान्नित्यत्वाच्च मादू इत्युत्वं प्राप्नोति । प्रकृतिप्रत्ययाश्रितत्वेनान्तरङ्गत्वादिनादेशश्च तत्र बलीयस्त्वादिनादेश एव स्यात् । यत उक्तम् । परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव । नित्यान्तरङ्गोपगमेन्तरङ्गस्तस्माद्विधिः प्रातिपदो बलीयानिति । अत एव वक्ष्यति अद्भीत्यात्वं पश्चादूकार इति । तदेवमिनादेशे एत्वे पश्चादुत्वे चामुनेति स्यात् इति कुत्र नुम् स्यात् । कुत्रतराञ्च नाभावः । सति पुनरस्त्रियां ग्रहणे क्लीबे नुमा बाधितसकलविषयो नाभावः । स्वसामर्थ्यात्तुदुर्बलमप्युत्वंप्रवर्त्स्यंप्रवर्त्तते । तदेवंक्लीबेप्राक्प्रवृत्त्याजातबलमूत्वं पुंस्यपि प्रागेव प्रवर्तते ततो नाभावः । अतएव वक्ष्यति । मत्वे उत्वे च कृतेटानास्त्रियामिति हरिणेति । अकुप्वति णत्वम् । ङिति । ङ्इद्यस्यासौ ङित्तस्मिन् । ङे ङसि ङस्ङिप्रत्यये इत्यर्थः । एकार ओकारश्चेति । एओ जसीत्यतोनुवर्तमानावित्यर्थः । हरये इति । अनेनैत्वेऽयादेशः । ङस्य अत्रैदोत इत्यत एदोतावकारश्चानुवर्तते । सूत्रे च ङस्येति ङसिङसोर्ङकारेण सामान्यनिर्देशः ।

तैरेव च सूत्रैः सिध्यन्ति । भानुः । भानू । भानवः । हे भानो । भानुम् । भानू । भानून् । भानुना भानुभ्याम् । भानुभिः । भानवे । भानुभ्याम् । भानुभ्यः । भानोः २ । भान्वोः२।भानूनाम् । भानौ । सखिशब्दस्य भेदः ॥ सेर्डाऽधेः ❀ १७५ ॥ सखिशब्दस्य सेरधेर्डा भवति । डित्त्वाट्टिलोपः । सखा । अधेरिति विशेषणादेकारो धिविषये । हे सखे ॥ ऐ सख्युः ❀ १७४ ॥ सखिशब्दस्यैकारादेशो भवति पञ्चसु परेषु । ❀ षष्ठीनिर्दिष्टस्यादेशस्तदन्त्य-

केनप्रकारेण हरिशब्दवत्प्रक्रियेति यावत् । उकारान्तश्चेति । चशब्दउकारान्तत्वेप्येतामुक्तप्रक्रियां समुच्चिनोति । अतआह । एतैरेवेति । तथोदाहरति भानू इति । औयूइत्यूत्वेसवर्णेदीर्घः । भानवइति । एओजसीत्योकारस्यावादेशः । हेभानोइति । धिलोपेसतिधावित्योकारः। भानुनेतितृतीयैकवचनस्यटानास्त्रियामितिनादेशः ।भानवेइति । ङयिङितीत्योकारस्याव् । भानोरिति । ङसिङसोर्ङितीत्योकारे ङस्येत्यलोपः । भानाविति । सप्तम्येकवचनस्य ङेरौडित्यौत्वेडितिटेरित्युलोपः । शेषंप्राग्वत् । सखिशब्दस्येति । भेदःप्रक्रियाविशेषः । तमेवनिरूपयितुमाह । खेर्डा ।। अत्रचऐसख्युरित्यतः सख्युरिति पष्ठ्यन्तमनुवर्त्तमानं सेरित्यनेन सम्बन्धात्सखिशब्दार्थस्यैकत्वेवाच्येविहतस्यसेरित्यर्थंप्रत्याययतीतिमत्वाह । सखिशब्दस्येति । तदर्थस्यैकत्वेविहतस्येत्यर्थः । तेन शोभनः सखायस्यससुसखिरित्यत्र न भवति । अन्यपदार्थस्यैकत्वेसेर्विहितत्वात् । गौणमुख्यन्यायेनवात्रनभवति । अतएव च शोभनः सखासुसखेत्यत्र भवति । डित्त्वादिति । कार्य्यायेदितिडस्येत्संज्ञायां डित्त्वाड्डितिटेरितिलोपइत्यर्थः । अधेरिति । सेर्डाधेरित्यत्राधेरितिविशेषणेनात्र डादेशप्राप्त्यभावात् । समाद्धेरिति । लुप्तस्यधेर्विषयेधावित्येकारेहेसखेइति स्यादित्यर्थः । एत्वाभावस्तुवक्ष्यते । ऐसु अत्रचसतोहिकार्येणः कार्य्येणभवितव्यमिति सख्युरैइतिनिर्देश्येविपरीतनिर्देशोवैचित्र्यार्थः । पञ्चस्विति । इतोत्पञ्चस्वित्यतोनुवृत्तेःसिऔजसुअम् औएष्वित्यर्थः । यद्येवंसावपिप्राप्नोति । मैवम् । परेणडादेशेनबाधितत्वात् विषमउपन्यासः । प्रत्ययस्यडाप्रकृतेरैत्वमिति । यएवंतर्हिटिलोपे कृ-

**स्य ज्ञेयः ॥ आयादेशः । सखायौ । द्विवचनस्यावाछन्दसि * ॥ सखाया । सखायः । सखायम् । सखायौ । सखीन् ॥ सखिपत्योरीक् * १९८ ॥ सखिपतिशब्दयोरीगागमो भवति टाङेङिषुपरतः । दीर्घत्वान्नानभवति । सख्या । पत्या ॥ * आगमजमनित्यम् ॥ सखिना ।**

तेविशेषाभावान्नभविष्यति । अथवासेर्डादेशंप्रतिसाक्षाद्दिष्टेनकार्यित्वेनपञ्चवच्चनान्तर्भावानुमितस्यनिमितस्यब्राह्मणाभोज्यन्ताम्माठरकौण्डिन्यौपरिवेविषातामित्यत्रपरिवेषणेनभुजिक्रियायाइवबाधनान्नभवति । यत्रहिडादेशःप्रतिषिध्यतेऽधेरिति तत्र प्राप्नोति हे सखेइति कर्त्तव्योत्रयत्नः । तत्राधेरितिविभज्यते तच्चोभयोर्योगयोः शेषः ऐसख्युः सेर्डाधेरिति । ततश्चायमर्थःअधिप्रत्ययान्तस्यसख्युरैर्भवति अधेश्च सेर्डा भवतीति । यद्येवमौप्रभृतीनि पञ्चवचनानिग्रहीष्यामः । मैवम् पञ्चसु शब्दो हि प्राक्स्यादिष्वेव रूढ इति तादृग्विधएवानुवर्त्तते । षष्ठीनिर्दिष्टस्येति । आदेशोयस्य षष्ठीनिर्दिष्टस्य विहितस्तदन्त्यस्य अन्तेभवोन्त्यस्तस्यान्त्यस्तदन्त्यस्तस्य वर्णस्य ज्ञेयइत्यर्थः । आयादेश इति । ऐ आयिति । सखायौ इति । सखिऔ इति स्थिते । ऐ सख्युरित्यैआदेशे षष्ठीनिर्दिष्टस्येतीकारस्य जाते आयादेशे च कृते एवं स्यादित्यर्थः । प्रियसखीइत्यत्रत्वै सख्युरिति सखिशब्दस्य पञ्चस्वित्यनेनापि संबन्धादैत्वं न भवति । सुसखायावित्यत्र भवति । द्विवचनस्येति । अस्यात्वं छन्दसि वाच्यमित्यर्थः । ननु चात्र औ इति प्रथमोद्वितीयो वेति । संशय इति चेन्न । सेर्द्विवचनं द्विवचनसिरित्यर्थात् । प्रथम एव सन्देहाभावात् सेरिति षष्ठ्यन्तस्य क्वचिदमाद्यन्तस्य परत्वमिति परत्वम् । सखाया इत्यादि औकारस्यात्वे सर्वत्राप्यै सख्युरित्यैत्वे आय् सखीनिति । षष्ठेत्रवचने हरीनितिवत्प्रक्रिया । सखि अत्र च एटाङ्योरित्यतष्टाङी अनुवर्त्तेते वक्ष्यमाणं च सूत्रपाठेङे इत्येतत्सूत्रं चतुर्थ्येकवचने ईगागमं शास्तीतितद्व्यविशेषादन्तर्णीयाह । टाङेङिष्विति । दीर्घत्वादिति[1] । अयमाशयः यदि ह्रस्वएवेक् क्रियेत तर्हि सखि इ टा इति स्थिते सवर्णदीर्घं बाधित्वान्तरङ्गत्वाट्टानास्त्रियामिति नाभावः प्राप्नोति । ईकिपुनः सत्यसति वा सवर्णदीर्घे दीर्घत्वान्नास्तिनादेशः । नेत्युपलक्षणम् एत्वाद्यपि न भवति । सख्ये इति । ईकि कित्वादन्त्यागमे सवर्णदीर्घे यः । आगमजमिति । आगमाद्यज्जातमागमजं नाम्नि चेति जनेर्डः त-

---

१ इदमुक्तंमाधवेन तदपि न सद्विचारयुक्तं इहापि परिभाषाया अनित्यत्वमाश्रीयते ज्ञापकानुसारेण तच्च ज्ञापकं कार्य्यायेत् एतदर्थमेव सूत्रस्य गुरुकरणमन्यथा कृत एवावक्ष्यत इतिवदंति नानकरामशर्माणः ।

पतिना । सखिभ्याम् ॥ सखिभिः । सख्ये । सखिभ्याम् सखिभ्यः ॥ ऋङ्ङे * २०० ॥ सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोर्ङकारे परे । सख्यृ असिति स्थिते ॥ ऋतोङ्उः * १२५ ॥ ऋकारान्तात्परस्यङसिङसोरकारस्य उकारो भवति । स च डित् । सख्युः । सखिभ्याम् । सखिभ्यः । सख्युः । सख्योः । सखीनाम् । सप्तम्येकवचने ङेरौडिदित्यौकारे कृते सखिपत्योरीगागमः ॥ सख्यौ । सख्योः । सखिषु । पतिशब्दस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । तृतीयादौ तु सखिशब्दवत् । पतिरसमास-

च्छास्त्रमनित्यमसार्वत्रिकमित्यर्थः । एतच्चागमविधानादेवावसीयते । अन्यथा लाघवार्थमीकारमादेशमेवव्यधास्यत् । तेन केवलयोर्नित्यं सख्यासख्येसख्यौ समस्तयोर्न प्रियसखिना प्रियसखये प्रियसखौ इत्यादि अत एव सखिनापतिनेतिकाचित्कोपपाठः नोपपद्यते । अन्यत्र पतिनासह सीतायाः पतये इत्यादौ छान्दसत्वान्निर्वाहः । सख्ये इति ईकृदीर्घयत्वानि । ऋङ् । इहईग्विधानस्य वैयर्थ्यप्रसङ्गान्ङे इति चतुर्थ्येकवचनं न गृह्यते । किं तर्हि ङसिङसोर्ङकारेण सप्तम्यन्तो निर्देश इत्याह । ङसिङसोर्ङकारेपरइति । सख्यृ असितीति । अनेन ऋगागमेकित्वात्परेसतियत्वेकृतेसख्यृ असितिस्थितेसतीत्यर्थः । ऋत । अत्रऋमात्रान्ङसिङसौनसंभवत इति सामर्थ्यात्तदन्तग्रहणमित्याह । ऋकारान्तादिति । तत्रापिङ्इतिप्राग्वत्प्रथमान्तोनिर्देशः । तेनङसिङसोरकारस्यउर्भवतिउरेवात्रप्रयोज्य-इत्यर्थःइममेवार्थंतात्पर्य्येणाह ङसिङसोर्ङकारस्येति । सख्युरिति । सख्यृअसिति-ऋगागमात्परस्यानेनोत्वेतस्यडित्वाड्डितिटेरितिलोपेविसर्गादेशः । अत्राप्यागमजमनित्यमितिप्रियसखेरित्यादावृगागमोन । सप्तम्येकवचनइतिअयम्भावःसखिङीत्यत्रेकः कृताकृतप्रसङ्गित्वेप्यागमत्वे नानियतप्रवृत्तेः प्राक्ङेरौत्वे टिलोपे च पश्चादेकदेशविकृतस्यानन्यत्वात्ङेरामादेशस्य तद्भावाच्चेकियत्वे च सख्याविति स्यादित्यर्थः । शेषं सुगमम् । पतिशब्दस्येति । विशेषान्तराभावादित्यर्थः ।

**एव सखिवद्वक्तव्यः ॥ ततः समासान्तस्य नादयो भवन्ति । प्रजापतिना । प्राजापतये। इत्यादि ॥ द्विशब्दो नित्यं द्विवचनान्तः । द्विकौ । द्विऔ इति स्थिते ॥ त्यदादेष्टेरः स्यादौ २०७ ॥ त्यदादेष्टेरकारो भवति स्यादौ परे । द्वौ२ द्वाभ्याम्३ । द्वयोः २ । त्रिशब्दो नित्यं बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ । त्रेस्त्रयङ् ८५ ॥ त्रि-**

तृतीयादाविति । तत्र सखिपत्योरीगित्यादिविशेषसद्भावात् । तथाहि पत्या पत्ये अत्र सखिपत्योरीक् पत्युः अत्र ऋङ्ङे ऋतोङ्ङः पत्यौ इत्यत्र ङेरौत्वे ईगागम इति । पतिरिति । यदीदमपूर्वं विधानमभविष्यत्तदा सेर्डादिकमप्यभविष्यनाभविष्यच्च पतिशब्दस्यग्रहणंसखिपत्योरीगित्यत्राभविष्यच्चाव्यर्थोत्रैवकारः तस्मादर्थकथनमेतत् । तथाहि नास्तिसमासोयस्मिन्नसावसमासः केवल एव पतिशब्दः सखिवत्सखिशब्देन तुल्यः यथा केवल एवसखिशब्दईगागमादिलभते एवं पतिशब्दो वक्तव्यः सहनिर्दिष्टत्वात् व्याख्येयइत्यर्थः । व्याख्यानन्तु सखिपत्योरीगित्यत्र कृतमेव । तत इति । यस्मात्केवल एव पतिः सखिवत्ततो हेतोः समासान्तस्य समासस्यान्तः समासान्तस्तस्यनादयः नाएत्वालोपौत्वटिलोपाः भवन्तिबाधकाभावादित्यर्थः । उदाहरति प्रजापतिनेति । प्रजानांपतिः प्रजापतिरिति तत्पुरुषः समासः । तेनात्रेकोऽभावान्नाभावः । प्रजापतयइति ईगभावादिह्रत्वम् । इत्यादीति । आदिनाप्रजापतेः प्रजापताविति । शेषं हरिवत् । द्विशब्दइति । नित्यत्वादेवस्वार्थप्रत्ययान्तोपि द्विवचनान्तत्वंनव्यभिचरतीति सूचयति द्विकाविति । त्यदादेः अत्रादिशब्दस्य व्यवस्थार्थत्वान् सर्वाद्यन्तर्गणस्य त्यदादिगणस्य ग्रहणात्संज्ञायां नाकारः : द्विः । अत्र च प्रमाणं कचिद्द्वयोरिति निर्देशः । अथेह कस्मान्न भवति द्वावतिक्रान्तोऽतिद्विः । उच्यते । त्यदादेरिति षष्ठ्याः स्यादावित्यनेनापि संबन्धात् त्यदादेरेकत्वादौ वाच्ये विहिते स्यादावित्यस्याप्यर्थस्य विज्ञानादत्राप्रसङ्गः अत्रह्यन्यपदार्थसङ्ख्यः स्यादिः । परमद्वावित्यत्रतु भवति समासस्य त्यदादिप्रधानत्वात् । एवं सर्वत्रापि त्यदादिकार्यं ज्ञेयम् । द्वाविति । अनेनात्वे औत्वम् । द्वाभ्यामिति । अङ्गीत्यात्वम् । द्वयोरिति । ओसीत्येत्वेयादेशः । त्रिशब्द इति । बहुत्वसं-

शब्दस्यायङादेशो भवति नामि परे। ङिदन्त्यस्य वक्तव्यः ॥ त्रयाणाम्। त्रिषु। कतिशब्दो नित्यं बहुवचनान्तः । कतिशब्दाज्जश्शसोर्लुग्वक्तव्यः । कति २ । कतिभिः। कतिभ्यः २। कतीनाम् । कतिषु। त्रिषुसरूपः। ईकारान्तः

ख्यार्थत्वादित्यर्थः। त्रीनिति। पदान्तत्वाण्णत्वं न। त्रेः। बह्वर्थत्वेप्यस्य निर्देशस्य स्वरूपपरत्वात् त्रेरित्येकवचनमिति मत्वाह। त्रिशब्दस्येति। यद्येवं प्रियास्त्रयो यस्य स प्रियत्रिः प्रियत्रीणामत्रापि प्राप्नोति शब्दस्वरूपस्य सत्त्वात्। मैवं, त्रेरिति षष्ठ्या आमीत्यनेनापि संबन्धात्। ङिदन्त्यस्येति। षष्ठ्याप्रवृत्तं षष्ठीनिर्दिष्टस्येति वक्ष्यमाणेन गुरुः शिवेत्यनेने मावाधीति पुनरिदमुच्यते। यद्येवं तुह्योस्तातङ् ङ्यन्तस्य प्राप्नोति ब्रूतात् मृष्टात् उष्टादिति। न च वाच्यं ङित्त्वस्य गुणवृद्धिनिषेधसंप्रसारणार्थत्वान्न स्यादिति। तस्यान्तादेशे हि तातङि व्यवहितत्वेन तत्प्राप्त्यभावात्। नाप्यवयवेऽचरितार्थं लिङ्गं समुदायविशेषकं भवति। अन्तादेशार्थत्वेन चरितार्थत्वात्। नापि च येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेन व्यवधानमाश्रयणीयमिति वाच्यम्। वचनस्य बहुतरावकाशत्वात् तुपः पित्त्वेनङित्त्वाभावाच्च। उच्यते। सर्वादेशे तातङि ङित्त्वस्य प्रयोजनान्तरं संभवतीति। तत्र विलम्ब्य प्रवर्तमानमन्तादेशवचनं परेण सर्वादेशेन बाध्यते अयङादीनां तु सर्वादेशत्वे न किञ्चित्ङित्त्वस्य प्रयोजनमिति तत्र स्वसामर्थ्यादन्तादेशवचनं सहसा प्रवर्तते। तदाह वार्तिककारः। तातङिङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेश इति। त्रयाणामिति। इकारस्यायाङि नुड्दीर्घणत्वानि। कतिशब्द इति। कासंख्या येषामिति बह्वर्थे शेषा निपात्याः कत्यादय इति निपातितत्वादिति भावः। कतीति। जश्शसोर्लुक्। नन्वत्र यदादेशस्तद्वदिति जसमाश्रित्य एओजसीत्येत्वं स्यात्। न, ज्ञापकात् यदयं शीङ इति गुणं शास्ति तज्ज्ञापयति। लुकि न तन्निमित्तं भवतीति. अन्यथा शेते इत्यादावदादेर्लुगिति लुप्तस्यापस्तद्भावेन गुणस्य सिद्धत्वाद्व्यर्थमेव तत्स्यात्। त्रिषु सरूप इति समानं रूपमस्यासौ स्वरूपः सहादेरिति समानस्य सः स्त्रीनपुंसकयोरपि विशेषाभावात्समानान्येव रूपाणीत्य-

सुश्रीशब्दः । सुश्रीः । य्वोर्धातोरियुवौ स्वरे ॐ १७७ धातोरिकारोकारयोरियुवौ भवतः स्वरे परे । सुश्रियौ । सुश्रियः । हे सुश्रीः । सुश्रियम् । सुश्रियौ । सुश्रियः । सुश्रिया । सुश्रीभ्याम् । सुश्रीभिः । सुश्रिये । सुश्रीभ्याम् । सुश्रीभ्यः । सुश्रियः । सुश्रियोः । सुश्रियामित्यादि । तथैव सुधीशब्दः । एवमूकारान्तः स्वयम्भूशब्दः स्वयम्भूः स्वयम्भुवौ । स्वयम्भुवइत्यादि । सेनानीशब्दस्याविशेषो हसादौ स्वरादौ तु विशेषः॥सेनानीः॥य्वौवा ॐ १८० धातोरवयवसंयोगपूर्वो-

र्थः । ईकारान्त इति । अयन्त्येतां सर्वे इति श्रीः श्रिञ्सेवायां क्विबिति क्विप् प्रच्छादित्वाद्दीर्घः । शोभना श्रीर्यस्यासौ सुश्रीः अस्त्रीप्रत्ययान्तत्वादन्यार्थ इति ह्रस्वाभावादीकारान्तः पुँलिङ्गश्च । बहुव्रीहिणा य्वोर्धातोः । अत्रव्याख्यानाद्विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति य्वोरिति न दीर्घयोर्ग्रहणम् । नापि यवयोः । किं तर्हि इश्च उश्च यू तयोरिति ह्रस्वयोर्ग्रहणे सति सावर्ण्याद्दीर्घयोरपि स्यादिति मत्वाह । धातोरिकारोकारयोरिति । सुश्रियाविति । औत्सर्गिकयत्वापवाद इय् । हे सुश्रीरिति । धातुत्वान्नधिलोपः । सुश्रियं सुश्रिय इति । धातुत्वान्नाम्शसोरल्लोपः । सुश्रियामिति । नुटः परत्वादिय् । य्वोः किं । सोमपौ । धातोः किम् वातप्रम्यौ । स्वरेकिं सुश्रीभ्याम् । इहस्याद्यधिकारात्पदान्तरस्वरे न श्रियाइदं श्र्यर्थं भ्र्वर्थम् नामिनः स्वरेइतिनुम् स्वरग्रहणमचारथ्नामिति शसादिना संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति । पुनः स्वरग्रहणं य्वोरिति ह्रस्वग्रहणमुत्तरार्थम् । रिगतौ, रियति रुवन्ति । तथैवेति । सुष्ठुध्यायतीति ध्यायतेः क्विंपियाइत्यस्यसंप्रसारणे ईकारे सुधीरपि सुश्रीवदियादेशं लभतइत्यर्थः । स्वयंभुवावित्यादि । स्वयं भवतीति भवतेः क्विबन्तस्य य्वोर्धातोरित्यूकारस्यस्वरे सर्वत्रोवादेशः य्वोरभावं त्वग्रे वक्ष्यति । सेनानीशब्दस्येति । सेनांनयतीति क्विबन्तनीधात्वन्तस्यास्यस्वरादावेवविशेषइत्यर्थः। य्वौ । अत्र य्वोरित्यतोधातोय्वोंरिति चानुवर्त्तते तत्रयद्ययमर्थःस्यात् धातोर्य्वोर्य्वौभवत इति ततः पूर्वसूत्रं निर्विषयमेवस्यादथवचनप्रामाण्यात्तदपिस्यादेवमपिविषयवैपरीत्यंस्यात् तस्मादिदंविशिष्टविषयमितिमत्वाह । धातोरित्यादि-यस्मादीकारादूकाराद्धातोरवयवसंयोगःपूर्वोनास्तितदन्तस्याधात्वयवसंयोगपूर्वेदूदन्त-

यस्मादीकारादूकाराच्च नास्ति तदन्तस्याऽनेकस्वरस्यैकारस्योकारस्य च यकारवकारौ भवतः स्वरे परे । वर्षाभूपुनर्भूव्यतिरिक्तभूशब्दसुधीशब्दौ वर्ज्जयित्वा । वाग्रहणादियं विवक्षा । सेनान्यौ । सेनान्यः । हे सेनानीः । सेनान्यम् । सेनान्यौ । सेनान्यः । इत्यादि । सेनान्यादीनांवामो नुड्वक्तव्यमः ॥ । सेनानीनाम् १ ॥ सेनान्याम् ॥ आम्ङेः ॥ ११२ ॥ आबन्तान्नीशब्दाच्चोत्तरस्य ङेरामादेशो भवति । सेनान्याम् । एवंग्रामणीप्रभृतयः । ऊकारान्ताश्च यवल्वप्रभृतयः । यवल्वः । यवल्वौ । यवल्वः । इत्यादि । ऋकारान्तःपितृशब्दः । सेरा ॥ १२६ ॥ ऋकारान्तात्परस्य

स्यानेकस्वरस्य नास्त्येकः स्वरो यस्मिन्नसौ तस्य शब्दस्यावयवौ यावीदूतौ तयोः-क्रमात्य्वौभवतइत्यर्थः । किं सर्वत्र नेत्याह । वर्षाभ्विति । वर्षाभूपुनर्भूभ्यामतिरिक्तमन्यत्रस्वयंभ्वादौ स्थितं भूशब्दं सुधीशब्दं च वर्जयित्वा परिहृत्येत्यर्थः । ननु सूत्रे य्वौवेत्यनुवृत्तिरपिय्वोर्द्धातोः स्वरइति तदतिरिक्तोयमर्थः कुतोलभ्यत इत्याह । वाग्रहणादिति । निपातानामनेकार्थत्वादितिभावः । सेनान्यावित्यादि । इयपवादो यत्वम् । आम् अत्रापइत्यनुवर्त्तते इतीदमावन्तादामोविधायकम् उत्तरसूत्रपाठस्थं नियश्चेति नीशब्दाच्च तत्राविशेषाद्योगद्वयमपि संहत्यव्याचष्टे । आबन्तान्नीशब्दाच्चेति । एवमिति । ग्रामं नयतीति नियः क्विप् नाम्नश्चक्तेति समासः समासे क्वचिदेकपद्यमितिणत्वं ग्रामण्यादयोपि सेनानीवत् ज्ञेया इत्यर्थः । यवल्वावित्यादि । यवान् लुनातीति लूवः क्विबन्तस्य य्वौवेति यत्वम् । ऋकारान्त इति । एतच्च क्रमप्रदर्शनार्थमुक्तम् । सेः । अत्र ऋतोङ्डरित्यत ऋत इत्यनुवर्तते तत्र ऋमात्रात् सिर्न संभवतीति सामर्थ्यात्तदन्तस्य ग्रहणमित्याह । ऋकारान्तादिति । तथा ङेरौङिदित्यतोङिदित्यनुवर्तते इत्याह।सचेति । टिलोप इति । ङिति टेरित्यनेन पितेति । पितृस इत्यत्र परत्वादरआप्नोत्याकारश्च तत्र विशिष्टत्वात् श्रौतत्वाच्चसेरात्वे

सेराभवति । स च डित् । डित्त्वाट्टिलोपः । पिता । पञ्चसु * १२८ ॥ ऋकारस्यार् भवति पञ्चसु स्यादिषु परेषु । पितरौ । पितरः । घेरर् *१२७ ॥ ऋकारान्तात्परस्य घेरर् भवति । स च डित् । पितरम् । पितरौ । पितॄन् । पित्रा । पितृभ्याम् । पितृभिः । पित्रे । पितृभ्याम् । पितृभ्यः । ऋतोङ्उः । पितुः । पितृभ्याम् । पितृभ्यः । पितुः । पित्रोः । पितॄणाम् । ङौ* १२८ ॥ ऋकारस्यार् भवति ङौपरे । पितरि । पित्रोः । पितृषु । एवं जामात्रादयः । नुर्वा नामि दीर्घः * ॥ नृणाम् नॄणाम् । कर्तृशब्दस्य पञ्चसु विशेषः ।

कृते एकयोगविशिष्टानां सह वा प्रवृत्तिस्सह वा निवृत्तिरिति डित्त्वात् टिलोपे कृते ऋकारस्याभावान्नारप्रवर्तते इति । तत्प्रसङ्गोपि नाचार्यैर्दर्शितः । अन्यथा च सूत्रमादौ व्याख्यास्यत् । पञ्चसु । अत्र ऋत इति पञ्चम्यन्तमप्यनुवर्तमानमादेशापेक्षया षष्ठ्यन्तं स्यादित्याह । ऋकारस्येति । स्यादिष्विति । एतच्चाधिकाराल्लभ्यते । घेः । ननु तत्सम्बोधने पितृसि इत्यत्र समानाद्धेरिति लुप्रधिविषये पञ्चस्वितिऋकारस्यैवारि कृते हसान्तत्वाद्धसेप इति सिलोपे संयोगान्तलोपे वा हे पितरिति सिध्यत्येवेति किमनेन योगेन सेरेत्यत्र चाधेरिति वक्ष्यामः । इति चेदुच्यते । एवं हि क्रियमाणे पूर्ववत्कर्तृशब्दस्यारि हे कर्तारित्यनिष्टं स्यात् । नहि स्तुरारित्यत्राघेरिति शक्यते कर्तुं गौरवात् । न च सेर्डाघेरित्यतो मण्डूकप्लुत्यानुवृत्तिः प्रतिपत्तिगौरवात् तस्मादारभ्यतेयं योगः हे पितरिति । अनेनारिडित्त्वाट्टिलोपः । पितॄनिति । षष्ठेत्र वचने शसि अलोपदीर्घनत्वानि । पदान्तत्वान्नत्वाभावः । पित्रेति । ऋरंहसेर्हस इति तकारस्य द्वित्वम् । ऋतोङ्उरिति । अनेन पितृअस् इत्यत्र ऋकारात्परस्याकारस्योत्वे डित्त्वाट्टकारलोपे विसर्गादेशे श्लिष्टोच्चारणे पितुरिति स्यादित्यर्थः । पितॄणामिति । नुड्दीर्घणत्वानि । ङौ । एवमिति । पितृशब्दोक्तप्रक्रिययेत्यर्थः । नुर्वेति । नामीति नित्ये प्राप्ते विकल्पार्थं नृशब्दस्य नामि वा दीर्घो वक्तव्य इत्यर्थः । नृणां नॄणामिति । उभयत्रनुटिपाक्षिको दीर्घः णत्वम् । शेषं पितृवत् । कर्तृशब्दस्येति । निरूप्यमाणत्वात्कर्तृग्रहणं तृप्रत्ययवतां पञ्चसु प्रक्रियाभेद इत्यर्थः । स्तुः ॥

स्तुराऱ् * १३० ॥ सकारतृप्रत्ययसंबन्धिन ऋकारस्यार् भवति पञ्चसु परेषु । कर्त्तार्सि इति स्थिते । यदादेशस्तद्वद्भवति । सेरा । डित्वाट्टिलोपः । कर्त्ता । कर्त्तारौ । कर्त्तारः । हे कर्त्तः । कर्त्तारम् । कर्त्तारौ । कर्त्तॄनित्यादि । एवं नप्तृप्रशास्तृप्रभृतयः ॥ उकारान्तस्यापि क्रोष्टुशब्दस्य पञ्चस्वधिषु तृप्रत्ययान्तस्येव रूपं वक्तव्यम् * ॥ क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । अधिष्विति विशेषणात् । हे क्रोष्टो । क्रोष्टारम् । क्रोष्टारौ । शसि तृप्रत्ययवद्भावाभावात् । क्रोष्टून् । तृतीयादौ स्वरा-

स् च तृ च स्तृ द्वन्द्वैकत्वम् आगमशास्त्रस्यानित्यत्वात् नुमभावः । छान्दसं पुंस्त्वं वा । उक्तञ्च छन्दसि सर्वे विधयो विकल्प्यन्त इति । तत्र स्तुरिति षष्ठी ऋतानुवर्तमानेन संबध्यते संबन्धश्च सकारेण संयोगः तृप्रत्ययेन समवायः । तदयमर्थः सकारसंयुक्तो य ऋकारस्तृप्रत्ययावयवश्च इति । अमुमेवार्थं संहृत्याह सकारेत्यादि । सकारेण संयोगसंबन्धवतः तृप्रत्ययेन समवायसंबन्धवत ऋकारस्येत्यर्थः। कर्तार्सीति स्थित इति । कर्तृसीत्यत्र विशिष्टत्वात् पूर्वमारि सति कर्तारसीति स्थिते सतीत्यर्थः । यदादेश इति । यस्यादेशो यदादेशस्तद्वत्तेन तुल्यस्तद्वत्कार्यातिदेशोयं तेनायमर्थः । आदेशो यस्य स्थाने विहितस्तेन स्थानिना तुल्यो भवति स्थानिकार्यकृद्भवतीत्यर्थः । फलमाह । सेरेति । आदेशस्यार् ऋकारवत्त्वात्सेरेत्यात्वे डित्वाट्टिलोपे च कर्तेति स्यादित्यर्थः । हेकर्तरिति । धेरारिटिलोपः । कर्तॄनिति । षष्ठेत्र वचनेपितृवत् । इत्यादीति । पितृशब्दवदितिशेषः एवमिति । नप्तृप्रशास्त्रादयोपितृप्रत्ययान्तत्वात्कर्तृशब्दवत् ज्ञेयाइत्यर्थः । उकारान्तस्येति । तृप्रत्ययान्तस्य यथारूपं तृप्रत्ययसम्बन्धिऋकारवत्त्वात्तथोदन्तस्यापिक्रोष्टुशब्दस्याधिवर्जितेषु स्यादिपञ्चवचनेषु रूपं वाच्यमित्यर्थः । क्रोष्टेति । कोष्टुसितिस्थितेतृप्रत्ययवदुकारस्यारिकृतेसेरेत्यात्वेटिलोपः । अधिष्विति । तेनधौतृप्रत्ययातिदेशाभावाउदन्ताद्धिलोपेधावित्यात्वम् । शसीति । तृप्रत्ययेनतुल्यंतृप्रत्ययवत् तृप्रत्ययवद्भवनं तृप्रत्ययवद्भावः तदभावाच्छसिक्रोष्टूनित्येवभवतीत्यर्थः । तृतीयादाविति टा-

दौ वा तृप्रत्ययान्तता वक्तव्या* ॥ क्रोष्टा। क्रोष्टुना। क्रोष्टुभ्याम्। क्रोष्टुभिः। क्रोष्ट्रे। क्रोष्टवे। क्रोष्टुः। क्रोष्टोरित्यादि क्रोष्टूनाम्। कृताकृतप्रसङ्गी यो विधिः स नित्यः। नुडागमे कृते हसादित्वात्तृवद्भावो नास्ति क्रोष्टरि। क्रोष्टौ। क्रोष्टुषु। ऋकारान्ता लृकारान्ता एकारान्ताश्चाप्रसिद्धाः। ऐकारान्तः पुँल्लिङ्गः सुरैशब्दः। रैस्भ* ८१ ॥ रैशब्दस्याकारादेशो भवति सकारभकारादौ विभक्तौ परतः। सुराः। स्वरादौ सर्वत्रायादेशः। सुरायौ। हे-

*ङसिङसोसाम्ङ्योस्सुपरेषु तृप्रत्ययस्यान्ततावावाच्येत्यर्थः। क्रोष्ट्रेति। प्राग्वत्। क्रोष्टव इति। ङितीत्योत्वेऽवादेशः। क्रोष्टुरिति। ऋतोङ्उरित्युत्वे टिलोपः क्रोष्टोरिति। ङितीत्योत्वेङस्येत्यलोपः। ओसोस्तु रत्ववत्वे। क्रोष्टूनामिति। क्रोष्टु आमित्यत्र नुट्प्राप्तः परत्वात्तृवद्भावश्च तत्रानित्यत्वात्परस्य नित्यस्य च नित्यमेवेति नुडेवस्यादितिप्रतिपादयितुमाह। कृतेति। कृतेचाकृते च विध्यन्तरे यो विधिः प्राप्नोति सनित्यः यथा नुट्। सहिकृते तृवद्भावे समानान्तत्वाविघातात् प्राप्नोति न तथा तृप्रत्ययवद्भाव इत्याह। नुडागमइति। नुडागमेतुकृतेतस्यामोऽवयत्वेन आमः स्वरादित्वविघातान्न प्राप्नोति तृप्रत्ययवद्भावइत्यनित्यत्वात् नित्येननुटाबाध्यत इत्यर्थः। क्रोष्टूनामिति। क्रोष्टृणामिति तु मतान्तरंबोद्धव्यम्। क्रोष्टरीति। ङावित्यर्। क्रोष्टाविति। ङसैङिदित्यौत्वे। टिलोपःशेषं सुगमम्। ऋकारान्ताइति। अप्रसिद्धत्वं च वेदपुराणादावप्रयुक्तत्वात् अतएवचात्रनव्युत्पादिता इति भावः। ऐकारान्तइति। रै। रै इत्यर्थविवक्षयाऽविभक्तिकोनिर्देशः छान्दसो वा लुक्। सूचभ्‌चस्भ तत्र भकारमात्रमत्र विभक्तिर्नसंभवतीति सामर्थ्याद्भकारादिर्गृह्यते तत्साहचर्य्याच्च सकारादिरपीत्यभिप्रेत्याह। सकारभकारादाविति। यस्मिन्विधिस्तदादावल्ग्र-

सुराः । सुराया । सुराभ्याम् । सुराभिरित्यादि ॥ ओरौ* १७२ ॥ ओकारस्यौकारादेशो भवति पञ्चसु परेषु । गौः । गावौ । गावः । हे गौः । आम्शासि* १७३ ॥ ओकारस्यात्वं भवति आमि शसि च परे । गाम् । गावौ । गाः । गवा । गोभ्याम् । गोभिः । गवे । गोभ्याम् । गोभ्यः । ङस्येत्यकारलोपः । गोः । गोभ्याम् । गोभ्य इत्यादि । एवं सुद्योशब्दः । औकारान्तः पुँलिङ्गो ग्लौशब्दः तस्यहसादौ त्वविशेषः स्वरादावावादेशः । ग्लौः । ग्लावौ । ग्लाव इत्यादि ॥ इति स्वरान्ताः पुँल्लिङ्गाः ॥

हणेइति परिभाषयावाह । सकारेत्यादि । सकारश्चभकारश्च सकारभकारौ तादीयस्याः तस्यामधिकृतायांविभक्तौ परत इत्यर्थः । सुराइति । अत्रसकारादित्वेनात्वेविसर्गः । ननुचात्र सकारमात्रं विभक्तिरिति तदादौ विधीयमानमात्वं नस्यात् । उच्यते, यथालोकेकस्याप्येकपुत्रस्यायमेव मेज्येष्ठोयमेवकनिष्ठ इत्येकस्मिन्नपि पुत्रे ज्येष्ठकनिष्ठव्यवहारो भवति तथात्राप्येकस्मिन्नपि वर्णे भवत्याद्यन्तव्यवहारः । सुराभ्यामिति । भकारादित्वादात्वम् । इत्यादीति । आदिरत्रप्रकारे एवं प्रकारंशेषमपिज्ञेयमित्यर्थः । ओकारान्तइति । ओः । अत्रातोत्युरितिनिर्देशान्नोकारस्यग्रहणमिति मत्वाह । ओकारस्येति । गौरिति । औत्वेविसर्गः । हेचित्रगोहेचित्रगवइत्यत्रतु ओकारस्य लाक्षणिकत्वान्नौत्वम् ओरिति षष्ठ्यापञ्चस्वित्यनेनसंबन्धाद्वा । आम् । आ अमिति च्छेदः । गाइति । आत्वं नत्वाभावस्तुतत्सूत्र एव विचारितः शेषं सुगमम् । एवमिति । द्योशब्दोपि गोशब्दवत्साध्य इत्यर्थः । ननु च द्योशब्दः स्वर्गवाचीव्योमवाचीचस्त्रीलिंगएव । तथाचाहामरः 'सुरलोको द्योदिवौ द्वे स्त्रियामिति । तथा द्योदिवौद्वे स्त्रियामभ्रं व्योमेति । तथा च रूपमालायामुक्तं द्योदिव्शब्दौ स्त्रियामिति । तत्कथमत्रपुंसिप्रदर्शितः । एवं तर्हिद्योशब्दस्यायमर्थः । द्योअन्तोयस्यासौद्योन्तः द्योशब्दमन्तं करोतीति वाद्योन्तः शब्दोद्योशब्दः मध्यमपदलोपीसमासः तेन सुद्योशब्दइत्यर्थः । औकारान्तइति । सुगमम् । श्रीजानार्दनिवत्सराजतनयः

**अथ स्वरान्ताः स्त्रीलिङ्गाः । आकारान्तो गङ्गाशब्दः ॥**
**आपः ॥ १०७ ॥ आबन्तात्परस्य सेर्लोपो भवति । गङ्गा । औ ॥ ११० ॥ आबन्तात्पर औ इकारमापद्यते गङ्गे ॥ धिरिः ॥ १०९ ॥ आबन्तात्परो धिरिर्भवति । हे गङ्गे । गङ्गाम् । गङ्गे । गङ्गाः ॥ टौसोरे ॥ १०८ ॥ आबन्तस्य टौसोः परयोरेत्वं भवति ।**

श्रीकाह्ननामा द्विजोयं श्रीनायकदेविकापि सुधियं प्राजीजनन्माधवम् । तस्य व्याकरणार्णवैकतरणेः सारस्वतीयोत्तमव्याख्यापुंसिगतास्वरान्तवचसांसिद्धान्तरत्नावली । इति स्वरान्ताः पुँल्लिङ्गाः ।

अथेति । स्वरान्ताः स्त्रीलिङ्गाः प्रारभ्यन्तइत्यर्थः । तत्राबन्तत्वेनाऽदन्तशब्दाभावादाह । आकारान्त इति । पकारस्य कार्यायोगादाबन्त इति नोक्तम् । आपः । अत्राबमात्रात् स्यादयो न संभवन्तीति सामर्थ्यात् प्रत्ययग्रहणपरिभाषया वा तदन्तग्रहणमिति मत्वाह । आबन्तादिति । यद्येवं खट्वामतिक्रान्तोतिखट्वः । अत्रापि प्राप्नोति एकदेशविकृतस्यानन्यत्वेनस्थानिवत्त्वेनवाऽस्याप्याबन्तत्वादितिचेदुच्यते । अत्रद्वितीयमापइतिषष्ठ्यन्तमनुवर्तते । तच्चस्वरूपपरमिति सुडाम इत्यत्रोक्तम् । तेनायमर्थः आप्संबन्धवतः आबन्तादिति । न चातिखट्वादावापःसंबन्धःह्रस्वविधानात् सर्वस्यैव चापोविकृतत्वादेकदेशन्यायस्याप्ययमविषयः आब्ग्रहणानुवृत्तिसामर्थ्याच्च नादेशस्यापि तद्भावः अतएवातिखट्वौ अतिखट्वेनेत्यादावापितत्तत्कार्याभावः । अत्रैव सूत्रे आआप् इत्यापोविशेषणार्थमाकारः पृथग्भिद्यते इति दीर्घादेवापस्तत्तत्कार्यं द्रष्टव्यम् । सेर्लोप इति । हसेप इत्यतोनुवृत्तेः । पृथग्योगकरणं त्वापएवोत्तरत्रानुवृत्त्यर्थम् । गङ्गेति आबन्तगङ्गाशब्दस्याविभिक्तीति नामत्वात्तस्मादिति स्याद्युत्पत्तौ नामार्थमात्रैकत्वविवक्षायां जातस्यसेरनेन लोपे एवं स्यादित्यर्थः । औ । अत्र धिरिरित्यत इरित्यनुवर्तते इत्याह । इकारमिति । ह्रस्वमिं प्राप्नोतीत्यर्थः । यद्येवमेकयोग एव क्रियताम् । औध्योरिरिति एवं हि धेः साहचर्याद्दौकारोप्यामन्त्रणीय एवेति भ्रमः स्यात् । पृथग्योगे तु नायं दोषः । गङ्गे इति । गङ्गा औ इत्यत्रौकारस्यानेनेत्वे पूर्वपरयोरेत्वम् । गङ्गा इति । जसि दीर्घविसर्गौ । धिरिः । हे गङ्गे इति । विधिसामर्थ्यादिकारस्यालोपः । टौसोः । इहाप इति पञ्चम्यन्त-

---

१ अतिखट्वमित्यादौ एकदेशविकृतमित्यादिना आबंतत्वात् सेर्लोपः स्यात् तन्निवृत्त्यर्थे दीर्घप्रश्लेष इति प्रकाशकृतामाशयःसतु गौणमुख्ययोरितिन्यायेनापिसेत्स्यति प्रश्लेषोपिन विभेयन्यायस्य सर्वत्राश्रयणात् ।

गङ्गया । गङ्गाभ्याम् । गङ्गाभिः ॥ ङितां यट् ॥ १२१ ॥ आबन्तात्परेषां ङेङसिङसङीनामित्येतेषां यडागमो भवति । टकारो देशनियमार्थः । गङ्गायै गङ्गाभ्याम् । गङ्गाभ्यः । गङ्गायाः । गङ्गाभ्याम् । गङ्गाभ्यः । आम्ङेः । गङ्गायाम् । गङ्गयोः । गङ्गासु । एवं श्रद्धामेधाविद्याप्रभृतयः ॥ अम्बादीनां धौ ह्रस्वः ॥ हे अम्ब । हे अक्केत्यादि । सर्वादीनान्तु ङित्सु विशेषः ॥ यटो-ऽच ॥ १०५ ॥ आबन्तात्सर्वादेः परस्य यटः सुडागमो भ-

सप्तम्यादेशापेक्षयार्थात् षष्ठयन्तं स्यादिति मत्वाह । आबन्तस्येति । गङ्गयेति । गङ्गाटा इत्यत्रानेनैत्वे षष्ठीनिर्दिष्टस्येत्यापः कृते एअय् । ङिताम् । ङ्इद्येषां तानि ङिन्ति तेषां ङेङसीत्यादीनां विवृतानामित्यर्थः । टकार इति देशः स्थानं तस्य नियमोऽवश्यं भावः सोऽर्थो यस्यासौ सति हि टकारे टित्कितावाद्यन्तयोरित्यागामिन आदिरेवाय-मागमो भवतीत्येवं देशो नियम्यत इत्यर्थः । गङ्गायै इति । गङ्गाए इत्यत्रानेनादौ यटि ऐत्वम् । गङ्गाया इति । यट्दीर्घौ । गङ्गयोरिति । टौसोरित्येत्वेऽयादेशः । आम्ङेरिति । अनेनाबन्तत्वात् ङेरामादेश इति शेषः । गङ्गायामिति । गङ्गाङि इति स्थितेसति परत्वात् पूर्वङेराम् ततो यट् । ननु नित्यत्वात् पूर्वं यट् स्यात् सहि कृतेप्यामि प्राप्नोति अकृतेपि आम् तु कृते यटि व्यवधानात्र प्राप्नोतीत्यनित्य इतिचेत् यडप्यनित्यः कृते आमि तस्य प्राप्नोत्यकृते त्वन्यस्य ङेस्तस्माच्छब्दान्त-रस्य प्राप्नुवन्विधिरनित्यो भवति इति द्वयोरनित्ययोश्च परत्वात् पूर्वं ङेराम् भवति । किञ्च । विधिसामर्थ्यादपि पूर्वमामेव भवति । अन्यथा कथञ्चिदपि पूर्वकृतेन यटा व्यवधानादामोऽप्रवृत्तेराबन्तादामविधानं व्यर्थं स्यात् । गङ्गयोरिति । प्राग्वदेत्वादि । एवं श्रद्धेति । एतेप्याबन्तत्वात् गङ्गावत्साध्या इत्यर्थः । अम्बादीनामिति । अत्रादिशब्दस्य प्रकारार्थत्वात् द्विस्वराणां मात्रर्थानां ग्रहणात् हे अम्बाले हे अम्बाडे हे अम्बिके इत्यत्र ह्रस्वाभावात् धेरिः । हे अम्ब हे अक्केति । अत्र ह्रस्वान्तत्वाद्धेरित्वाप्राप्तेर्लोपः । आदिना हे अल्ल हे अक्केति । सर्वादीनामिति । सर्वविश्वेत्यादिगणपठितानामाबन्तानां ङेङसिङसङिषु प्रक्रियाधिक्यमुच्यत इत्यर्थः । यटो । अत्र सर्वादेः स्मडित्यतः सर्वादेरिति वर्तते । यटोविधीयमानत्वा-च्चागमाबन्तादेव भवतीत्याह आबन्तात्सर्वादेरिति । पूर्वस्य चाप इति । एतच्च सुडाम इत्यत्रोपपादितम् । सर्वस्यै इति । सर्वाए इत्यत्र ङितामिति

इति पूर्वस्य चापोकारः । सर्वस्यै । सर्वस्याः । सर्वस्याम् । शेषं गङ्गावत् । आमि तु सुडागमः । सर्वासाम् । जरा ॥ जरायाः स्वरादौ जरस् वा वक्तव्यः ॥ जरसौ जरे । जरसः । जराः । हे जरे । जरसम् । जराम् जरसौ । जरे । जरसः । जराः । जरसा । जरया । जराभ्याम् । जराभिरित्यादि । इकारान्तः स्त्रीलिङ्गो बुद्धिशब्दस्तस्य प्रथमाद्वितीययोर्हरिशब्दवत्प्रक्रिया । बुद्धिः । बुद्धी । बुद्धयः ।

यटोनेन सुटि आपश्चाऽत्वे ऐत्वे चैवंस्यादित्यर्थः । सर्वस्या इतिङसिङसोर्यट्सुट्त्वदीर्घविसर्गाः । सर्वस्यामिति । ङेरामि यडादयः । शेषमिति । अङिद्वचनान्तमित्यर्थः । किं सर्वमपि नेत्याह । आमित्विति । एतच्च सुडविधावेवोपपादितम् । जराया इति । जराशब्दस्य स्वरादौ विभक्तौ वा जरसादेशः स्यादिति वक्तव्यार्थः । जरसावित्यादि । जरसादेशपक्षे सर्वत्र श्लिष्टोच्चारणं जरेइत्यादि । जरसादेशाभावपक्षे सर्वत्र गङ्गावत् । हे जर इति । घेरित्वे एत्वम् । ननु चात्रेत्वस्य स्वरादित्वाज्जरसादेशः स्यात् । न च स्थानिवत्त्वेनेह हसादित्वमाशंक्यम् । अतिदेशेन हि स्थान्याश्रयं कार्यं प्राप्यते नत्वादेशाश्रयं निवर्त्यते इति । एवं तर्हि सन्निपातलक्षणपरिभाषया आबन्तसन्निधानेन जात इकारो नाबन्तं विघातयतीति न भविष्यति । यथा जरे इत्यत्र इत्वे कृते । अतएवाजरं कुलमस्ति अजरेण अजरैः अजरादित्यत्राप्येकदेशविकृतस्यानन्यत्वात् प्राप्तो जरसादेशः न । तथा च काशिकायामुक्तम् । अतिजरंब्राह्मणकुलं तिष्ठति अतिजरैरिति च भवितव्यमिति गोनर्दीयमतं किं कारणं सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । अयमेवचाचार्याणामभिप्राय इति स्त्रियामौकारस्य ह्रस्वेत्वविधानात् भिसो भकारस्यात्वविधेर्ङसेरदादेशविधेश्चानुमीयते अन्यथा दीर्घत्वैसादादेशान् व्यधास्यत् । यद्येवं कथमजरसं कुलं पश्येति । उच्यते । नात्रातोमित्यमादेशः क्रियते किं तर्हि वर्तमान एवाम् लुकोऽप्रवृत्तेरवस्थित इति व्यज्यत इति नायमस्याविषयः । तथा च वक्ष्यति अमोम्ग्रहणं लुगभ्यावृत्त्यर्थमिति । इकारान्त इति । बोधनं बुद्धिरिति क्तिः स च स्त्रियामेवेत्याहस्त्रीलिङ्गइति । तस्येति । इदन्तत्वसाम्यादितिभावः । बुद्धीइति।औयूङ्तीत्वेस-

हे बुद्धे । बुद्धिम् । बुद्धी । पुंस इति विशेषणात् बुद्धीः । बुद्ध्या । बुद्धिभ्याम् । बुद्धिभिः ॥ इदुद्भ्याम् ॥ ११८ ॥ स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वा अडागमो भवति । बुद्ध्यै । बुद्धये । बुद्धिभ्याम् । बुद्धिभ्यः । बुद्ध्याः । बुद्धेः । बुद्धिभ्याम् । बुद्धिभ्यः । बुद्ध्याः । बुद्धेः । बुद्ध्योः । बुद्धीनाम् ॥ स्त्रियां योः ॥ ११९ ॥ इश्च उश्च युस्तस्मादिवर्णान्तादुवर्णान्ताच्च स्त्रियां वर्त-

वर्णेदीर्घः बुद्धयइति । एओजसीत्येत्वेऽयादेशः पुंस इतीति सोनः पुंस इत्यत्र बुद्धयेति । अस्त्रियामित्युक्तेर्नाभावोन । इदु । इकारोकाराभ्यामिति । इदुन्मात्रस्य स्त्रियामप्रवृत्तेर्ङितामसंभवाच्चतदन्ताभ्यामित्यर्थः । बुद्ध्यइति । इदुद्भ्यामितिङेरादावटिकृतेयत्वैत्वे बुद्ध्य इति । अडभावेङितीत्येत्वेऽयादेशः । बुद्ध्याइति । तद्वदटियत्वदीर्घविसर्गाः बुद्धेरिति । अनट्पक्षे ङितीत्येत्वे ङस्येत्यलोपः स्त्रियाम् । किमिदंयोरितियकारोकारयोर्ग्रहणमिकारोकारयोर्वा. नाद्यःरायत्यित्रातिप्रसङ्गात् । नचवाच्यंलाक्षणिकत्वान्नस्यादिति स्त्रियामित्यादावपियस्यलाक्षणिकत्वात् एवन्तार्हिअसन्देहार्थमुयइति निर्देश्येयोरितिनिर्देशान्नाद्यइतिद्वितीयमेवाश्रयति इश्चेति । द्वन्द्वैकत्वेननिर्देशः सूत्रेतुयोरितिछान्दसंपुंस्त्वम् । अनित्यत्वाद्वा नुमून । अत्र च नियश्चेत्यतश्चोनुवर्त्तते । सचावधारणार्थः सन्नस्त्रियामित्यनेन संबध्यते योरिति सामर्थ्यात्तदन्तग्रहणं तेन यदिवर्णोवर्णांतं स्त्रियामेववर्तते तस्मान्नित्यस्त्रीलिङ्गादित्यर्थः । अत एव खलप्विस्त्रियामित्यादौ पदान्तरद्योत्यस्त्रीत्ववृत्तेर्नाम् इष्वशन्यादनांतु शब्दार्थस्यैव स्त्रीत्वादिष्वामशन्यामिति स्यादेवाम्भावः एवमडागमादिकार्यमपि नित्यस्त्रीलिङ्गादेवज्ञयमू । एतदेव हि स्त्रियां ग्रहणं तत्राप्यनुवर्तत इति । बुद्ध्यामिति । बुद्धि इ इत्यत्रङेराम्भावोडागम औत्वं च प्राप्नोति तत्र यदि परत्वादौत्वं स्यात्तत्र कृतेन टिलोपेनदुदन्तत्वाभावादटोप्रवृत्तेर्ङ्याश्रयस्याड्विधानस्यानवकाशत्वादादेशागमयोर्भिन्नदेशत्वेनाविरोधादपि पूर्वकृतेनाटाव्यवधानादौत्वाप्रवृत्तेरामादेशे च कृते यत्वदीर्घौ । अथ यथा अटोव्यवधानादौत्वाप्रवृत्तिः एवमामपि यदि न प्रवर्तेत तदा नद्यामित्यादावपि ङितामडित्यटा व्यवधानादामोऽप्रवृत्तिः स्त्रियां यो-

मानात्परस्य ङेरामादेशो भवति । बुद्ध्याम् । अडागमाभावे आमोप्यभावः। बुद्धौ ।बुद्ध्योः। बुद्धिषु। एवं मतिभूतिरुचिकान्तिप्रभृतयः । एवं धेनुरज्जुप्रभृतयोप्युकारान्ताः सिद्ध्यन्ति । धेनुः।धेनू। धेनवः। हे धेनो। धेनुम्। धेनू ।धेनूः । धेन्वा । धेनुभ्याम्। धेनुभिः ।धेन्वै, धेनवे। धेनुभ्याम् । धेनुभ्यः।धेन्वाः । धेनोः। धेनुभ्याम् । धेनुभ्यः । धेन्वाः।धेनोः। धेन्वोः । धेनूनाम्। धेन्वाम्' धेनौ । धेन्वोः । धेनुषु ।ईबन्तः स्त्रीलिङ्गो नदीशब्दः॥ हसेपः सेर्लोपः * १०६ ॥ हसन्तादीबन्ताच्च प-

रिति व्यर्थं स्यात्तस्माद्येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादित्येकेनाटा व्यवधानेपि स्यादेवाम्भावः । अडभावपक्षे तु प्रवृत्तोप्यामादेशः परत्वादौत्वेन बाध्यते । ततश्चाडामादेशयोरेकविषयत्वमेवेति निर्णीयाह अडागमाभाव इति । अत्र पक्षेऽटोव्यवधानाभावात्परेणौत्वेन बाधितत्वादामोप्यप्रवृत्तिरित्यर्थः।बुद्धाविति । ङेरौडिदित्यौत्वे टिलोप एवमिति । एतैरेवसूत्रैरुकारान्ताअपिसहोक्तप्रक्रियात्वाज्ज्ञेयाइत्यर्थः। धेन्वै इति । इदुद्भ्यामित्यटिवत्वैत्वे धेन्वाइति। अड्वत्वदीर्घाः धेन्वामिति । अडाम्वत्वदीर्घाः। धेनाविति। अडभावपक्षे परत्वादामंबाधित्वौत्वेटिलोपः । शेषं प्रागूवत् ईकारान्तइति । क्रमावगमायैतदुक्तम् । हसेपः । अत्रचहसेप्मात्रात्सिर्नसंभवतीति सामर्थ्यात्तदन्तग्रहणमित्याह: हसान्तादीबन्ताच्चेति अत्रचहसान्तात्संयोगान्तलोपेनैवसिलोपस्य सिद्धत्वाद्धसग्रहणं व्यर्थमितिनाशंक्यम् । उखास्रस्रस्इत्यत्रपरत्वादन्तलोपंबाधित्वा बलीयस्त्वाच्च वसांरसइतिदत्वञ्च बाधित्वास्कोराद्योश्चेत्याद्यसलोपेसेदत्वाप्रसङ्गादुखास्रत्पर्णध्वदित्याद्यसिद्धेः सिलोपविधेस्तु एतदर्थत्वादाद्यलोपेन नबाधः । नदीति । नदादेरितीबन्तान्नदीशब्दादविभक्तीतिनामत्वाज्जातस्यसेरनेन लोपः । ननुच निष्कौशाम्बिरित्यत्राप्येकदेशविकृतस्यानन्यत्वेनस्थानिवत्त्वेन वा ईबन्तत्वात्सिलोपःप्राप्नोति नद्वितीयोह्यत्र ईकारःप्रश्लिष्यतेईचासावीप् चईश्चेतिद्वयोरीकारयोःसवर्णेदीर्घः ततश्चदीर्घादेवईपः सिलोपेन भाव्यं न च निष्कौ-

रस्य सेर्लोपो भवति । नदी । नद्यौ । नद्यः ॥ धौ ह्रस्वः ११५ ॥ इवर्णोवर्णयोरधातोः स्त्रियां धौ परे ह्रस्वो भवति । हे नदि । नदीम् । नद्यौ । नदीः । नद्या । नदीभ्याम् । नदीभिः ॥ ङितामट् * ११६ ॥ स्त्रियां वर्तमानादीकारान्तादूकारान्ताच्च परेषां ङितां वचनानामडागमो भवति । नद्यै । नदीभ्याम् । नदीभ्यः । नद्याः । नदीभ्याम् । नदीभ्यः । नद्याः । नद्योः । नदीनाम् । नद्याम् । नद्योः । नदीषु । एवं गौरीसरस्वतीब्राह्मणीप्रभृतयः । लक्ष्मीशब्दस्येबन्तत्वाभावात्सेर्लोपो नास्ति । लक्ष्मीः । लक्ष्म्यौ । लक्ष्म्यः । हे लक्ष्मि । लक्ष्मीम् । लक्ष्म्यौ । लक्ष्म्योरित्यादि नदीवत् । स्त्रीश-

शाम्बरित्यत्रदीर्घईबस्ति समासकालएवान्यार्थइतिह्रस्वविधानात् । धौह्र । अत्र च स्त्रियांयोरित्यतोनुवर्तमानेनपुनः सामर्थ्यात्तदन्तग्रहणेपिविधीयमानोह्रस्वादेशः षष्ठीनिर्दिष्टस्येतिय्वोरेवस्यादित्यतआहइवर्णोवर्णयोरिति अधातोरिति । एतच्चसमानाद्धेरित्यतोमण्डूकप्लुत्यानुवृत्तेर्ज्ञेयम् । अतएव हे श्रीः हे भ्रूरित्यादौह्रस्वो न स्त्रियामिति । नित्यस्त्रीत्ववृत्तेरित्यर्थः । हे नदीति । अनेनात्र ह्रस्वे कृते समानाद्धेरितिधिलोपः अथात्रह्रस्वान्तस्य धावित्येत्वंस्यात् । न च ह्रस्वविधिसामर्थ्यान्नेतिवाच्यं ह्रस्वस्यैत्वार्थत्वात् । नहिदीर्घस्यायमेत्वप्रसंगः एवं तर्हि ह्रस्वएत्वयथास्यात् एत्वं माभूदिति ह्रस्वो विधीयते अन्यथा य्वोर्गुण एव विधीयेत सावर्ण्याच्च । इवर्णस्य ए उवर्णस्य ओ एवाभविष्यदिति नातिप्रसंगः । लाघवमप्येवं सूत्रे स्यात् । ङिताम् । स्त्रियांवर्तमानादिति । नित्यस्त्रीत्ववृत्तेरित्यर्थः । अत्रचसामान्येन य्वोरनुवृत्तावपि ह्रस्वाभ्यामिदुद्भ्यामिति विकल्पे नाटोविधास्यमानत्वाद्दीर्घयोरेवसंबन्ध इति मत्वाह ईकारान्तादित्यादि । नद्या इति । अनेनात्राटियत्वैत्वे । नद्यामिति । अत्राटिस्त्रियांयोरित्यामियत्वदीर्घौ । एवमिति । गौर्यादयोपीबन्तानदीवत्स्युरित्यर्थः । लक्ष्मीशब्दस्येति । लक्षेरीमुट्चेतीकारप्रत्ययान्तस्येतिशेषः । हे लक्ष्मीति । नित्यस्त्रीत्वाद्धौह्रस्वः । लक्ष्म्यां इत्यादि नदीवत् प्रक्रिया । स्त्रीशब्दस्येति । स्त्यायतेर्ड्रट् प्रत्ययान्तस्यटित्त्वान्ङीप्यत्रिल इति

ब्दस्यैवन्तत्वात्सेर्लोपोस्ति।स्त्री।स्त्रीभ्रुवोः ❀ १७८॥स्त्रीशब्दस्य भ्रूशब्दस्य च स्वरे परे इयुवौ भवतः। स्त्रियौ । स्त्रियः । हे स्त्रि ॥ वाम्शसि ❀ १७९ ॥ अमि शसि च परे स्त्रीशब्दस्य वा इय् भवति। स्त्रियम्। स्त्रीम्। स्त्रियौ । स्त्रियः। स्त्रीः। स्त्रिया। स्त्रीभ्याम्। स्त्रीभिः। स्त्रियै। स्त्रियाः। स्त्रीणाम् । स्त्रियाम् । शेषं नदीवत् । श्रीः। श्रियौ। श्रियः । हे श्रीः। श्रियम् । श्रियौ। श्रियः। श्रिया। श्रीभ्याम्। श्रीभिः ॥ वेयुवः ❀ ११७ ॥ स्त्रियां वर्तमानादियुवन्तात्परेषांङितां वचनानांवाडागमोभवति स्त्रीं विना श्रियै । श्रिये । श्रीभ्याम् । श्रीभ्यः । श्रियाः । श्रियः। श्रीभ्याम्। श्रीभ्यः । श्रियाः। श्रियः श्रियोः ॥ श्र्यादीनां वामो नुट् वक्तव्यः ❀ ॥ श्रीणाम् । श्रियाम् । श्रियाम् । श्रियि । अडागमाभावे आमोप्य-

ईप् सेर्लोप इति। हसेप इत्यनेनेति शेषः स्त्री। अधातुत्वात् य्वोर्धातोरिति नप्राप्तेरी-त्ययमारम्भः। वामिति। अमि शसि च परे स्त्रीशब्दस्य वा इयादेशो वक्तव्य इति वार्तिकमेव लेखकैर्भ्रमात् सूत्ररीत्यालिखितम्। स्त्रियै इति।ङितामडिति नित्यमट् वेयुव इतितु वाशब्दस्य व्यवस्थितविकल्पार्थत्वादिहनप्रवर्त्तते । स्त्रीणामिति नुडामइति नुट्। ननु चात्रपरेण पूर्वबाधोवेतिनुटं बाधित्वापरत्वादिय्स्यात्। सर्वं परेणेत्यत्रपरशब्दस्येष्टार्थत्वादिष्टेन पूर्वेणापि इतरस्यबाधो भवतीत्यस्याप्यर्थस्य विज्ञानात्। अत एव च प्रायश इति तत्रोक्तम्॥ स्त्रियामिति। अटिकृते ङेराम् शेषंनदीवत्। हेश्रीरिति। धातुत्वान्न धौ ह्रस्वलोपौ। वेयु। स्त्रियांवर्त्तमानादिति। नित्यस्त्रीत्ववृत्तेरित्यर्थः। श्रियै इति। य्वोर्धातोरितीय् ततोऽट्। श्रिये इति अडभावे। इयुवःकिं प्रकृष्टाधीःप्रध्यौ श्र्यादीनामिति। श्रीप्रकाराणां नित्यस्त्रीत्वानां संबन्धिन आमोवा नुट्स्यात् इति वक्तव्यार्थः। इयादेशेनबाधितत्वान्नडागमोन प्राप्नोतीति विकल्पेनेदमुच्यते श्रियामिति । पूर्वं परत्वान्नित्यत्वाच्चेय् ततो वयुव

भावः । श्रियोः । श्रीषु । एवं धीप्रभृतयोप्यनीबन्ताः । एवं भूशब्दो भ्रूशब्दश्च । वधूजम्ब्वादीनान्तु नदीशब्दवद्रूपं ज्ञेयम् । वधूः वध्वौ । वध्वः । हे वधु । वधूम । वध्वौ । वधूः । वध्वा । वधूभ्याम् । वधूभिरित्यादि । ऋकारान्तो मातृशब्दः तस्य पितृशब्दवत्प्रक्रिया । स्त्रीलिङ्गत्वान्नत्वाभावो विशेषः । स्वसृशब्दस्य कर्तृशब्दवद्रूपम् । स्त्रीलिङ्गो रैशब्दः तस्य सुरैशब्दवत्प्रक्रिया । गोशब्दस्य ॥ पूर्ववत । नौशब्दस्य ग्लौशब्दवत ॥ इतिस्वरान्ताःस्त्रीलिङ्गाः ॥

इत्यट् पक्षेस्त्रियांयोरित्याम् । ननुचेवंर्णान्तादाम् विधीयते इत्यादेशेचकृतेनात्रिवर्णान्तं नामेति नस्यादाम् । मैवं यदयंस्त्रियामित्याह तज्ज्ञापयत्याचार्यो भवत्येवेयुवन्तादप्यामिति । अन्यथाऽत्रापिपरत्वान्नित्यत्वाच्चेयादेशेकृतेऽनिवर्णान्तत्वादामोप्रवृत्तेः स्त्रियामिति निर्देशोनोपपद्येत ज्ञापकस्यचाड्विधिविषयत्वादडभावेतु नामूस्यादित्यभिप्रेत्याह । अडागमाभावइति । एवं धीप्रभृतय इति । एवमिति प्रकारे श्रीप्रकारा इयङ्स्थानियात्वीदन्ताध्यादयोपि शब्दाःश्रीशब्दवत्स्युरित्यर्थः । एवमिति । भूभ्रूशब्दावपि उवन्तत्वादटं पाक्षिकं लभेते इत्यर्थः । भुवै भुवे भुवाः भुवः २ भूनां भुवांभुवीति । भ्रूशब्दस्य तुभ्रमेरौणादिकडूप्रत्ययान्तस्यधातुजत्वादूकारस्य धौह्रस्वः स्यादिति हेभ्रु इतिस्यात् । अधातुजत्वेप्यूकारस्यस्त्रीभुवोरित्युव् भवति । भ्रुवै भ्रुवे भ्रुवाः भ्रुवः २ भ्रूणां भ्रुवां २ भ्रुवीति शेषं सुगमम् । वधूजम्ब्वानामिति । एषान्तुविशेषान्तराभावान्नित्यमटि नदीशब्दवद्रूपाणि ज्ञेयानीत्यर्थः । हेवधित्रति । धौह्रस्वः इति ह्रस्वे धिलोपः । तस्येति । ऋदन्तत्वसाम्यात्सेरेत्यादिप्रक्रियास्य पितृशब्दवत् स्यादित्यर्थः । नत्वाभावइति । पुंसइत्युक्तत्वात्सोनःपुंस इत्यस्याप्रवृत्तेरितिशेषः । स्वसृशब्द इति सकारसंबन्धऋकारान्तत्वात् स्तुरारितिकर्तृवत्स्यादित्यर्थः । मातृस्वसृभ्यामीब्प्राप्तिस्तुन्त्रणईबित्यत्र वक्ष्यामः । स्त्रीलिङ्गोरैशब्दइति । स्त्रीत्वं चास्य क्षीरस्वामिनोक्तम् रात्येनंराःस्त्रीत्येक इति । अमरस्तु अर्थरैविभवाअपीति पुंस्त्वमेवाख्यत् । गोशब्दस्येति । प्रक्रियेत्यनुवर्त्तते । शेषं सुगमम् ॥ अन्ये त्वप्रसिद्धत्वान्नोक्ताः ॥ श्रीजानार्दनिवत्सराजतनयः

**अथ स्वरान्ता नपुंसकलिङ्गाः । तत्राकारान्तः कुलशब्दः । तस्य प्रथमाद्वितीयैकवचने ॥ अतोऽम् ॥ १५० ॥ अकारान्तान्नपुंसकलिङ्गात्परयोः स्यमोरम् भवति । अमोम्ग्रहणं लुग्व्यावृत्त्यर्थम । कुलम् । हे कुल ॥ ईमौ ॥ १५२॥ नपुंसकलिङ्गात्पर औरीकारमापद्यते । कुले । ज-**

श्रीकाह्लनामा द्विजोयं श्रीनायकदेविकापि सुधियं प्रासौत्सुतं माधवम् ॥ तस्य व्याकरणार्णवैकतरणेः सारस्वतीयागमद् व्याख्यान्त्यस्वरदारलिङ्गकरत्वान् सिद्धान्तरत्नावली ॥

अथेति । क्रमप्राप्तत्वादितिशेषः । अतोम् । अप्रश्लिष्टेपि निर्देशेऽमेवादेशो न मकारमात्रं तथा सति लाघवासन्देहार्थं मत :इति निर्देश्यं स्यादत आह । स्यमोःम्भवतीति । ननु किमर्थममादेशः क्रियते ममात्रमेव क्रियताम् द्वितीयैकवचने मकारस्य मकारे प्रयोजनाभावादन्त्याभावे अन्त्यसदेशस्येत्यकारस्य प्रसङ्गः स्यात् । अस्तु एकस्य संयोगान्तलोपाददोषः । नाप्यजरं कुलमस्तीत्यत्र स्वःजरसादेशो यथास्यादिति वाच्यम् । सन्निपातलक्षणपरिभाषया तस्याप्रवृत्तेः । एवं तर्हि द्वितीयैकवचने सन्नेवाम् लुकोप्रवृत्तेरवतिष्ठते इति सूचनार्थम् । तथा चैवं वचनव्यक्तिः सेरमादेशो भवति अमोपि सन्नेवाम् अवतिष्ठते इति न लुका निवर्त्यत इत्यर्थः । तेनाजरसं कुलं पश्येत्यत्रापूर्वविध्यसंभवात्संनिपातलक्षणपरिभाषाया अप्रवृत्तेर्जरसादेशः सिद्ध्यतीति सर्वमाभिप्रेत्याह अमोम्ग्रहणमिति । ग्रहणमुपादानमादेशे अकारसहितमकारोपादानं द्वितीयैकवचने नपुंसकात्स्यमोरिति लुकोवारणार्थमित्यर्थः । अन्येतु ग्रहणमुच्चारणं ग्रहिरुच्चारणक्रियः ग्रहणवता प्रातिपदिकेनेति यथास्थानिनोमोग्रहणमुच्चारणमनुवृत्त्यासंबन्धनं पुनस्तद्विधानेनासिद्धे सत्यारम्भोनियमार्थमिति नियमेनामोऽमेव यथा स्यात् लुङ्माभूदित्येवं लुको निर्वृत्तिव्याघातोस्य प्रयोजनं भवतीत्यर्थ इति व्याख्यायाऽजरसंकुलमस्ति-अजरसंकुलं पश्येत्युभयत्रापि संनिपातलक्षणपरिभाषाया अनित्यत्वाज्जरसादेशं विदधतो महाभाष्यकारादन्याननुसरन्ति । कुलमिति । अमूशसोरित्यलोपः । हे कुलेति । धेरम्यलोपे समानाद्धेरिति मोलोपः । केचित्तुन्सम्महत इत्यतोमङ्कप्लुत्याअथावित्यनुवर्तयन्तो धेर्लोपमेव विदधति । ई दीर्घविधिरस्थिनीइ-

**श्शसोः शिः * १५३ ॥** नपुंसकलिङ्गात्परयोर्जश्शसोः शिर्भवति । शकारः सर्वादेशार्थः ॥ गुरुश्शिश्च सर्वस्य वक्तव्यः । **नुमयमः * ११५ ॥** नपुंसकस्य नुमागमो भवति शौ परे । यमप्रत्याहारान्तस्य न भवति । मिदन्त्यात्स्वरात्परो वक्तव्यः* ॥ उकार उच्चारणार्थः । मकारो देशानियमार्थः ॥ **नोपधायाः * १३६ ॥** नान्तस्योपधाया दीर्घो भवति शौ परे धिवर्जितेषु पञ्चसु नामि च । कुलानि । पुनरपि । कुलम् । कुले । कुलानि । शेषं देववत् । एवं मूलफलपत्रपुष्पादयः ॥ **श्त्वन्यादेः * १५१ ॥** अन्यादेर्ग-

त्यादौ श्रवणार्थः । जश्शसोः शकारइति । असतिहि शकारे षष्ठीनिर्दिष्टत्वात्सकारस्य स्यादितिभावः । गुरुरिति । अनेकवर्णोत्र गुरुर्नपुनर्दीर्घः[1] । सर्वस्य सख्युरैत्वप्रसङ्गात् । शकार इत्यस्यासौशित् । ननुचैवमिताशकारेण शिदपि गुरुरेवेति नार्थः शिद्ग्रहणेन । उच्यते । असति शिद्ग्रहणेशकारस्य प्रयोजनान्तराभावादित्संज्ञैवन स्यादिति श्रवणमेवस्यात् । नुम् । अत्रकृत्रिमत्वात् यमिति प्रत्याहारएव गृह्यते । न यम् उपरमेइतिमत्वाह । यमप्रत्याहारान्तस्येति । नभवतीति । अनेनप्रसज्यप्रतिषेधोयमिति दर्शयति । मिदन्त्यादिति । मकारोयस्येद्भवति स आगमिनोन्त्यात्स्वरात्पर आगमोभवतीतिवक्तव्यार्थः । उकार इति । अन्यथा हसद्वयस्योच्चारणं दुष्करंस्यात् । मकार इति । अन्त्यात्स्वरात्परोदेशो मकारेणनियम्यत इत्यर्थः। अयमः किं वारि । इह चाजरांसीत्यत्र नित्यत्वात् पूर्वसंभवतानुमाव्यवधानात् जरसादेशोन प्राप्नोतीति चेन्नुमपि शब्दान्तरप्राप्त्या नित्यः कृतेजरसि तस्य प्राप्तोत्यकृतेन्यस्येति द्वयोरनित्ययोश्च परत्वाजरसादेशएवस्यादिति । जरसादेशवचनमस्मात्परं मन्तव्यं तेनाजरांसीतिपक्षे भवति । नोप । अत्रनकारमात्रस्योपधा न सम्भवतीति सामर्थ्यात्तदन्तग्रहणमितिमत्वाह नान्तस्येति । शाविति । क्लीबेनिमित्तं पञ्चस्विति स्त्रीपुंसयोः नामिचेति सर्वत्र । कुलानीति।कुलशीत्यत्रनुम्यनेनदीर्घः । पुनरिति अविशेषाद्द्वितीयापि प्रथमावदित्यर्थः । शेषमिति । अदन्तत्वसाम्यादितिभावःएकत्रिति । आदिशब्दस्य प्रकारार्थत्वान्मूलादिप्रकाराः क्लीबार्थाः कुलवत्साध्या इत्यर्थः ।

---

१ जस्साहचर्यात् शसपि स्यादिप्रकरणको गृह्यते तेन बहुश इत्यत्र तद्धिते शित्वं न ।

णात्परयोःस्यमोःश्तुर्भवति । शकारःसर्वादेशार्थः । उकार उच्चारणार्थः। अन्यत्।अन्यद्। अन्ये। अन्यानि। पुनरपि। अन्यत्। अन्यद्। अन्ये। अन्यानि। एवमन्यतरत् इतरत् कतरत् कतमदित्यादि शेषं सर्ववत् । इकारान्तोऽस्थिशब्दः ॥ नपुंसकात्स्यमोर्लुक् ॥ १४८ ॥ नपुंसकलिङ्गात्परयोःस्यमोर्लुग्भवति । अस्थि । य्वृणां नपुंसके धौवागुणो वक्तव्यः ॥ उक्तश्च, संबोधने तूशनसस्त्रिरूपं सान्तंतथानान्तमथाप्यदन्तम् ॥ माध्यन्दिनिर्वष्टि गुणं त्विगन्ते नपुंसके व्याघ्र-

किं सर्वोपिनेत्याह । श्तु । आदिशब्दस्यात्रव्यवस्थार्थत्वात्सर्वाद्यन्तर्गणोयमन्यादिः अन्य अन्यतरइतरडतरडतमेति नामपञ्चकात्मको गणो गृह्यते तत्रापिडतरडतमयोः प्रत्ययत्वात्तदन्ताः कतराद्यो गृह्यन्ते । शकार इति । अन्यथाऽमोमकारस्यस्यात् । एवमपि एकदेशविकृतस्यान्यत्वादमृशसोरित्यलोपोभविष्यति एवं तर्हि हे अन्यदितिधिलोपबाधनार्थः शकारः एकदेशविकृतन्यायस्यानित्यत्वज्ञापनार्थोवा अतएव हेसोमपेत्यत्राधातुत्वाद्धिलोपः । उकारउच्चारणार्थः अन्यदिति । वावसाने इति पक्षेदः । अन्यानीति । जश्शसोः शौ नुमदीर्घौ । य्वृणामिति । इउऋवर्णान्तानांक्लीबे धिविषयेवागुणः एओ अरिति क्रमेणस्यादितिवक्तव्यार्थः । अत्रार्थेसंमतिं संगमयति । उक्तं चेति, संबोधनइत्यादि । माध्यन्दिनिर्मुनिः उशनसः संबोधने त्रिरूपंवष्टि इच्छति । त्रयाणांरूपाणां समाहारस्त्रिरूपं समाहारेतईबिति ईबभावस्तत्रैववक्ष्यते सान्तं हेउशनः इति नान्तं हेउशनन्निति अदन्तं हेउशनेति । गुणंत्विति । इगन्ते इउऋवर्णान्ते क्लीबे गुणमेओअरिति क्रमेणसंबोधनेवष्टि कीदृशोसौव्याघ्रपदांवरिष्ठः श्रेष्ठ इत्यर्थः । नामिनः । अत्रस्याद्यधिकाराद्ध्यत्रेत्यादौ पदान्तरस्थेस्वरेनुमून । यद्यपि हले अस्थीत्यादौनित्यत्वात्पूर्वं लुप्ते सौ लुकिलतन्निमित्तमिति स्यादिनिमित्तोनुम् नप्राप्नोति अस्थिभ्यामित्यादौ तु केनवार्य्यते इति नाम्नोन इति नागमजे प्रवर्त्तते इति ज्ञापनार्थं स्वरे ग्रहणमिति मत्वा तत्र वक्ष्यति । नाम्नोनकारस्यानागमजस्येति । अस्थीनीति । जस्शसोः शौ नुमदीर्घौ । पुनरपीति । प्रथमावत् द्वितीयापीत्यर्थः । एतेनालोप इत्यतोमण्डूकप्लुत्यालोपानुवृत्तौ पुनर्लुग्ग्रहणस्य सर्वादेशार्थत्वादसोन्ता-

पदां वरिष्ठः ॥ हे अस्थे । हे अस्थि ॥ नामिनः स्वरे ॥ १५७ ॥ नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्वरे परे । अस्थिनी । अस्थीनि । पुनरपि । अस्थि । अस्थिनी । अस्थीनि ॥ अच्चास्थ्नां शसादौ ॥ १५८ ॥ अस्थ्यादीनां नुमागमो भवति । इकारस्य चाकारः शसादौ स्वरे परे ॥ अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ ॥ १४१ ॥ नान्तस्योपधाया अकारस्य लोपो भवति शसादौ स्वरे परे ॥ मकारवकारान्तसंयोगादुत्तरस्य न भवति । अस्थ्ना । अस्थिभ्याम् । अस्थिभिः । अस्थ्ने । इत्यादि ॥ वेङ्योः ॥ २०६ ॥

देशोनलुगितिद्योतयति । अच्चास्थ्नामिति । बहुवचनमन्यथानुपपत्त्याऽग्रेपठितान् दधिसक्थिअक्षिशब्दानपि संगृह्णातीत्याह अस्थ्यादीनामिति । इकारस्येति । नताव-न्नुमः विधिसामर्थ्यात् । नचनुम्विधेरकारार्थत्वं वाच्यम् अग्विधानेनापितत्सिद्धेः तस्मादन्त्याभावेन्त्यसदेशस्येतीकारस्यैव भवति पूर्वतो नामिन इत्यनुवृत्तेर्वा । शसादावित्यतद्गुणसंविज्ञानो बहुव्रीहिरित्यस्थीनीत्यत्रशसिनस्यात् । एवं च टादावितिवाच्ये शस्ग्रहणं वसोर्वउंश्वादेरित्याद्यर्थम् ॥ शसादौ किम् अस्थिनी । स्वरेकिम् । अस्थिभ्याम् अल्लोपः । नान्तस्येति । एतच्च नोपधाया इत्यनुवृत्तेर्लभ्यते मृचवश्चम्वौताभ्यांयुक्तं संयुक्तं संयोग इति यावत् तत्रसत्यपिम्वाभ्यामाद्याभ्यांसंयोगेवर्णान्तरव्यवधानादलोपाप्राप्तेः प्रतिषेधानुपपत्तेरन्त्याभ्यामेवसंयोगो गृह्यत इति मत्वाह मकारेत्यादि । म्वेति किं तक्ष्णा । युक्तात्किं नाम्नाम् । स्वरेकिं चर्मभ्याम् । शसादौ किं चर्मणी । अस्थ्नेति । अस्थि टा इत्यत्राच्चास्थ्नामिति नुम्यत्वे अल्लोपेश्लिष्टोच्चारणे चैवं स्यादित्यर्थः । अस्थ्नेइति प्राग्वत् । इत्यादीति । आदिना अस्थ्नः२अस्थ्नोः२अस्थ्नाम् ॥ वे । ईश्चङिश्च ईङीतयोः अत्रङेरिदन्तत्वेपिलाघवासन्देहार्थः परनिपातः तत्रापिई इति ईमावित्यस्य ग्रहणं नेपः । ङिसाहचर्यात्अननुबन्धपरिभाषयावेत्यभिप्रेत्याह- ईङ्योरिति । अस्थ्नि-अस्थनीति । उभयत्राच्चास्थ्नामितिनुमत्वे आद्येऽल्लोपः ईकारे उदाहरिष्यति । एवमिति । दध्यादयोप्यस्थिवत्साध्या इत्यर्थः । अत्र च त-

नान्तस्योपधाया अकारस्येङ्योः परयोर्वा लोपो भवति । अस्थ्नि । अस्थनि । एवं दधिसक्थिअक्षिशब्दाः । ईकारान्तो ग्रामणीशब्दः । नपुंसकस्य * २०६ । नपुंसकस्य ह्रस्वो भवति । ग्रामणि कुलम् । स्वरादौ नामिनः स्वरे इति नुमागमः । ग्रामणिनी । ग्रामणीनि । पुनः । ग्रामणि । ग्रामणिनी । ग्रामणीनि ॥ टादावुक्तपुंस्कं पुंवद्वा * १५८ ॥ उक्तपुंस्कं नाम्यन्तं न पुंस्कं टादौ स्वरे परे पुंवद्वा भवति । ग्रामण्या । ग्रामणिना । ग्रामणिभ्याम् । ग्रामणि-

दन्तविधेरपीष्टत्वात्प्रियास्थ्नाप्रियदध्नेत्यादावपिनुमत्वेस्तएव । नपुं । इहलिङ्गस्य शब्दधर्मस्यावर्णात्मकत्वात् ह्रस्वोनसंभवतीति सामर्थ्यात् मतुलोपादभेदोपचाराद्वा तद्वन्नाम नपुंसकशब्दे गृह्यत इति मत्वोदाहरति ग्रामणि कुलमिति । अत्रग्रामणिशब्दस्यग्रामाधिपार्थस्यविशेष्यलिङ्गत्वात्साक्षात् क्लीबत्वप्रतिपादनाय कुलशब्दस्य प्रयोगः । नपुंसकस्येतिकिं ग्रामणीःपुमान् । नाम्नइत्येव कुले तिष्ठतः । स्वरादाविति । ननुकथं नुमागमः यतोलाक्षणिकोयं नामीतिलक्षणप्रतिपदोक्तपरिभाषोपतिष्ठते न अनित्यत्वमस्याः तच्चवक्ष्यामः । ग्रामणीनीति । शौनुमि नोपधाया इति दीर्घः । टादा । अत्र यदि उक्तः पुमान् येन तदुक्तपुंस्कं शब्दरूपं पुंशब्दो भवतीति व्याख्याचेत् तदा ग्रामण्येत्यादौ पुंशब्दातिदेशेपि क्लीबार्थस्याऽनिवृत्तत्वात्सति ह्रस्वे नुमि च पुंवत्त्वस्यवैयर्थ्यादन्यतरानिवृत्त्याचरितार्थत्वेपितद्धेतुह्रस्वे नाभावगुणनुडौत्वानि प्राप्नुवन्ति तस्मादुक्तः पुमान् यस्मिन्नर्थे शब्दप्रवृत्तिनिमित्ते स उक्तपुंस्कोर्थः सोस्मिन्नस्तीति मत्वर्थीयाकारेण नामापि क्लीबमुक्तपुंस्कं समानायामाकृतावुक्तपुंस्कमितियावत् । तत्रपुंवत् पुमर्थवद्भवतीति व्याख्येयम् । तथा चोक्तं, शब्दप्रवृत्तेर्निमित्तं यत् क्लीबेतच्च पुंसिचेत्तदाभाषितपुंस्कत्वम् । पटुने पटवे यथेति, अत एव पीलुनेफलायेत्यत्र न भवति । अत्र हि पुंसिवृक्षाकृतिः प्रवृत्तिनिमित्तम् । क्लीबेतु फलाकृतिरिति प्रवृत्तिनिमित्तभेदः । तदुक्तं पीलुर्वृक्षः फलं पीलु पीलुने नतुपीलवे । वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फलेपुनरिति । ग्रामण्या ग्रामणिनेति । ग्रामणीशब्दोहिग्रामाधि-

भिः । ग्रामण्ये । ग्रामणिने । ग्रामणिभ्याम् । ग्रामणिभ्यः इत्यादि ॥ नुमन्तस्यामि दीर्घः * ग्रामणीनाम् । ग्रामण्याम् । ग्रामणिनि । ग्रामण्याम् । ग्रामण्योः। सोमपम् । सोमपे। सोमपानि । पुनरपि। सोमपम् । सोमपे। सोमपानि । सोमपेन । सोमपाभ्याम् । सोमपैरित्यादि । उकारान्तो मधुशब्दः । हे मधो । हे मधु । हे कर्तः । हे कर्तृ । कर्त्रा । कर्तृणेत्यादि ॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥

पत्वमेव प्रवृत्तिनिमित्तमादाय पुंसि क्लीबे च वर्त्ततइति भवत्येवोक्तपुंस्क इति पुंवत्त्वपक्षे सर्वत्र घ्यौवेतियः अन्यत्रनामिनः इति नुम् । स्वरेकिं ग्रामणी । टादौकिंग्रामणीनि । उक्तपुंस्कं किं वारिणे। नामिनः किं सोमपेन । नुमन्तस्येति । नुमः पूर्वभक्तत्वान्नामीति न प्राप्नोतीत्यारम्भः । ग्रामण्यामिति । पुंवत्पक्षेआमि यत्वम् ॥ ग्रामण्यामिति नुमभावे आमुङेरित्यामि यत्वं शेषं सुगमम् । सोमपमिति । सोमपाशब्दस्य नपुंसकस्येति ह्रस्वे अतोमिसमि अमृशसोरस्येत्यलोपः । ननु तत्राधातोरित्यनुवर्त्तते इत्युक्तम् । अयं च पाधातुः । मैवं तत्र समान एव लोपस्य निमित्तं यश्चात्र धातोः समानो नासौ श्रूयते यश्च श्रूयते नासौ धातोः सर्वस्य च समानस्य विकृतत्वादेकदेशविकृतन्यायोपि नोपतिष्ठते अत एव हेसोमपेत्यत्रापि धिलोपः । सोमपे इति । ईमौपत्वम् सोमपानीति । जश्शसोः शौनुमृदीर्घौ सोमपैरित्यादिदेववत् अक्रममत्रास्य निरूपणं तु टादावुक्तपुंस्कमित्यत्र नामिन इत्यतो नाभिग्रहणमनुवर्त्तत इति सूचनार्थम् ॥ हेमधो हेमध्विति । ग्यृणामिति । पक्षेगुणः अस्योक्तपुंस्कत्वाभावान्न पुंवद्भावः । हेकर्तरिति । अत्रगुणेरिरस्यविसर्गः । कर्त्राकर्तृणेति । करणसंपादकत्वमेवास्य पुंनपुंसकयोः प्रवृत्तिनिमित्तमित्युक्तपुंस्कत्वात् पुंवत्पक्षे । ऋरम् । अन्यत्रनुम् पूर्नोणइति णत्वम् । इत्यादीति । आदिना कर्त्रे कर्तृणे कर्तुः २ कर्तृणः २ कर्त्रोः २ कर्तृणोः २ कर्तृणाम् कर्त्राम् कर्तरिकर्तृणिइतिज्ञेयम् । संध्यक्षरान्तास्त्वत्रकृतह्रस्वा इकारोकारान्तावेवेति न ते पृथगुक्ताः । प्ररि । प्ररिणी २ प्ररीणि । प्रराया प्ररिणा । प्रराभ्यामित्यादौ हसेतु एकदेशविकृतस्यानन्यत्वाद्रैस्भीत्यात्वम् । आमि तु सन्निपातलक्षणपरिभाषया आत्वाभावात् प्ररीणामित्येव भवति पुंवद्भाव-

अथ हसान्ताःपुँल्लिङ्गाः । तत्र हकारान्तोऽनडुह्शब्दः । पञ्चस्वनडुह आमागमो वक्तव्यः ॥ सावनडुहः १५६॥ अनडुह्शब्दस्य सौ परे नुमागमो भवति । संयोगान्तस्य लोपः २२६ ॥ संयोगान्तस्य रसे पदान्ते च लोपो भवति-अनड्वान् । अनड्वाहौ । अनड्वाहः । धावम् १७१ ॥ अनडुह्शब्दस्य चतुर्शब्दस्य च धौ परे अमागमो भवति । हे

पक्षे तु प्रराद्याम् । सुनु सुनुनी २ सुनूनि २ सुनावा सुनुना सुनुभ्यामित्यादि ॥ श्रीजानार्दनिवत्सराजतनयः श्रीकाह्ननामा द्विजो यं श्रीनायकदेविकापि सुधियं प्राजीजनन्माधवम् । तस्य व्याकरणार्णवैकतरणेः सारस्वतीयागमद् व्याख्यान्त्यस्वरषण्ढलिङ्गनिनदान् सि० ॥ ३ ॥ अथेति । क्रमप्राप्तत्वादारभ्यन्तइत्यर्थः । तत्रेति । तेषु पुँल्लिङ्गेष्वयं निरूप्यतइत्यर्थः । पञ्चस्विति । वक्तव्यो व्याख्येयः तस्येदं व्याख्यानं चतुरामित्यतः परमनडुहश्चेति सूत्रमस्ति तेनात्राम् भवति । तस्य चायमर्थः । अनडुहश्च अनडुहशब्दस्यामागमो भवति पञ्चसु परेषु शौ च । अत एव स्वनड्वांहि इति शस् श्यामप्याम् भवति चकारस्त्वनुकर्षणार्थः अनेकार्थश्चेत्यनुडुह ईप्यपिवामि अनड्वाही अनडुहीति यथा स्यात् । अतएव चतुरनडुहोराम् शौचेति कार्येपृथग् योगकरणम् । साव । नुमागम इति । नुमयमइत्यतोनुवर्तमानइत्यर्थः । संयो । रस इति । वसांरस इत्यतोनुवर्त्तते । अनड्वानिति । अनडुहस् इत्यत्रामिमित्त्वादुकारात्परेवत्वे नुमि हसेप इति सिलोपे संयोगान्तत्वाद्धलोपे च कृते एवं स्यादित्यर्थः । ह्रस्वोवेत्यतो मण्डूकप्लुत्यावानुवृत्तेरुर्गित्यादौ लोपो न । धा । आमोपवादोयं हे अनड्वन्निति । अनेनामि शेषं प्राग्वत् वसाम् । इदं च बहुवचनसामर्थ्यादन्यान् गृह्णन्छास्त्रान्तरानुरोधात् स्रंसादीनेव संगृह्णातीति दर्शयितुमाह । वसुस्रंसुध्वंस्वनडुहामित्यादि । अत्र च वसामित्युत्सृष्टानुबन्धनिर्देशः क्वसोरपि संग्रहणार्थः । वसूनामिति निर्देशे हि एकानुबन्धग्रहणेन ह्यनुबन्धकस्येति क्वसोर्ग्रहो न स्यात् बहुवचनन्तु स्रंसादिग्रहायैवेति नैनां परिभाषां बाधितुं समर्थमिति विदेर्वसोरेवग्रहःस्यात् । सोप्युकारशकारेत्त्वे नद्व्यनुबन्धकइति चेद्यथान्यासेपि नदोषः

१ अनड्वानित्यत्र आगमद्वयस्य एकदैव प्राप्तिरायाता तन्निर्णयोनैव विवर्णकृता विद्योतितः अत्र सूत्रे वादीपोः शतुरित्यतः आद्दत्याकृष्यएवमर्थो बोध्य आकारात् परोनुम् तेन आदावाम् पश्चान्नुम् ।

अनड्वन् । अनड्वाहम् । अनड्वाहौ । अनडुहः । अनडुहा ॥ वसां रसे ॥ २२ ॥ वसुस्रंसुध्वंस्वनडुहां रसे पदान्ते च दत्वं भवति । अनडुद्भ्याम् । अनडुत्सु । गोदुह्शब्दस्य भेदः ॥ दादेर्घः ॥ २३६ ॥ दादेर्धातोर्हकारस्य घत्वं भवति झसे पदान्ते च । गोदुघ्सीतिस्थिते ॥ आदिजबानां

लाघवं च । तथा सति सान्तस्यैव वसोर्यथा स्यादन्यत्र मा भूदित्येवमर्थम् । अत एव विद्वान् पेचिवानित्यादौ न भवति । ननु यथा दविधिर्विद्वद्भ्यामित्यादौ विसर्गबाधित्वा प्रवर्तते । तथा विद्वानित्यादावपि संयोगान्तलोपं बाधित्वा सान्ते प्रवर्त्स्यति । नैष दोषः । येननाप्राप्तिन्यायेन विसर्गादेशे प्राप्ते आरभ्यमाणत्वात्तस्यैवायं बाधको यथानडुद्भ्यामित्यादौ ढत्वस्य न संयोगान्तलोपस्य । तस्मिन् प्राप्ते चाप्राप्ते आरभ्यमाणत्वात् । ननु चैवमपि सुष्ठु वस्तेसुवः सुवोभ्यामित्यत्रापि प्राप्नोति । न । अत्र हि कृत्रिमाकृत्रिमपरिभाषया कृत्रिमस्य ग्रहणं न धातोरकृत्रिमत्वात्। तत्राप्यात्र्यन्ताभ्यामिति कृत्रिमस्य प्रत्याहारस्य ग्रहणं न अनदन्तनिर्देशात् शैलीयमाचार्यस्य यददन्तान् प्रत्याहारानयं निर्दिशति झपानां चपानामिति अत्रापीदं बोधनं भवावः सुखिनावत्रापि प्राप्नोति । मैवं वसामिति षष्ठी निमित्तेनापि संबध्यते । वसां विहितप्रत्ययसबन्धिनि रसे पदान्ते चेति अनुडुद्भ्यामिति । अनुडुद्भ्यामित्यत्रानेनविधीयमानं षष्ठीनिर्दिष्टस्येति हस्य होढ इति ढत्वापवादोदत्वं स्यादित्यर्थः । अनडुत्स्विति । सुपि हस्य दत्वे खसे चपा इति तत्वं इह च तदन्तविधेरपीष्टत्वात्प्रियानड्वान् प्रियानड्वाहौ प्रियानड्वाहः हे प्रियानड्वन् प्रियानडुद्भ्यामित्यादि स्यादित्यर्थः । अथेहदत्वं कस्मान्न भवति अनड्वान् हे अनड्वन्निति नुम्विधिसामर्थ्यात् नुमन्तरेणापि हस्यदत्वे तथासिद्धत्वात् गोदुह्शब्दस्येति । गांदोग्धीति क्विबन्तदुह्यन्तस्येत्यर्थः। दादे । अत्र धातोर्झसइत्यतो धातोरित्यनुवर्त्तते सायदि समानाधिकरणषष्ठी स्यादादिर्योधातुस्तस्य हस्य घ इति तदादुहेर्दिपि दिवादावटो धातुग्रहणेन ग्रहणाददादित्वात् । घत्वं न स्यात् अधोक् अतोवयवषष्ठीयंव्याख्यायते व्याख्यानतोहि विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति।तेन धातोरवयवो यो दादिस्तस्यावय-

झभान्तस्य झभा स्ध्वोः ❀ २४८ ॥ धातोर्झभान्तस्यादौ वर्त्तमानानां जबानां झभा भवन्ति सकारे ध्वशब्दे च परे नाम्नस्तु झसे पदान्ते च ॥ वावसाने ❀ २४७ । अवसाने वर्त्तमानानां झसानां जबा भवन्ति चपा वा । गोधुक् । गोधुग् । गोदुहौ । गोदुहः । हे गोधुक् । हे गोधुग् । गो-

वस्यहस्येत्यर्थः स्यात् । ननुचैवंदुग्धेत्यादौ न स्यात् अत्र हि धातुरेव दादिर्नतदवयवःमैवम् । अवयवावयविनोरभेदोपचारात् । अथवा दकारादेर्हकारान्तस्याधातोरभावात् धात्वनुवृत्तिःस्वसामर्थ्याद्धातूपदेशंलक्षयतिततश्च धातूपदेशावस्थायांदादेरित्यर्थः । तेनेदमपि सिध्यति दामलेढीति दामलिट् तमिच्छतीति दामलिह्यति ततःक्विप्दामलिट् अत्र घत्वं नभवति । झसे पदान्ते चेति । द्वयमप्येतदनुवर्त्तते । यत्तु काचित्क्यांवृत्तौ पठ्यते नाम्नश्चसे इतितन्नपठनीयंनामसंज्ञयाधातुसंज्ञाया: अनपलापाद्धातोर्झसे पदान्ते चेत्येवसिद्धत्वात् । गोदुघूसीति स्थितेइति । अनेन घत्वे कृतेसतीति शेषः । आदि । अत्रापि धातोरित्यवयवषष्ठ्यन्तमनुवर्त्तते । तेन धातोरवयवोयोझभान्तस्तस्यादिजबानां झभा भवन्तीत्यर्थः । तेन गर्द्दभमाचष्टे गर्द्दभयति ततः क्विप् गर्धप् इत्यत्रगर्द्दभेर्धातोरवयवस्य दभो झभान्तस्यादिजबस्यदस्य झभोधःसिद्ध्यति । अन्यथागस्यघःस्यात् अकारविलोपयो[illegible]तद्भावोनेष्यतइति निमित्तमस्त्येव । तथा दामलिहमिच्छन्दामलिडित्यत्रापियोदामलिहेर्धातोरवयवोझभान्तोलिडितिनतस्यादौजबोदःयस्यचदामेत्यस्यादौजबोनासौझभान्त इति न भवति झभादेशः अन्यथात्रापि स्यात् अयमेवाचार्य्याभिप्रायइति वृत्तौ लक्ष्यते । धातोर्झभान्तस्यादाविति । धातोरवयवोयोझभान्तस्तस्यादावित्यर्थः । अन्यथा झभान्तस्य धातोरादावित्यवक्ष्यत् धोक्ष्यतीत्यादौ तु तादृग्विधावयवाऽसंभवादभेदोपचारेण धातुरेवझभान्तो गृह्यते । सकारेध्वशब्देचेति । धातोःसकारे ध्वशब्देचपरे नामसंज्ञस्य तु झसे पदान्ते चोभयस्यापीत्यर्थः । जबानां किं क्रोत्स्यति । झभान्तस्य किं दास्यति स्वःकिं बोद्धा वकारयुतधग्रहः किं दधधारण इत्यस्य यङ्लुकि द्वित्वे अब्लुकि -झसाद्धिर्हेरिति हेर्धित्वे दादद्धीत्यत्र झभोमाभूत् आदिग्रहणं चिन्त्यम् । वाव । चपावे इति । खसे चपा इत्यतोत्तमानां वावचनात्पक्षे स्युरित्यर्थः । गोधुगिति । गोदुहसित्यत्र

दुहम् । गोदुहौ । गोदुहः । गोदुहा । भकारादौ सर्वत्र घत्वम् । गोधुग्भ्याम् । गोधुग्भिः । कषसंयोगे क्षः । गोधुक्षु । मधुलिह्शब्दस्य विशेषः ॥ होढः ॥ २३५ ॥ धातोर्हकारस्य ढत्वं भवति धातोर्झसे पदान्ते च । मधुलिट् । मधुलिड् । मधुलिहौ । मधुलिहः । हेमधुलिट् । हेमधुलिड् । मधुलिहम् । मधुलिहौ । मधुलिहः । मधुलिहा मधुलिड्भ्याम् । मधुलिट्सु ॥ दुहादीनां घत्वं ढत्वं वा ॥ मित्रध्रुक् । मित्रध्रुग् । मित्रध्रुट् । मित्रध्रुड् । मित्रद्रुहौ । मित्रद्रुहः । हे मित्रध्रुक् । हे मित्रध्रुग् । हे मित्रध्रुट् । हे मित्रध्रुड् । मित्रद्रुहम् । मित्रद्रुहौ । मित्रद्रुहः । मित्रद्रुहा । मित्रध्रुग्भ्याम् । मित्रध्रुड्भ्यामित्यादि । एवं तत्त्वमुहादयः । रेफान्तश्चतुर्शब्दो नित्यं बहुवचनान्तः ॥

दादेरिति हस्यघत्वे आदिजबानामिति दस्य धत्वे सिलोपे वावसान इतिघस्य कगयोरेवंस्यादित्यर्थः । भकारादावित्यादि । गोधुग्भ्यामित्यादौ । मधुलिह्शब्दस्येति । मधु लेढीतिक्विबन्तलिह्यन्तस्येत्यर्थः । हो । मधुलिट्स्विति । मधुलिह्सुइत्यत्र होढ इति ढे खसे चपाइति टे ष्टुत्वेन प्राप्तस्य षत्वस्य टोरन्त्यादिति निषेधस्तत्रवोपपादितः । द्रुहादीनामिति । एतच्च द्रुहादेर्वेति सूत्राल्लभ्यते तस्यचायमर्थः । द्रुहादेर्धातोर्वाघत्वं भवति धातोर्झसे पदान्ते च पक्षेढः आदिशब्दात् सुहस्नुहृस्निहोगृह्यन्ते । मित्रध्रुगित्यादि । मित्रायद्रुह्यतीति क्विप् दादित्वाद्धस्य घत्वे प्राप्ते विकल्पः अन्येषामप्राप्ते । प्रक्रियातु गोदुह्शब्दवदस्य मित्रध्रुडित्यादि । ढत्वपक्षेत्र प्रक्रिया मधुलिह्शब्दवत् । एवमिति । मुहादयोप्येवं स्युरित्यर्थः । केचिन्नशमप्यत्रपठन्ति तथाचोक्तं, बोपदेवपण्डितैःद्रुह् मुहस्नुहन्शष्णिहःमुहादिरिति तेननगन्नक्नड्नट् इति भवन्ति । रेफान्त इति । चतुराम् । चतुरिति लुप्तषष्ठीकं पदम् । अत्रेतोत्पञ्चस्वित्यतोनुवर्तमानं पञ्चस्विति चेनसमुच्चीयते इ-

१ द्रुहादेरयमत्रगणनिर्देशः स च अनित्यस्तेन यङ्लुङन्ते निषेधो न प्रवर्तते ।

चतुराम् शौ च १६९ ॥ चतुर्शब्दस्यामागमो भवति पञ्चसु परेषु शौ च । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ ॥ रः सङ्ख्यायाः ❀ ८३ ॥ रेफान्तसङ्ख्यायाः परस्यामो नुडागमो भवति । चतुर्णाम् । चतुर्षु । नकारान्तो राजन्शब्दः ॥ नाम्नो नो लोपशधौ ❀ २२५ ॥ नाम्नो नकारस्यानागमजस्य लोपश् भवति रसे पदान्ते चाधौ । राजा । अधाविति विशेषणात् हे राजन् । राजानौ । राजानः । राजानम् । राजानौ । जञोर्ज्ञः राज्ञः । राज्ञा । लोपशिपुनर्न सन्धिरिति नियमादङ्कीत्यात्वन्न। राजभ्याम् । राजभिः । राज्ञे । राजभ्याम् ।

त्याह । पञ्चसु परेषु शौचेति । चत्वारइति । अत्रामि डवमितिवत्वम् । अत्र तदन्तविधेरपीष्टत्वात् । गौणत्वेपि प्रियचत्वाः प्रियचत्वारौ प्रियचत्वार इत्यादि भवति । धावमित्यत्रास्याप्यनुवृत्तेर्हे प्रियचत्वं इति । चतुर्भिरिति । राघप इति भस्यद्वित्वे झबे जबा इति बः । रः । अत्ररमात्रंसङ्ख्यानास्तीति सामर्थ्यात् तदन्तग्रहणमित्याह रेफान्तसंख्याया इति । चतुर्णामिति । अनेनात्रनुटि णत्वद्वित्वे । ननु प्रियचतुरामित्यत्रनुट्कस्मान्न भवति । उच्यते अत्र सङ्ख्याया इति षष्ठी आमासंबध्यते सङ्ख्याशब्दश्चान्वर्थः सङ्ख्यायतेऽनयेति तेन सङ्ख्यायमानस्यार्थस्य बहुत्वे वाच्येविहितस्याम इत्यर्थः स्यात् । प्रियचतुरामित्यत्र बहुव्रीह्यर्थबहुत्व आमस्तीति न नुट् भवति । परमचतुर्णामित्यत्र तु प्राधान्यात्संख्यार्थस्यैवबहुत्वेआमस्तीतिनुड्भवति । चतुर्ष्विति । किलादिति रात्षत्वम् । नन्वत्र रेफस्यविसर्गः प्राप्नोति मैवं यदयंयकृचतुर्ष्विति रेफं निर्दिशतितज्ज्ञापयति । न प्राकृतरेफस्यविसर्गःस्यादिति सजूःष्वित्यादौ तु लाक्षणिकस्य स्यादेव । नाम्नो । अनागमजस्येति । एतच्चनामिनः स्वरइत्यत्रोपपादितम् । अथवा नामाधिकारे पुनर्नामग्रहणं नाम्न एव यथा स्यात् । नामान्तर्गतस्यापि हि तस्या[2]गन्तुकस्य नलोपोमाभूदिति क्रियते । राजेति । नोपधायाइतिदीर्घेसिलोपनलोपौ । अधावितीति । नोपधाया नाम्नोन इत्युभयत्राप्यधावित्यस्तीति । हेराजन्नित्यत्र न लोपदीर्घौ न भवत इत्यर्थः । लोपशीति । एतच्चतत्रैव प्रत्यपादि । अङ्कीत्यु-

---

१ सप्तमीबहुवचने प्राकृतरेफस्य न विसर्गः यदयं चतुर्षु निर्देशः अन्यथा विभक्तिसमानाधिकरण्यात् चतसृषु इति स्यात् एतदर्थमेव लिंगव्यत्ययः ।

२ तस्यागंतुकस्य पञ्चन्नित्यादौ ।

राजभ्यः।राज्ञः।राज्ञोः।राज्ञाम्।राज्ञि।राजनि।राज्ञोः।राजसु । एवं यज्वन् आत्मन् सुधर्मन् प्रभृतयः। यज्वा । यज्वानौ । यज्वानः । यज्वानम् । यज्वानौ।अम्वयुक्तादितिविशेषणाद्-ल्लोपो नास्ति।यज्वनः।यज्वना इत्यादि । श्वन्युवन्मघवन् शब्दानां पञ्चसु न विशेषः । श्वा । श्वानौ । श्वानः । श्वानम्। श्वानौ॥श्वादेः ॐ १६१ ॥ श्वादेर्वकारउत्वंप्राप्नोतिशसादौस्वरे परे ईपि ईकारे च । शुनः । शुना । श्वभ्यामित्यादि । युवा । युवानौ । युवानः । हे युवन् । यूनः । यूना । युवभ्या-मित्यादि । मघोनः । मघोना । मघवभ्याम् । मघवभिरि-त्यादि । पथिन्शब्दस्य भेदः ॥ इतोऽत् पञ्चसु ॐ १६४ ॥ पथ्यादीनामिकारस्याकारादेशो भवति पञ्चसु स्यादिषु परेषु ॥ थो न्थ् ॐ १६५ ॥ पथिमथोस्थकारस्य नुडाग-मो भवति पञ्चसु परेषु ॥ आसौ ॐ १६६ ॥ पथ्यादी-

पलक्षणं भ्य एस्मीत्यपिनभवति । एवमिति । एतेपि राजवत्स्युरित्यर्थः । अ म्वयुक्तादितीति । अल्लोपः स्वर इत्यत्र श्वन्नित्यादिप्रक्रियेति शेषः । परिगणनं तु श्वादेरित्यत्रादिशब्देनैतेषामेव ग्रहणं यथा स्यादिति । श्वादेः । अत्रवसोर्व उमि-त्यतोव उमिति वर्तते अल्लोप इत्यतः शसादौ वादीपोरित्यतईकार ईत्रपीति । मत्वाह वकार इत्यादि । शुनइति । अनेनात्रश्वाकारवकारस्योत्वंश्वभ्यामिति राजभ्यामितिवत् । यून इति । युवन्शब्दस्य स्वरादौ शसादौ श्वादेरिति कृ तवकारोकारस्ययुवन्शब्दोकारेण सहदीर्घे एवं स्यादित्यर्थः । इह प्रातिपदिक ग्रहणेलिङ्गविशिष्टस्यापि ग्रहणमित्यस्याविभक्तिनिमित्तविषयत्वान्नुवर्तीः पश्ये त्यत्र तु नोत्वं नोपधाया इत्यनुवृत्तेरनन्तत्वाद्वा ॥ मघोन इत्यादि । अत्र वकारोका रेवकाराकारेण उओ इत्योकारः । इतः । पथ्यादीनामिति । पथिमाथिऋभुक्षा मित्यर्थः । इतः किं नकारस्य माभूत् तपरः किं पन्थानमात्मनइच्छति पथीयति यप्रत्ययेदीर्घः पथीयतेः क्विप् यत इति यलोपः पथीः अत्र न भवति । पञ्चसु किं

१ अत्राद्वचनंतुचिंत्यम् इतआपंचसु इत्येव सुवचं तथाच आसाविति सूत्रमपिनकर्तव्य इति लोकेशशर्मणो व्याख्यानं तन्नविशदं प्रक्रियानिरूपितलाघवेपि हेपंथा इत्यादौ नलो पो न स्यात् ।

नां टेरात्वं भवति सौ परे । पन्थाः । पन्थानौ । पन्थानः । हे पन्थाः । पन्थानम् । पन्थानौ ॥ पथां टेः ॥ १६३ ॥ पथ्यादीनां टेर्लोपो भवति शसादौ स्वरे परे । पथः । पथा । पथिभ्याम् । पथिषु । एवं मथिन्ऋभुक्षिन्शब्दौ । मन्थाः । मन्थानौ । मन्थानः । मन्थानम् । मन्थानौ । हे मन्थाः इत्यादि । ऋभुक्षाः । ऋभुक्षाणौ । ऋभुक्षाणः । ऋभुक्षाणम् । ऋभुक्षाणौ । ऋभुक्षः इत्यादि । दण्डिन्शब्दस्य भेदः ॥ इनांशौ सौ ॥ १४० ॥ इन्हन्पूषन्नर्यम्णामित्येतेषां शौ सौ चा धौ परे उपधाया दीर्घो भवति । दण्डी । दण्डिनौ । दण्डिनः । हेदण्डिन् । दण्डिनम् । दण्डिनौ । दण्डिनः ।दण्डिना । दण्डिभ्याम् इत्यादि । ब्रह्महन्शब्दः । ब्रह्महा।ब्रह्महणौ । ब्रह्महणः। हेब्रह्महन्।ब्रह्महणम्।ब्रह्महणौ।शसादावल्लोपः।हनोघ्न ॥ २९२

पथिभ्याम् ॥ थो । आ । पन्थानावित्यादि । नोपधाया इति दीर्घः पथान् । लोप इति । आतो धातोरित्यतोनुवर्तमान इत्यर्थः । पथिष्विति । अत्र न लोपश्चयपियथा षत्वं भवति तथा लोपशि पुनरित्यत्रोपपादितम् । एवमिति । अन्यथानुपपपत्त्या पथामिति बहुवचनेन जिघृक्षिताविमावुपात्तौ पथिवत् स्यातामित्यर्थः । इनाम् । बहुवचनेन जिघृक्षितानपि गणयति । इन्हन्नित्यादि । ननु सर्व एवैते नान्ता इति नोपधाया इत्येव सिद्धो दीर्घः । एवं तर्हि नियमार्थमिदम् एषामत्रैवदीर्घो नान्यत्रेति तेन दण्डिनौ पूषणावित्यादौ नदीर्घः । विभक्तिनिमित्तस्योपधालक्षणस्य च नियमेन व्यावर्त्यत्वात्पूषायतइतिये दीर्घोभवत्येव । दण्डीति अत्र दीर्घेनसिलोपौ शेषं सुगमम् । ब्रह्महणाविति । अवकुप्वितिणत्वं शसादाविति अल्लोप इत्यनेन । हनो । हन्तिरत्रहनोघदित्यतोनुवर्तते । सूत्रेचहइति स्थानिनिर्देशः घ इत्यादेशनिर्देशः नइति च तत्रादेशद्वयेपि सावर्ण्याद्धकारस्यैव घकार इति मत्वाह हन्तेर्हकारस्येत्यादि । अयमर्थः नकारे परेऽव्यवहितो यो हन्तेर्हकारस्तस्यघः स्यात् । ततश्च हननमित्यादावकारस्य व्यवधानान्न

हन्तेर्ह्नीतोर्हकारस्य घत्वं भवत्यव्यवधाने नकारे ञ्णिति च परे । घसंयोगो णत्वनिषेधार्थः । ब्रह्मघ्नः । ब्रह्मघ्ना । ब्रह्महभ्यामित्यादि । पूषा । पूषणौ । पूषणः । पूषणम् । पूषणौ । पूष्णः । पूष्णा । पूषभ्यामित्यादि । पूष्णो ङौ टेर्लोपो वेति केचित् ❀ । पूषि, पूषणि, पूष्णि इत्यादि । अर्यमा । अर्यमणौ । अर्यमणः । हेअर्यमन् । अर्यमणम् । अर्यमणौ । अर्यम्णः । अर्यम्णा । अर्यमभ्यामित्यादि ।

घत्वं तथा ञ्णतीत्यधिकारात् ञ्णाति परतो यो व्यवहितोहन्तिस्तस्यावयवस्य हस्य इति ततोऽघ्नीत्यत्र घत्वंभवति । ननु चैवमपिजिघांसति जघनिथ । गतौ जङ्घन्यते इत्यादौ न स्यात् नह्यत्रोक्तं किञ्चिन्निमित्तमस्ति। उच्यते । अत्रादिस्वरस्येत्यत आदिग्रहणमनुवर्त्तते तच्चार्थात्पञ्चम्यन्तं भवति । सूत्रे च हनोघ इति विभज्यते तेन हन्तेरादेः पूर्वरूपात्परस्यहस्य घ इति । तस्यार्थः ततोजिघांसतीत्यादौ घत्वसिद्धिः ततो ने इति द्वितीयो योगः तत्र च हनोघितिवर्तते तेनहन्तेर्हकारस्य घत्वं भवति नकारे ञ्णिति च परे नकारश्चान्तादेश इत्यर्थः । ननुकिमर्थंनकारोविधीयते नियमार्थं नएवयथास्याण्णत्वं माभूदिति अत एवाह घसंयोग इति । संयुज्यते सहविधीयते इति संयोगः घेन संयोगोघसंयोगः घकारेण सह नस्य विधीयमानोनकारो नियमार्थतया ब्रह्मघ्न इत्यादौ अवकुप्विति प्राप्तस्यणत्वस्यनिषेधार्थइत्यर्थः । अत्रनविधिरितिवाच्ये संयोग वचनसन्निधानं सन्नियोगविशिष्टानामन्यतराभावे उभयाभाव इत्यघत्वविषये णत्वनिवर्तको नोपिनभवतीतिसूचनार्थम् । ब्रह्महणौ नन्वत्रापिनिमित्तत्वादेवनो नभविष्यति, मैवं निर्निमित्त एवायं घसंयोगेविधीयते । अन्यथा ब्रह्मघ्न इत्यत्रैव नस्यादिति । ब्रह्मघ्न इत्यादि । ब्रह्महन्शस् इत्यत्रोपधालोपेऽनेन हस्यघत्वे नत्वेचणनिवर्तके कृतेश्लिष्टोच्चारणेकृतेचैवंस्यादित्यर्थः । पूष्ण इत्यादि णत्वम् । संख्याशब्दा इति । बहुत्वसङ्ख्यावाचित्वात् बहुवचनान्तास्त्रिषु सरूपा इति । ननु कथं सरूपाः यावतास्त्रियांनान्तत्वादीप् प्राप्नोति । लुप्तेपि नकारेऽदन्तत्वादाप्प्राप्नोतीति चेत् । मैवं, तत्रहि वर्त्तमानं स्त्रियां ग्रहणं नाम्नो विशेषणं स्त्रियां वर्त्तमानान्नाम्न इति स्त्र्यर्थवृत्तेर्नाम्न इत्यर्थः । न च पञ्चादीनां स्त्री-

सङ्ख्याशब्दाः पञ्चन्प्रभृतयो नित्यं बहुवचनान्तास्त्रिषु सरूपाः । पञ्चन् जसिति स्थिते ॥ जश्शसोर्लुक् ✽ ८७ ॥ षकारनकारान्तसङ्ख्यायाः परयोर्जश्शसोर्लुग भवति । लुकि न तन्निमित्तम् । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः २ ॥ ष्णः ✽ ८४ ॥ षकारनकारान्तसङ्ख्यायाःपरस्यामो नुडागमो भवति । पञ्चानाम् । पञ्चसु । एवं सप्त-

त्वमर्थः किंतु भेदगणनमात्रम् । अत एव पञ्च ब्राह्मण्य इत्यादौ ब्राह्मणीशब्दसन्निधानत्वात् स्त्रीत्वावगतिर्नस्वमहिम्ना यद्येवं एका द्वे बह्व्य इत्यत्रापि स्त्रीत्वस्याशब्दार्थत्वादाबीपौन भविष्यतः तस्मात् संख्याशब्देष्वपि लिङ्गंशब्दार्थ इति मन्तव्यम् । तथासति पञ्चादिष्वपिस्त्रियामाबीपौ प्राप्नुत इति तत्र प्रतिषेधोपि वक्तव्यः । तथा चोक्तं वार्तिककृता षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् प्रत्याहाराबापासिद्धे दोषस्त्रीत्वे तस्मान्नोभौ इति तदिदमुच्यते । त्रिषुसरूपा इति । लिङ्गत्रयेप्येषांसमानमेवरूपं भवति नत्वाबीप्प्रत्ययाविशिष्टमिति तयोः प्रतिषेधः सूचितोभवति । जस्शसोः । अत्ररःसङ्ख्याया इत्यतोनुवृत्तस्य सङ्ख्याग्रहणस्य ष्णइत्यतोनुवृत्ताभ्यां ष्णाभ्यां विशेषितत्वात्सामर्थ्यात्तदन्तग्रहणमित्याह षकारनकारान्तसंख्यायाइति । पञ्चेति । नन्वत्र जसोलुक्यपि तद्भावेन नोपधाया इति दीर्घः स्यादित्यत आह लुकीति । तन्निमित्तमिति । लुकः स्थानिप्रत्ययनिमित्तमित्यर्थः । ष्णेः ष्चन्चेति द्वन्द्वेएकत्वम् । अत्रचनस्य सत्यपि टुत्वनिर्देशे णान्तस्य सङ्ख्यावाचिनोभावान्नान्तमेव गृह्यत इत्याह षकारनकारान्तेति । पञ्चानामिति । पञ्चन् आमित्यत्रानेन नुटि नोपधाया इति दीर्घे नलोपशिचैवं स्यादित्यर्थः । गौणत्वेतु यथात्र लुग्नुटौ न भवतस्तथा रःसङ्ख्याया इत्यत्र प्रत्यपादि तदेवाहि सङ्ख्याग्रहणमत्राप्यनुवर्तत इति तन प्रियाः पञ्चयस्यासौ प्रियपञ्चा प्रियपञ्चानौ प्रियपञ्चानः प्रियपञ्चानं प्रियपञ्चानौ प्रियपञ्ञ्चः प्रियपञ्ञ्चा प्रियपञ्चभ्यामित्यादिभवति । अष्टनो । वाडौ । भवतीति । नन्वत्ररेति नानुवर्तते पूर्वसूत्रेष्वभावात् उत्तरसूत्रेत्राग्रहणाच्चतत्कुतोव्याख्यायते । उच्यते अत्राष्टन इति योगाविभागः क्रियते । तत्र संख्यायाजश्शसोर्लुगिति चानुवर्तते तेनाष्टनः सङ्ख्यायाजश्शसोर्लुग्भवतीति । तस्यार्थः ततोडौअष्टनः परयोरे

१ शतानि सहस्राणीत्यत्र कथंन लुक्चेत् सत्यं सन्निपातपरिभाषया तन्निषेधात् लोपेत्यनुवृत्तावपि लुग्ग्रहणं षष्ठीनिर्दिष्टस्येति परिभाषां ज्ञापयति ।

२ ष्णइत्येक योगेकार्य्ये पृथक् योगकरणं गौणेपिनुट् अत एव अचतुर्णामितिनिर्देशः ।

न्नवन्दशन्प्रभृतयः ॥ अष्टनो डौ ❀ ८९ ॥ अष्टन्शब्दात्पर-योर्जश्शसोर्वा डौर्भवति । डित्त्वाट्टिलोपः । अष्टौ२।अष्ट२। वासु ❀ ९०॥ वा आ आसु इति च्छेदः अष्टन आसु परासु वाऽऽत्वं भवति । अष्टाभिः । अष्टभिः।अष्टाभ्यः २। अष्टभ्यः २।अ-ष्टानाम् । अष्टासु । अष्टसु । मकारान्त इदम्शब्दः ॥ इदमो-यं पुंसि ❀ २११ ॥ इदंशब्दस्य पुंसि विषयेऽयम् भवति सौ परे । अयम् । द्विवचनादौ त्वद्यादेष्टेरिति सर्वत्राकारे

तयोर्डौर्भवतीत्यपरस्यार्थः । नचैतदुभयमेकत्रसंभवतीतिसामर्थ्यादत्र विकल्पः सिद्धो भवति । तत्रचडौ लुकोपवादोयमिति सर्वादेशोभवति डित्त्वसामर्थ्याद्वा अन्तादे-शेहि औकारे कृते ओऔऔ इत्यनेनाप्यकारनिवृत्तेर्डित्करणमनर्थकंस्यात् । गौणत्वेतु-सङ्ख्याग्रहणानुवृत्तेर्लुक्डौनभवतः प्रियाष्टानः । केचित्तूत्तरयोगेसङ्ख्याग्रहणाननुवृ-त्तेरत्रापिडौःस्यादितिप्रियाष्टावितिभवतीत्याहुः । डित्त्वादिति । डितिटेरित्यनेन । अष्टेति । अत्रजश्शसोर्लुक्लुकितन्निमित्तकार्याभाव.द्वास्वित्यात्वमत्रनभवति। वासु । अत्रश्लिष्टेपि निर्देशेव्याख्यानादाकारोवसीयत इत्याह । वा आ आस्विति । आस्विति प्रस्तुतत्वाद्विभक्तिष्वित्यर्थः । आस्वितिकिं जश्शसोर्माभूत् । अष्टाभिरिति । नस्यात्वे-दीर्घः अष्टभिरिति । आत्वाभावेनलोपश् । अष्टानामिति । अनात्वपक्षेपि ष्ण इति नुटिदीर्घेनलोपेवात्वपक्षे तुल्यमेव रूपम् ॥ ननुप्रिया अष्टौ यस्य सप्रियाष्टा । प्रिया-ष्टानौ । प्रियाष्टान इत्यादावप्यात्वं प्राप्नोतीति चेन्न । डौत्वेदत्तोतरत्वात् । केचित्तु-प्रियाष्टावित्यौत्ववदत्राप्यात्वं भवतीति प्रियाष्टाः प्रियाष्टौ इत्यादिकमौत्ववर्जेहाहा-वद्भवतीत्याहुः । मकारान्त इति । इदमो । मान्तोयमादेशोविधीयते इत्याह अयम भवतीति । तत्सामर्थ्याच्चत्यदाद्यत्वाभावाद्धलेप इति सिलोपः । दस्य मत्वामिति । दमात्रस्य ममात्रामित्यर्थः अकारस्तूभयत्राप्युच्चारणार्थः । ननुचैवंत्यदाद्यत्वेनव्यव-धानान्नकापिमत्वंस्यात् न वचनसामर्थ्यादेकेनव्यवाय आश्रयिष्यते अतएव द्वावि-त्यादौ द्विव्यवायानसूत्रेवा दस्येत्यकारस्तंत्रमिति द्विशब्दस्य न स्यात् तथा च त्य-दादितायामवधिर्यथा स्यात् । मत्वंद्विशब्दस्य तथा कथं न वर्णव्यवायादिद-मस्तु । सामर्थ्यादेकान्तरेदस्य विधानतो वा त्यदादीनामिति । धेरित्यप

**कृते इद् औ इति स्थिते । दस्य मः ✻ २०८॥ त्यदादीनां दकारस्य मत्वं भवति स्यादौ परे । इमौ । इमे । सर्वादित्वाज्जसी, त्यदादीनां धेरभावः । इमम् । इमौ । इमान् ॥ अनटौसोः ✻ २१४ ॥ इदमोऽनादेशो भवति टौसोः परयोः । अनेन ॥ स्भ्यः ✻ २१३ ॥ इदमः सकारे भकारे च परे अकारो भवति कृत्स्नस्य । आभ्याम् ॥ भिमूभिस् ✻ २१५ ॥ इदमदसोर्भिस् भिसैव भवति न भकारस्याकारः । एभिः । अस्मै । आभ्याम् । एभ्यः । अस्मात्**

लक्षणं संबोधनाभाव इत्यर्थः । कुतइति । प्रयोगाभावादवेहि । इममित्यादि । त्यदाद्यत्वे मत्वे च देववत् । अन । इदमइति । केवलस्येत्यर्थः । तेनेमकेनेत्यत्र न । एवमुत्तरत्रापि ज्ञेयम् । अनेनेति । गुरुत्वादनः सर्वादेशः अदन्तत्वादेन । स्भ्यः । अत्र सूच भूच स्भीति द्वन्द्वैकत्वम् । अ इत्यादेशनिर्देशः । सर्वादेशश्चायम् । ननु इदम इति षष्ठीनिर्दिष्टत्वादन्तादेशः स्यात् । मैवं, त्यदाद्यत्वस्याकारविधेः प्रयोजनाभावात् । नन्वयमन्त्यस्य भवन् त्यदाद्यत्वं बाधित्वा मस्य स्यात् ततश्च द्वयोरकारयोर्दीर्घे भिस्सुपोरेत्वाभावः ईदृशः श्रवणमपि प्रयोजनं स्यात् । अथोच्यते । प्राक्प्रतीतविभक्त्याश्रितत्वादन्तरङ्गं त्यदाद्यत्वमित्यादौ स्यात् । एवमप्यन्त्याभावेन्त्यसदेशस्येति दकारस्यादिति चेदुच्यते । नायमकारमात्र आदेशः । किं तर्हि सान्तः असिति तत्राविभक्तित्वात् शब्दरूपापेक्षया क्लीबत्वात् ततो नात्वसोरिति दीर्घः स च गुरुत्वात्सर्वादेशः पश्चात्त्यदाद्यत्वे कृते अकार एवावशिष्यंत इत्यभिप्रायेणाह । अकारो भवति कृत्स्नस्येति । अत्र च प्रमाणं वास्विति निर्देशः । आभ्यामिति । इदमोभ्यामिति सर्वस्य असादेशः त्यदाद्यत्वमात्वम् । भिस् । इहेदम इत्यनुवर्तते । वक्ष्यमाणं चादस इत्यस्मादभिन्नार्थमिति सह व्याकरोति । इदमदसोरिति । पृथग्योगकरणं तूत्तरत्रादस एवानुवृत्त्यर्थं षष्ठीनिर्देशाच्च केवलयोरेवेति इमकैरमुकैरित्यत्वम् । अयञ्च सिद्धे विधिरारभ्यमाणो नियमार्थो भवतीत्याह भिसेवेति । फलमाह न भकारस्येति । भ्य इत्यनेन । एभिरिति । स्भ्यइत्यनेनास् एसभीति । अपवादापवादे उत्सर्गस्यैव प्रवृत्तेः । अस्मा

आभ्याम् । एभ्यः । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु । किम्शब्दस्य त्यदादेष्टेरिति सर्वत्राकारे कृते सर्वशब्दवद्रूपं ज्ञेयम् । कः । कौ । के । कम् । कौ । कान् । केन । काभ्याम् । कैः । कस्मै । काभ्याम् । केभ्य इत्यादि । धकारान्तस्तत्त्वबुध्शब्दः । तस्य रसे पदान्ते चादिजबानामिति भकारः । तत्त्वभुत । तत्त्वभुद् । तत्त्वबुधौ । तत्त्वबुधः । हेतत्त्वभुत । हे तत्त्वभुद् । तत्त्वबुधम् । तत्त्वबुधौ । तत्त्वबुधः । तत्त्वबुधा । तत्त्वभुद्भ्याम् । तत्त्वभुद्भिरित्यादि । जकारान्तः सम्राज्शब्दः । छशषराजादेः षः ॥ २३९ ॥ छकारान्तस्य शकारान्तस्य षकारान्तस्य राज् यज् सृज् मृज् भ्राजादेश्च षकारो भवति धातोर्झसे परे पदान्ते च । षस्य षत्वं डत्व-

इति । इदमो ङयि त्यदाद्यत्वे स्मटिसुभ्य इत्यसि व्यक्तिपक्षमाश्रित्यपुनस्त्यदाद्यत्वे एत्वम् । अनयोरिति । त्यदाद्यत्वे अनटौ सौरित्यनः एत्वमय् । एषामिति । इदम आम्यत्वे सुटि स्भ्य इत्यसि पुनरेत्वं षत्वं च त्यदादेरिति । अनेन किमः सर्वत्रात्वे कृते पुंसि सर्ववत् प्रक्रियेत्यर्थः । धकारान्त इति । तत्त्वं बुद्ध्यतीति क्विबन्तः । जकारान्त इति । सम्यग्राजत इति क्विपि नाम्नश्चेति समासे सहादेरिति समः समादेशविधेर्नानुस्वारः । छशष । छशषां केवलानामप्रयोगात् सामर्थ्यात्तदन्तग्रहणमित्याह छकारान्तस्येत्यादि । राजादीनाह राज्यजित्यादि । राजृदीप्तौ यजदेवपूजासंगतिकरणदानेषु सृजविसर्गे मृजूष् शुद्धौ भ्राजृदीप्तौ आदिना व्रश्च छेदने भ्रस्जपाके एतयोरपि ग्रहणम् । अत्र षकारान्तेषु पुनः षत्वविधानं षत्वमेव यथा स्यात् डत्वं मा भूदिति नियमार्थमित्याह षस्येति। आख्यातादाविति। द्वेष्टीत्यादौ आदिना तद्धिते षष्ठ इत्यत्र न भवति अतएव षष्ठीचतुर्थीद्वितीयाभिरिति निर्देशः । यद्येवं द्विषो हौ झसादिति हेर्धित्वे ष्टु-

**निषेधार्थमाख्यातादौ ॥ षोडः * २२४ ॥ षकारस्य डत्वं भवति धातोर्झसे पदान्ते च । सम्राट् । सम्राड् । सम्राजौ । सम्राजः । सम्राजा । सम्राड्भ्याम् । सम्राट्सु । एवं विराजादयः । दकारान्तास्त्यद्तद्यद्एतद्शब्दाः ॥ तः * २१० ॥**

त्वे च डत्वाभावात् द्विड्ढीति न स्यात् मैवम् । अत्र हि षकारमात्राश्रितं षोड इति प्राप्तं डत्वं नियमेन व्यावर्त्यते न तु झबे जबा इत्यादिनाप्राप्तमित्यदोषः । अत एवाद्वेडित्यादौ वावसाने इतिडत्वं स्यादेव । एवं तर्हि षोड इति व्यर्थं सर्वत्राप्येवमेव डत्वस्य सिद्धत्वात् । न च वाच्यं रेफोष्मणां सवर्णा न सन्तीति ज्ञापनार्थं षोड इति क्रियते एवंद्विड्ढीत्यादावपि डत्वानुपपत्तेः । नन्वान्तरतम्यादत्र डत्वं भविष्यति आन्तरतम्यं हि तुल्यस्थानत्वेनापि भवति । सावर्ण्यं तु तुल्यस्थानप्रयत्नत्वेनैवेत्यनयोर्भेदात् । किञ्च रेफोष्मणां तुल्यस्थानानां भिन्नप्रयत्नत्वात् तुल्यप्रयत्नानां भिन्नस्थानत्वात् वर्णान्तरेण स्वत एव सावर्ण्यं नास्तीति ज्ञाप्यमेतन्न भवति स्वयं तु स्वस्य सवर्णाः स्युरेव एवं तर्हि षण्णामित्यत्र डत्वार्थं षोड इति सूत्रम् । अन्यथा डत्वाभावात् ड्ण इति न प्रवर्तते । यदा तु ड्ण इत्येतत् ष्ण इत्येव क्रियेत तदा कचिद् डकार एव षकारस्य यथा स्यात् साक्षाच्छिष्टं विध्यन्तरं मा भूदिति ष्ण इत्यस्यानवकाशत्वात् पाक्षिकीं प्रवृत्तिं षोड इति दर्शयति तेन षण्णां षड्णामित्युभयं सिद्ध्यति । यद्यपि ष्ण इत्यत्रैव डकारोपि निर्दिश्येत ष्णडाविति संख्यावाचिनः शब्दस्य षकारस्य णकारडकारौ भवतो नामि परे षण्णां षड्णामिति तदा षाड इति चिन्त्यप्रयोजनमभविष्यदिति यथान्यासं विचार एव प्रायो युक्तः षड्णवतिरित्यादौ तु सहादेःसादिरित्यनेनापि डान्ततांकर्तुं शक्यत एव तत्र च समास इत्यनुवृत्तेषण्णामित्यत्राप्रवृत्तिः । सम्राट्स्विति । सम्राजः सुपि षत्वे डत्वे खसे चपा इति टत्वे कचित्पदान्तताश्रयणीयेति । पदान्तत्वाट्टोरन्त्यादिति ष्टुत्वनिषेधः । दकारन्ता इति । सर्वादिगणस्था निरूप्यन्ते इति शेषः । तः । अत्र सौस इत्यतः सोनुवर्तते इत्याह सत्वं भवतीति । तथा त्यदादेरित्यतोनुवर्तमाने त्यदादिशब्दे आदिशब्दस्य व्यवस्थार्थत्वात्सर्वाद्यन्तर्गणस्थानामसंज्ञारूपाणां त्यदादीनां ग्रहणात् संज्ञायां सत्वाभावात्त्यदित्येव भवति । त्यदादेष्टेरिति षष्ठ्याश्च सावित्यनेनापि संबन्धाद् गौणत्वेपि न सत्वमिति तमतिक्रान्तोतितादित्येव भवति प्राधान्ये तु स्यादेव परमस इति । तत्कुलमित्यत्र तु लुकि सेरनिमित्तत्वान्न परस्य

त्यदादेस्तकारस्य सौ परे सत्वं भवति । स्यः त्यौ त्ये । त्यम् त्यौ त्यानित्यादि । सः । तौ । ते । तम् । तौ तान् । यः । यौ । ये । यम् । यौ । यान् । एषः । एतौ । एते । एतदोन्वादेशे द्वितीयाटौस्स्वेनो वा वक्तव्यः । एनम् । एतम् । एनौ । एतौ । एनान् । एतान् । एनेन । एतेन । एताभ्याम् । एतैः । एतस्मै । एताभ्याम् । एतेभ्यः । एतस्मात् । एताभ्याम् । एतेभ्यः । एतस्य । एनयोः । एतयोः । एतेषाम् । एतस्मिन् । एनयोः । एतयोः । एतेषु । छकारन्तस्तत्त्वप्राछ्शब्दः । तत्त्वप्राट् । तत्त्वप्राड् । तत्त्वप्राच्छौ । तत्त्वप्राच्छः । हेतत्त्वप्राट् । हेतत्त्वप्राड् । तत्त्वप्राच्छम् । तत्त्वप्राच्छौ । तत्त्वप्राच्छः । तत्त्वप्राच्छा । तत्त्वप्राड्भ्याम् । तत्त्वप्राड्भिरित्यादि । थकारान्तोऽग्निमथ्शब्दः । अग्निमत् । अग्निमद् । अग्निमथौ

सत्वम् । स्य इति । त्यदः सौ त्यदाद्यत्वे सत्वे सोर्विसर्गादेशः । नन्वत्र सत्वं न प्राप्नोति यकाराकाराभ्यां व्यवधानात् । मैवं सौ परे अव्यवहितस्य त्यदादेरिति व्याख्याने नास्ति व्यवधानमिति । त्यावित्यादौ चात्वे सर्वत्रप्रक्रिया । षत्वमिति । एष इत्यत्रैतदः सावत्वे सत्वे किलादित्यनेनेति शेषः । एतद इति । किञ्चिद्विधातुमुक्तस्याविधानान्तरहेतवे । शब्दस्य पुनरुक्तिश्चेदन्वादेशं तदा विदुः । द्वितीयाटौःस्विति । द्वितीयायां टाप्रत्यये ओसिच वेत्यर्थः एनमित्यादि । अत्रैवं प्रयोगः एतंछात्रं छन्दोध्यापय अथैनं शास्त्रमध्यापयेति एवं सर्वत्रप्रयोक्तव्यम् । अनन्वादेशेतु एतमित्यादिज्ञेयम् । छकारान्तइति । ननुकथं छकारान्तः यावताप्रच्छे क्विपि शान्तादेशेन शान्तः स्यात्ततश्चशस्य षत्वे डत्वे च तत्त्वप्राट्तत्त्वप्राड्तत्त्वप्राशौ तत्वप्राश इत्यादि स्यात् । सत्यं नायं क्विवन्तः किं तु भजांविणिति विणन्तः दीर्घस्तु प्रच्छादेर्दीर्घता च वक्तव्येति विण्यपि स्यादेव पाणिनीयमते तु अन्येभ्यो दृश्यत इति विचि दृशिग्रहणस्य विध्यन्तरार्थत्वात् प्रच्छेर्दीर्घः ।

अग्निमथः। हे अग्निमत्। हे अग्निमद्। अग्निमथम्। अग्निमथौ। अग्निमथः। अग्निमथा। अग्निमद्भ्याम्। अग्निमद्भिरित्यादि। चकारान्तः प्रत्यच्शब्दः॥ अचेः पञ्चसु नुम् वक्तव्यः ॥ प्रत्यन्च्सीति स्थिते॥ चोःकुः २२२॥ चवर्गस्य कवर्गादेशो भवति धातोर्झसे परे पदान्ते च। प्रत्यङ्। प्रत्यञ्चौ। प्रत्यञ्चः। प्रत्यञ्चम्। प्रत्यञ्चौ॥ अचेर्दीर्घ-

न च विचि शादेशः प्राप्नोति तत्र क्विझलोरित्यनुवृत्तेः। तत्त्वप्राडिति। छस्य षत्वे डत्वे पाक्षिकष्टोऽपि। थकारान्त इति। अग्निं मथ्नातीति मन्थेः क्विपि नो-लोप इति नलोपः। चकारान्त इति। प्रति अञ्चतीति क्विपि तल्लोपनलोपौ अचेरिति। वक्तव्योव्याख्येयः तस्येदं व्याख्यानं ञितोनुमित्यतःपरमचेश्चेति सूत्रमस्ति तस्य चायमर्थः अचेर्नुमागमो भवति पञ्चसु परेषु तदेतल्लाघवाया-चार्यैरेवं व्याख्यातम्। ननु चाञ्चतेरप्युदित्त्वात् ञितोनुमित्येव नुम् स्यादिति व्यर्थमचेश्चेति न, नियमार्थत्वाद्धातोश्चेदञ्चतेरेवोदित्कार्यं नान्यस्येति अत एव स्रंसुध्वंसोरुदित्त्वेप्युखास्रत् पर्णध्वदित्यत्र न नुम्, एवमपि योगान्तरं व्यर्थं ञिदचोर्नुमित्येकयोगेनैवसिद्धेः न, केवलाञ्चतिप्रत्ययेन धातुरेव योधातुस्तस्यैव नियमेन व्यावृत्तिर्यथा स्यादधातुभूतपूर्वस्य मा भूदिति। तेन गोमन्तमात्मन इच्छति गोमत्यति नाम्नोयः इतियः सधातुरिति धातुत्वात्तिबादयः गोमत्यतेः क्विपि तल्लोपयलोपयोर्गोमानिति यथा स्यात् अचेश्चेत्यत्र चकारोनुक्तसमुच्चयार्थः इति केवलस्य युजेर्नुमियुङित्यादि भवति। क्रुङ् पूजायाम्। प्रत्यङ्ङित्यादि तु नोपधाद्विणिनलोपाभावात्सिद्धम्। अत एव क्रुञ्चाप्रत्यञ्चेत्यादौ परसवर्ण-स्यानन्त्यत्वात् कुत्वं न। प्रत्यन्च्सिति। प्रत्यचेर्नुमि मित्त्वादन्त्याकारात्परेसती-त्यर्थः। चो। अत्र प्रसिद्धतरत्वात् कृत्रिमाकृत्रिमपरिभाषया आन्तरतम्या-द्वाकवर्ग एव कुर्गृह्यते नान्यइत्याह कवर्गादेश इति। प्रत्यङ्ङिति। प्रत्यन्च्-स इत्यत्र नुमिश्चुत्वेनानुस्वारयमादेशाभ्यां वा ञकारे कृते प्रत्यञ् च् स् इति सति सिलोपसंयोगान्तलोपयोः पदान्तत्वाच्चोः कुरिति चवर्गपञ्चमञस्य कवर्ग-पञ्चमे ङस्त्येवं भवतीत्यर्थः। प्रत्यञ्चावित्यादौ तु नुमोञः। अचेः। अत्राचेरिति लुप्तनकाराञ्चतिनिर्देशो यत्रास्य न लोपः तत्रैव यथा स्यादिति ज्ञापनार्थः। तेन

श्च * १४३ ॥ अच्चेरकारस्य लोपो भवति पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धिते ईपि ईकारे च । प्रतीचः। प्रतीचा। प्रत्यग्भ्याम् । प्रत्यग्भिरित्यादि । समीचः । समीचा । सम्यग्भ्याम् । सम्यग्भिरित्यादि । एवं तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः। तिर्यञ्चम् । तिर्यञ्चौ ॥ तिरश्चादयः * १४४ ॥ तिरश्चादयो निपात्यन्ते शसादौ स्वरे परे । तिरश्चः। तिरश्चा। तिर्यग्भ्याम्।

पूजार्थाञ्चतेर्भजादिविणतस्य नलोपाभावेनालोपदीर्घाभावात् प्रत्यञ्चेत्यादि स्यादित्यर्थः ॥ अकारस्य लोप इति । एतच्चाल्लोपः स्वरइत्यतोनुवर्तते पूर्वस्य च दीर्घ इति। ननु कथं पूर्वस्ययावतास्थान्यनिर्देशात् परस्यापि प्राप्नोति युक्तं चैतत् अञ्चतिं व्यवधानादपि पूर्वस्य न स्यात् । मैवं निमित्ते परेऽव्यवहितस्याञ्चतेरल्लोपस्तस्मिंश्च लुप्ताकारेञ्चतौ परेऽव्यहितस्य पूर्वस्य स्वरस्यदीर्घइति व्याख्यानात् । शसादाविति एतदपि अल्लोप इत्यतएवानुवर्तते तत्र च समासान्तोमहाशसादिर्गृह्यतइति तद्धितईप् निमित्तं भवतीत्याह तद्धितेईपीति । अत एव स्वरादौ तद्धिते प्रतीचीनइत्यादि भवति। प्रतीच्य इत्यादौ तु कचित् स्वरवद्यकारइति निर्वाहः । ष्ट्रित इति ईपि तु प्रतीचीत्याद्युदाहरणम् । ईकारे तु वक्ष्यति ईकारे चेति । इदं च वङयोरित्यतोनुवर्तते प्रतीचइत्यादि । अत्र विभज्यान्वाख्यानपक्षे प्रति अच् असित्यत्रानेनाञ्चोकारलोपप्रतीकारदीर्घयोः श्लिष्टोच्चारणे एवं स्यादित्यर्थः । अविभज्यान्वाख्यानपक्षेपि अल्लोपे निमित्ताभावे नैमित्तिकस्याप्यभाव इति नास्तियत्वमितीकारदीर्घो न दुष्यति। प्रत्यग्भ्यामिति । चोः कुत्वे झबे जबा इति गः । सुप्यपि कत्वेषत्वेकषसंयोगेक्षः प्रत्यक्षु शेषं सुगमम् । समीचइत्यादि । समञ्चतीति नाम्नश्च कृतेति समासे सहादेरिति समः सम्यादेशे अचेरित्यल्लोपदीर्घौ शेषं प्रत्यग्वत् । एवमिति । तिरोञ्चतीति क्विपि नाम्नश्चेति तत्पुरुषे सहादेरिति तिरसस्तिर्यादेशे तिर्यच्छब्दस्य त्यदादीनां च पञ्चसु हसादौ च रूपाणि तिर्यङ्तिर्यञ्चावित्यादीनि प्रत्यच्छब्दस्येवस्युरित्यर्थः । तिरश्चा अलाक्षणिककार्यार्थं निपातनमिति तिरसस्तिर्यभावः सन्नियोगशिष्टानामन्यतराभावे उभयाभाव इत्यलोपोपि निपात्यते । तथोदीचइत्यादावचोऽकारस्येकारो निपात्यते । ऋकारानुबन्धइति । महतेरुणादिषु तथा निपातनादिति भा-

तिर्यग्भिरित्यादि । एवमुदङ् । उदञ्चौ । उदञ्चः । उदञ्चम् । उदञ्चौ । उदीचः । उदीचा । उदग्भ्यामित्यादि । तकारान्तो मरुच्छब्दः । मरुत् । मरुद् । मरुतौ । मरुत इत्यादि । एवमग्निचित्प्रभृतयः । ऋकारानुबन्धो महच्छब्दः । ञ्रितोनुम् ॥ १३३॥ उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पञ्चसु परेषु । न्सम्महतोऽधौ दीर्घः शौ च ॥ १३५॥

त्रः । ञ्रितो । अत्र उश्च आच ञ्रौ तावितौ यस्येति द्वन्द्वान्ते श्रूयमाण इच्छब्दः प्रत्येकं संबध्यत इत्यत आह उकारानुबन्धस्येत्यादि । इह च पुंसोसुङ्ङित्यतः पुंसइत्यनुवर्तते तत्तत्र स्वरूपपरमपि वृतइत्यनेन संबद्धं सामर्थ्यादर्थपरं भवति नहि पुंसः स्वरूपं ञ्रित् संभवति ततश्च पुंसः पुँल्लिङ्गस्य ञ्रितइत्यर्थः स्यात् । अस्यैव यत्नमाह पुंसीति । ननु किमर्थमिदमुच्यते पुंसीति । यावतास्त्रियां ष्ट्रञ्रितइतीपाव्यवधानादेवनुम् न स्यात् क्लीबेपिनुमयमइति नियमार्थं भविष्यति । शावेव नपुंसकस्येति नामिनः स्वरे वादीपोः शतुरिति नुम्विधिसामर्थ्याद्भविष्यति इति चेन्मैवम् । नुमयमइत्यस्याञ्रितां शसौः शौचविध्यर्थत्वात् ततश्च महतीत्यत्रापि नुम् स्यात् तस्मात् पुंसीति वक्तव्यं नुमोमकारोदेशविध्यर्थः उकार उच्चारणार्थः । न्सम्महतो । अत्रन्स्चाप्च महच्चेति अप्शब्दोपि व्यमभूतोः निर्दिश्यते तत्रन्स्मात्रस्य प्रयोगाभावात् सामर्थ्यात्तदन्तग्रहणमित्याह न्सन्तस्येत्यादि । इह यदिसिंहावलोकनन्यायेनवक्ष्यमाणं नोपधायाइति संबध्यते तदान्सन्तस्य महतश्च नोपधायादीर्घेसिद्धमिष्टम् अप्शब्दस्य तु नोपधाया अभावादापइत्यत्रदीर्घो न स्यात् । न च वाच्यम् संभवादप् शब्देननोपधानसंभंत्स्यतीति स्वांपीत्यादौ तत् संभवात् । अथ न संबध्येतन्सम्महतोः प्रत्येकं स्वरस्य दीर्घः प्राप्नोतीत्यविशेषात् । एवं तर्हि संबध्यते । ननु चोक्तमापइत्यत्रदीर्घो न स्यात् । स्वांपीत्यादावेवस्यात् नैष दोषः तदन्तप्राप्तेः केवलप्राप्तिपूर्वकत्वात् ततश्च स्वांपीत्यादावपिदीर्घप्राप्तेरसंभवाद्वापशब्देननोपधासंबध्यत इत्याविशेषादापः स्वांपीत्युभयत्रापि दीर्घत्वसिद्धिः इह च पञ्चस्वित्यनुवृत्तिसार्थक्यायाधाविति पदच्छेदोनतुधाविति अधाविति तुपर्युदासः धेरन्येष्वधिषु इति पञ्चस्वित्यस्य विशेषणम् । तादिति मत्वाह धिव-

न्सन्तस्याप्शब्दस्य महच्छब्दस्य च दीर्घो भवति धिवर्जितेषु पञ्चसु शौ च परे । महान् । महान्तौ । महान्तः । हे महन् । महान्तम् । महान्तौ । महतः । महता । महद्भ्याम् महद्भिरित्यादि । उकारानुबन्धो भवच्छब्दः ॥ अत्वसोःसौ* १३७॥ अत्वन्तस्यासन्तस्य चोपधाया दीर्घो भवति धिवर्जिते सौ परे । भवान् । भवन्तौ । भवन्तः । हे भवन् । भवन्तम्

र्जितेषु पञ्चस्विति । एवं चाधावित्येकवचनमुत्तरार्थम् । महानिति । महत्सीत्यत्रो-दित्वान्नुमि दीर्घेहसेपइति सिलोपे संयोगान्तत्वात्तलोपे चैवं स्यादित्यर्थः नलोपस्त्वागमजत्वान्न भवति । हेमहन्निति । अधावित्युक्तत्वान्नदीर्घः । सुतरांहिनस्तीति सुहिन् सुहिंसौ सुहिंसइत्यत्र हिंसेरप्रत्ययान्तस्य दीर्घोन भवति न्सम्महतइत्यत्राप्शब्दसंनिधानेन न्सन्तधातुव्युदासात् भवच्छब्दइति । उदनुबन्धत्वं चास्योणादिषु तथानिपातनात् भंविद्यतेऽस्मिन्निति वत्वन्तत्वेन वा । अत्व । इहापि नोपधाया इत्यनुवर्तते तेनात्वन्तस्य नोपधायाइति दीर्घे सिद्धमिष्टम् असन्तेतु नोपधानास्तीत्युपधैवसंबध्यते । ननुचेयमस्ति विद्वानिति न्सम्महतइति तु विद्वांसावित्यादौ सावकाशं सत्यं एवंहि विद्वानित्यत्रापि तेनैवसिद्धत्वादत्रासग्रहणस्यवैयर्थ्यमापद्येत न नियमार्थत्वादसन्तस्य नोपधायाः सावेवेति । एवमपि तत्र न सग्रहणं व्यर्थं न अनसन्ते चरितार्थत्वात् सर्पींषि धनूंषि भवति ह्येतदपि बहिरङ्गस्य षत्वस्यासिद्धत्वात् न्संतम् एवं तर्हि इहोपधैवानुवर्तते न नकारः एवमप्यत्वन्ते नित्यत्वादादौ नुमि उपधानकार इति दीर्घो न स्यात् । परत्वादादौदीर्घो भविष्यति । भैवं परस्यनित्यस्य च नित्यमेवेति नुमेव स्यात् एवमप्यत्वन्तस्य साक्षाच्छिष्टो दीर्घइत्यादौ स्यात् तस्माद्विधिः प्रातिपदोबलीयानिति नुम् दनुबन्धत्वादनुमितः अथवा अत्रातुग्रहणसामर्थ्यादेव नुमं बाधित्वादीर्घः स्यात् । अन्यथाऽतुग्रहोव्यर्थः स्यात् भवानिति । भवत्सीत्यत्रादौ दीर्घे ततो नुमि सिलोपसंयोगान्तलोपौ । हे भवन्निति । अत्वसोरित्यत्राप्यधावित्यनुवर्तते इति धौनदीर्घः शेषं सुगमम् । ऋकारइति । शत्रन्तत्वात् न दीर्घइति । एतेनात्वसोरित्यत्रातुकारस्यव्यावर्त्यं दर्शितं भवन्नित्यादि । अनत्वन्तत्वादीर्घवर्जंभवतुवत् । एवमिति । ऋदनुबन्धा

भवन्तौ। भवतः। भवता। भवद्भ्याम्। भवद्भिरित्यादि। एवमृकारानुबन्धाः। भवच्छब्दस्य नुमागम एव न दीर्घः। भवन्। भवन्तौ। भवन्तः। पचन्। पचन्तौ। पचन्तः। पठन्। पठन्तौ पठन्तः। शकारान्तो विश्शब्दः। विट्। विड्। विशौ। विशः। हे विट्। हे विड्। विशम्। विशौ। विशः। विशा। विड्भ्याम्। विड्भिरित्यादि। षकारान्तः षष् शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः। जश्शसोर्लुक्। षट्। षड्। षड्भिः। षड्भ्यः २ षड्नामिति स्थिते ॥ ड्णः ८६॥ संख्यासंबन्धिनो डकारस्य णत्वं नामि परे। षण्णाम्। षट्सु॥ क्वचित्पदान्तताऽप्यणीत्या॥ दोषाम् ❀ २३२ ॥ दोष् सजुष् आशिष् प्रभृ-

तयोऽपि आवदीर्घा भवद्वत् स्युरित्यर्थः। शकारान्तइति। विशतेरप्रत्ययान्तत्वात् षत्वमिति। षोडइत्यनेन विट् सु इत्यत्र तु षत्वेडत्वे खसे चपाइति टत्वेष्टुभिः ष्टुरिति प्राप्तस्य षत्वस्य पदान्ततामाश्रित्यटोरन्त्यादिति निषेधः। षकारान्तइति। बहुवचनान्तइति। बहुवचनान्ततातु बहुत्वसंख्यावाचित्वात् त्रिषुलिङ्गेषु समानरूपत्वं तु प्रक्रियाविशेषाभावादित्यर्थः। ड्णः। डकारस्य चपेष्वनन्तर्भूतत्वादपदान्तत्वाच्चखसेचपाइति न प्राप्नोति इत्यारम्भः। अत्र च रःसंख्यायाइत्यतः संख्यायाइत्यनुवर्तते सूत्रे च ड्ण इति षष्ठ्याः स्थानेप्रथमेत्यभिप्रेत्याह संख्यासंबन्धिनइति। व्यधिकरणेषष्ठ्यौ संख्यावाचिनः शब्दस्य यो डस्तस्येत्यर्थः। षण्णामिति। षष् आमित्यत्र ष्णइति नुटि षष् नामिति सति षोड इति डत्वस्यानेन णत्वे एवं स्यादित्यर्थः। केचित्तुड्ण इत्यत्र द्वौ डकारौ निर्दिश्यणत्ववत् डत्वमपि विधाय षड्णामित्यप्युदाहरन्ति। गौणत्वे तु प्रियषषः प्रियषषामित्यत्र यथालुग्नुटौ न भवतस्तथा जश्शसोर्लुक् ष्णइत्यत्र प्रतिपादितं, प्राधान्ये स्तएव परमषट् परमषण्णामिति षट्स्विति। षष् सु इत्यत्र डत्वेटत्वेटोरन्त्यादिति षत्वनिषेधः। ननु च तत्र पदान्ताट्टोरित्युक्तं न चात्रटवर्गः पदान्तमित्याशङ्क्याह क्वचित्पदान्ततेति। इदं च टोरन्त्यादित्यत्रैव प्रतिपादितम्।

तीनां षकारस्य रेफो भवति रसे पदान्ते च । दोः । दोषौ । दोषः । हे दोः । दोषम् । दोषौ । शसादावनान्तता वा वक्तव्या*। दोष्णः। दोषः । दोष्णा । दोषा । दोषभ्याम्। दोर्भ्याम् दोषसु । दोष्षु । दोःषु । सजुषाशिषो रसे पदान्ते च दीर्घो वक्तव्यः * । सजूः । सजुषौ । सजुषः। हे सजूः । सजुषम् । सजुषौ । सजुषः । सजुषा । सजूर्भ्यामित्यादि । सकारान्तः पुंस्शब्दः । पुंसोऽसुङ् * १३१ । पुंस्शब्दस्यपञ्चस्वसुङादेशो भवति । ङकारोन्त्यादेशार्थः पुमस्सीति स्थिते

दोषाम् । षोडइत्यस्यापवादः । बहुवचनमिदमाद्यर्थमित्याह दोष्सजुष् इत्यादि । इह च रोरात्रिष्वित्यतो रोनुवर्तते सचदोषामिति षष्ठीनिर्दिष्टत्वादन्तादेशो भवतीत्याह षकारस्य रेफइति । रसइति वसांरसइत्यतोनुवर्त्तते । पदान्तेचेति । सूत्रान्तरमेवैतदनुवर्त्तते दोरिति । दोष् सीत्यत्रानेनषस्य रेफे सिलोपेरेफस्य विसर्गः शसादाविति । अनान्ततेत्यकार उच्चारणार्थः अनअन्तोयस्यासावनान्तः तस्यभावोऽनान्तता शसादौ विभक्तौ दोष्शब्दस्यान्तरतम्यादोषन्नादेशो वाच्यइत्यर्थः । दोष्णइति । अल्लोपस्वरइत्युपधालोपः अदुपधत्वविधानं तु ङौ वेङ्योरित्यलोपाभावपक्षे दोषणीत्यदुपधश्रवणार्थम् । दोषइति । अल्लोपाभावपक्षे दोर्भ्यामिति । रेफस्यविसर्गे नामिनोरइति पुनारेफः रइतित्वलाक्षणिकरेफविसर्गस्य स्यात् । दोष्षु दोःषुइति । उभयत्रापि दोषामिति रेफस्यविसर्गे च तस्यक्रमेणविसर्जनीयस्य स इति स्विसर्गौ षत्वं तु यथात्र स्यात् तथा किलादित्यत्रोक्तंहि । सजुषाशिषोरिति । वक्तव्यो व्याख्येयः तथा हि जोषणं जूः जुषेरप्रत्ययः सहजुषा वर्तते इति सजूः सप्रीतिरित्यर्थः। आशासनमाशीः क्विप् शासेरितीत्वे घसादेरिति षत्वं सजुष्सि आशिष्सि इत्यत्र दोषामितिरेफेन्तरङ्गत्वात् य्वोर्विहसे इत्येवदीर्घइत्यर्थः । यथापिपठिषतेरप्रत्यये पिपठीरित्यादौसकारान्तइति । पूङ्औणादिकड्डुमसुप्रत्ययान्तत्वादित्यर्थः ड्डुमसिडाष्टिलोपार्थः मकारे अकार उच्चारणार्थः उकृदित्कार्यार्थः । अत एव बहुपुंसीत्यत्र ङीप्रितइतीब्भवति । पुंसः । अत्र सिंहावलोकितन्यायेन वक्ष्यमाणं शौचेति संबध्यते तेन

व्रितो नुम् न्सम्महत इति दीर्घः सयोगान्तलोपः पुमान् । पुमांसौ । पुमांसः । हे पुमन् । पुमांसम । पुमांसौ । पुंसः । पुंसा । पुम्भ्याम् । पुंसु । असंभवे पुंसः कक्सौ । पुङ्क्षु । विद्वान् । विद्वांसौ । विद्वांसः । हे विद्वन् । विद्वांसम् विद्वांसौ । वसोर्वेउम् । वसो वकार उत्वं प्राप्नोति शसादौ स्वरे परे । षत्वम् । विदुषः । विदुषा । दत्वम् । विद्व-

प्रियपुमांसीत्यत्रासुङ् भवति । ङकारइति । अन्यथागुरुत्वात्सर्वादेशः स्यादितिभावः पुमस्सीतिस्थिते इति । पुंसः सत्यासुङ्किकृतेनुस्वारस्याकारसंयोगे सतीति शेषः । पुमानिति । प्रक्रिया तु मूलएवोक्ता नलोपस्त्वागमजत्वान्न हे पुमन्निति । पुंसोसुङ्यन्तादेशे उदित्वाद् व्रितोनुमि सलोपसिलोपौ दीर्घस्त्वधावित्युक्तत्वान्न भवति । पुंभ्यामित्यादि । हसादौ संयोगान्तस्यलोपः । पुंस्विति । तद्वत्सलोपेऽनुस्वारव्यवायान्न षत्वम् । असंभवइति । संभवः प्रयोगः अल्पः संभवोऽसंभवः ईषदर्थे नञ् तस्मिन्नल्पे प्रयोगे क्वचिदित्यर्थः । कक्सौ सुपि वक्तव्याइति शेषः पुङ्क्ष्विति । पुंसः संयोगान्तत्वात् सलोपेकाकिकित्त्वादन्ते किलादिति षत्वेकषसंयोगेक्षइति श्लिष्टोच्चारणमित्यर्थः । विद्वानिति । यथात्रदत्वाभावस्तथा वसांस इत्यत्रोपपादितः। विद्वांसावित्यादौ नुमूदीर्घानुस्वाराः । वसोः । व इति कर्तरि प्रथमा उमिति कर्मणि द्वितीयेत्याह वकारउत्वंप्राप्नोतीति । वकारे अकारोच्चारणं तत्सहितस्योत्वं यथा स्यादिति । शसादौ स्वर इति । एतद्व्वास्थ्नां शसादावित्यतोनुवर्तते तत्रापि च महाशसादिर्गृह्यते तेन ओदौतोरित्यत्र यः प्रत्ययः स्वरवदिति विभज्य यकारस्यापि स्वरवत्त्वाद्वैदुष्यमित्यत्रतद्धितेपि भवति तथा ईपि विदुषीति भवति ईकारोप्यत्र वेङ्योरित्यनुवर्ततइति प्रियविदुषी इत्यत्र भवति । षत्वमिति । विदेर्वसुरितिकृतत्वात्किलादित्यनेन । दत्वमिति । विसर्गापवादइत्यर्थः । सुपितुदत्वेखसेचपाइतितत्वेविद्वत्स्विति भवति । ननुकथंपेचुषइत्यत्रोत्वम् । यावत्तैकानुबन्धकपरिभाषया द्व्यनुबन्धकस्य क्वसोर्ग्रहणंनस्यादिति न, वसुशब्दोत्रावर्त्तते वसोर्वसोरिति तत्रैकेनवसुर्निर्दिश्यतेऽपरेण साक्षात्क्वसुरिति । अथवाविदेर्वसुरित्ययमप्युकारसकारानुबन्धत्वेन द्व्यनुबन्धक इति स्यादेवोभयोरपि ग्रहणं ततोवस्योत्वादिङ-

भ्याम् । भिर्भिरित्यादि । सुवचस्शब्दः । सुवचाः । सुवचसौ । सुवचसः । हे सुवचः । सुवचसम् । सुवचसौ । सुवचसः । सुवचसा । सुवचोभ्याम् । सुवचोभिरित्यादि । एवं चन्द्रमस्शब्दः । उशनस्शब्दस्य भेदः । उशनसाम् ॥ १७६ ॥ उशनस्पुरुदंसस् अनेहसित्येतेषां सेरधेर्डा भवति । डकारष्टिलोपार्थः । उशना । उशनसौ । उशनसो धौ नान्ततादन्तता च वा वक्तव्या ॥ । हे उशनन् । हे उशनः । हे उशन । उशनसम् । उशनसौ । उशनसः । उशनसा । उशनोभ्यामित्यादि । एवं पुरुदंसा अनेहा । अदस्शब्दस्य सर्वत्र भेदः । अदस् सि इति स्थिते । सौ सः ॥ २०८ ॥ अदसो दकारस्य सो भवति सौ परे ॥ सेरौ ॥ २१७ ॥ अदसः सेरौकारादेशो भवति ।

नावः । सुवचस्शब्दइति । शोभनंवचोऽस्येति बहुव्रीहेर्वाच्यलिंगत्वात्पुंसिअसन्तत्वाद्दीर्घइत्यर्थः । सुवचाइति । अधित्वान्ननुम् सिलोपेप्रकृतिसस्यविसर्गः । हेसुवच इति । अत्वसोरित्यत्राधावित्यनुवृत्तेर्नदीर्घः । शेषंसुगमम् । एवमिति । असन्तत्वसाम्यादित्यर्थः । उशनस्शब्दस्येति । भेदः प्रक्रियाविशेषस्तमाह । उश । बहुवचनोपात्तानाह उशनसित्यादि । सेरधेर्डेति । इदंचसेर्डाधेरतोनुवर्तते । डकारइति । डितिटेरितिलोपो यथास्यादित्येवमर्थइत्यर्थः । उशनेति । सेर्डादेशेटिलोपः । उशनसोधाविति । इदंचभागुरिमतमिति वष्टिभागुरिरित्यत्रप्रादर्शि । हेउशनन्निति नलोपस्तुनांतत्वविधिसामर्थ्यान्न । नचसान्तत्वाभावायनान्तता स्यादितिवाच्यम् । अदन्ततयैवतत्सिद्धे अत्रचसान्ते हसेपइतिधिलोपः अलोन्ते च समानाद्धेरिति । एवंपुरुदंसाअनेहेति । द्विवचनादौतुसर्वंसुवचस्शब्दवत्सुगमम् । अदस्शब्दस्येति । सर्वादिकस्येति शेषः सर्वत्रेति । सर्वासुविभक्तिष्वित्यर्थः । सो । मत्वापवादः । साविति सेर्ग्रहणंनसुपःसोःसैषादितिनिर्देशात्, उभयोरपिग्रहणेसौत्येवावक्ष्यत । इहत्यदादेरित्यनुवर्ततेदस्येतिच ततश्च त्यदादीनांदकारस्यसौ परेसत्वमित्यर्थः । ननुचैवंद्विशब्दस्यापिप्राप्नोति असिपरत्वान्नभविष्यतिइहतर्हिप्राप्नोतिद्वावात्मन इच्छातिद्वीयाति ततो अप्रत्ययः यतइतियलोपः द्वीरितिअत्रस्वोरितिप्राप्नोतिन, व्यवधानात् । इहापि तर्हिव्यवधानान्नस्यात् ।

**असौ । द्विवचने अद् औ इति स्थिते दस्यम् ॥ मादू*२१८ ।**
**उश्च ऊश्च ऊ अदसो मकारात्परस्य ह्रस्वस्य ह्रस्व उकारः**
असाविति । अस्त्वेवह्यवर्णेनात्रापिव्यवधानंवचनंतुमायाइत्यादावाबन्तेचरितार्थं त्य-
दाद्यत्वं तु सावकाशत्वान्नान्ते सत्वबाधकमितिचेत्सत्वमपि सावव्यवहितानांत्यदादी-
नांदस्यसत्वमितिपक्षेऽनन्त्येसावकाशं द्वयोश्चसावकाशयोः परत्वादन्त्यस्य सत्वमेव
स्यादितिसायेत्यत्रानदन्तत्वादाप्नस्यात्, एवंतर्हिदस्येत्यकारस्तन्त्रमितिद्विशब्दस्या-
न्त्यस्यचदमात्रस्य केवलव्यञ्जनस्यनभवतिअतएवचेदं सत्वमदस एवभवति तत्रैव
हिसाकारोदकारोनान्यत्रत्यदादावित्यभिप्रेत्याहसौपरे अदसोदकारस्येति । सौपरेऽ-
व्यवहितस्यादसोदकारस्येत्यर्थः । नन्वेवमपि स्त्रियांदोषः तत्रहित्यदाद्यत्वेकृतेपरत्वा-
दापिचानदन्तत्वाद्दस्य न सत्वं स्यात् मैवं, प्रकृतिप्रत्ययाश्रितत्वेनान्तरङ्गसत्वमित्या-
दौस्यात्, आप्तु बहिरङ्गः असौब्राह्मणीत्यादौ बहिर्भूतशब्दान्तरसन्निधानेनैव प्रती-
यमानस्त्रीत्वाश्रितत्वात् । सेरौ । अत्रादसइतिसूत्रमनुवर्त्तत इत्याह अदसः सेरिति ।
अदस्संबन्धिनः सेरित्यर्थः । असाविति । अदस्सीत्यत्रत्यदाद्यत्वे दस्यसत्वेऽनेन
सेरौत्वे ओऔऔ । ननुचात्रसंबोधने धेरौत्वादेशस्यतद्भावात्समानाद्धेरितिलोपः
प्राप्नोति यदिप्रयोगोस्ति मैवं, तत्रहितस्मात्सीतिसिः प्रकृतइतिसेरेव धेर्लोपादौ-
कारेनप्रसङ्गः एवमपिस्त्रियामापिधिरिः प्राप्नोति तत्रापि हसेप इत्यतः सेरनुवृत्तेः सेः
स्वरूपसंबन्धवान् यो धिरित्यर्थान्न दोषः । तथापि इतीकारादेशः प्राप्तो लाक्षणिक-
त्वादौकारस्य न भवति असकावित्यत्रतुसामान्येऽदसइतिकप्रत्ययस्यादसोवयवभूत-
त्वात्सेरन्तरङ्गत्वादौत्वे ततआपिकप्रत्ययस्यस्यादिवत्त्यदाद्यत्वे सत्वे चासकाऔ
इति स्थितेकाप्यतइतीत्वं प्राप्तं यथानभवति तथा तत्रवक्ष्यामः । मा । इहाप्यदसइ-
त्यनुवर्ततेइत्याह अदसइति । ऊइति ह्रस्वदीर्घयोरुवर्णयोर्द्वन्द्वैकत्वेननिर्देशइत्याह
उश्चेति । ह्रस्वस्तुसंज्ञापूर्वकस्यविधेरनित्यत्वान्नभवतिअविभक्तिकोवानिर्देशः छान्दसो
वाविभक्तेर्लुक् । ननुदीर्घएवायं कुतोन सचभवन्नान्तरतम्यात् स्थानिनमपिदीर्घमाक्षे-
प्स्यतीति ह्रस्वस्याप्रसङ्गः मैवं, व्याख्यानाद्विशेषप्रतिपत्तिः । तथाहि मादितिपञ्च-
म्याततः परः स्थानीआक्षिप्यते सचह्रस्वोदीर्घश्चसंभवति द्वयोश्च स्थानिनोरादेशावपि
द्वावेवयुक्तौभवितुमित्यतआह ह्रस्वस्यह्रस्वइत्यादि । मादितिकिम् अन्त्यस्यमा-
भूदिति । अमुया अमुयोः अन्यथायकारस्य स्यात् एवमपि दादितिवाच्ये
विकृतनिर्देशोमात्परस्ययथास्यादिह माभूत्अदोत्रअदस्यतीति सत्वं त्वत्र

दीर्घस्य च दीर्घ ऊकारो भवति । अमू । बहुवचने सर्वादित्वाज्जसी । अमे इति स्थिते । एरीबहुत्वे * २१९ ॥ बहुत्वे सत्यदस एकार ईकारो भवति । अमी । अमुम् । अमू । अमून् । उत्वे च टानाऽस्त्रियाम् । अमुना । अद्धीत्यात्वम् पश्चादूकारः अमूभ्याम् । भिस् भिस् । अमीभिः । अमुष्मै । अमूभ्याम् । अमीभ्यः । अमुष्मात् । अमूभ्याम् । अमीभ्यः । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ॥ सामान्ये ऽदसः कः

विभक्तेर्लुकि न तन्निमित्तमिति न भवति अमुमञ्चतीति क्विपि नाञ्चश्चेति समासे अमुमुयङ्, अदमुयङ्, अमुद्र्यङ्, अदद्र्यङित्येतेषांतुसहादेरितिसिद्धिः अमूइति । अदस् औ इत्यत्रत्यदाद्यत्वेमत्वे उत्वे च मादूइतिऔकारस्यऊकारः । एरी । एरितिनेकारेणषष्ठ्यन्तोनिर्देशोऽसंभवात्किं त्वेकारेणप्रथमान्त इत्याह एकारइति । बहुत्वे किम्, अमुयोः । अमीइति । अदसोजसित्यदाद्यत्वमत्वजसीत्वैत्वेत्वानि । अमुमिति । सर्वत्रत्यदाद्यत्वमत्वेऽविशिष्टेततोऽमूशसोरित्यलोपेउत्वम् । अमूइति । प्राग्वत् । अमूनिति । अल्लोपेशसीतिदीर्घेऊत्वंमत्वे उत्वे चेति । इदंचटानाऽस्त्रियामित्यत्रोपपादितम् । पश्चादूकारइति । इदमपि तत्रैवोदितम् । भिस्भिसिति । अदस इतिसूत्रेणात्र भिसोभिसेव भवति नद्धय इत्यकार इत्यर्थः । अमुष्माइति । सर्वादेसूस्मटयुत्वषत्वैत्वानि । अमूभ्यामिति । आत्वोत्वे । अमीभ्यइति । एस्भीत्येत्वयएरीतीत्वम् अमुष्मादिति । ङसेरतिअतइतिस्मटिउत्वषत्वदीर्घाः । भ्यामादिप्राग्वत् अमुष्यइति । ङसः स्यउत्वषत्वे । इत्यादिओस्येत्वेविभक्तिकार्यत्वादित्यर्थः । अमीषामिति आमःसुटिएत्वेत्वषत्वानि । अमुष्मिन्निति । ङिस्मिन्निति ङेस्मिनित्वषत्वे । अमुयोरिति । ओस्येत्वेआदेशेचोत्वम् । अमीष्विति । सुप्येत्वेत्वषत्वानि । सामान्यइति । सामान्यं प्रकृत्यर्थादविशेषःस्वार्थइति यावत् । अदसइति । अवयवावयविसंबन्धे षष्ठी तेनादसोवयवः कः प्रत्ययोभवतीत्यर्थः । अत्रादसइत्युपलक्षणंसर्वादीनांतेनयकः सकः एषकइत्यादिसिद्ध्यति । किमस्तुशेषानिपात्याः कत्त्यादयइतिकप्रत्ययान्तस्यकिमित्येवनिपात्यतइति कः कौ के इतिकेवलेनसमानंयदि चादसइतिपंचमी

स्यादिवच्च ॥ अमुकः । अमुकौ । अमुके इत्यादि । सर्ववत् । इति हसान्ताः पुँल्लिङ्गाः ❀ ।

अथ हसान्ताः स्त्रीलिङ्गाः ।

हकारान्त उपानह् शब्दः । नहो धः । ❀ २३८ ॥ नहो हकारस्य धकारादेशो भवति रसे पदान्ते च । उपानद् उपानत । उपानहौ । उपानहः । हे उपानत् । हे उपानद् । उपानहम् । उपानहौ । उपानहः । उपानहा । उपानद्भ्या-

व्याख्यायते । तदाकप्रत्ययान्तात् स्याद्युत्पत्तिर्दुष्करास्यात्तेनव्यवधानाच्चसकावित्यत्रसत्वमौत्वंच नस्यात् । स्यादिवदिति । स्यादाविवस्यादिवत्यथास्यादौ कार्यंतथा केपीत्यर्थः तेनस्यादौपरेविधीयमानमत्वादि केपिभवति नचस्यादीनामौत्वाद्यादेशादिलक्षणं कस्यभवति । अमुकइति । इदंचेदानींतनैः पण्डितंमन्यैः सामान्येदसइत्यन्यथाकृत्वाऽयुक्तं प्रक्षिप्तम् । युक्तं चैतत् । असकाविति । तथाहिकप्रत्ययेत्रादसोवयवत्वेसतिकेवलादिव कान्तादपि स्याद्युत्पत्तौ कस्यावयवत्वेनाऽव्यवधायकत्वात् सेरौत्वे कस्यस्यादिवत्वात्त्यदाद्यत्वेसत्वेच सिद्धमिष्टम् । अमुकाविति । कस्यस्यादिवत्त्वात्सर्वत्र त्यदाद्यत्वे मत्वोत्वे । अमुके इति । कप्रत्ययस्यावयवत्वेन केवलस्येव कान्तस्यापि भवत्येव सर्वादिकार्यं जसीत्वादि । इत्यादि सर्ववदिति । कप्रत्ययान्तस्यादसोदन्तत्वादिति भावः । श्रीजानार्दनिवत्सराजतनयः श्रीकाह्ननामा० सुतं० व्याख्यापुंसिहसान्तशब्दवचसांसिद्धान्तरत्नावली ॥

अथेति । क्रमप्राप्तत्वादिति भावः । नहो । अत्र होढ इत्यतो ह इत्यनुवर्तते इत्याह । नहो हकारस्येति । उपानदिति । उपनह्यत इति नहेः क्विप्युपोपसर्गस्य दीर्घः । ननु चास्मिन् सूत्रे वसांरस इत्यस्मात्परेपि भिदपामतो नुवर्तमानदविधिनापि उपानदित्यादिसेत्स्यत्येव तथा चायमर्थः । धग्रहणं न कर्तव्यं भवति । प्रक्रियालाघवं च, न च तथा सति हकारानुवृत्त्या सर्वादेशोदः स्यादितिवाच्यं, षष्ठीनिर्दिष्टस्यैवान्तस्य हस्य सिद्धेः । एवं तर्हि नद्धमित्यत्र तथोर्द्धे इति झभान्तत्वात् परस्य तस्य धत्वं यथा स्यात् दस्तस्य नोदश्चेति नत्वं माभूदिति, इह धत्वं विधीयते । उपानद्भ्यामिति । धस्य झबेजबा इति दः । रसे

मित्यादि । वकारान्तो दिवूशब्दः । दिव औ ॥ * १६७॥ दिवूश-ब्दस्यौकारादेशो भवति सौ परे । द्यौः । दिवौ दिवः । हे द्यौः वाऽम्या * १६९ ॥ दिवो वकारस्याऽमि परे वाऽऽत्वं भवति । द्याम् । दिवम् । दिवौ दिवः । दिवा । उ रसे * । १६८ ॥ दिवश-ब्दस्य रसे परे उकारो भवति । द्युभ्याम् । द्युषु । त्रिचतु-रोः स्त्रियां तिसृचतसृवत् । स्त्रियां वर्त्तमानयोस्त्रिचतुरूश-

द्दान्ते चेति किम्, उपानहौ । दिव । दिवूशब्दोयमस्त्यव्युत्पन्नं नाम स्वर्गवाचि । अस्ति च क्रीडाद्यर्थो दिवुधातुः तत्र निरनुबन्धकत्वादाद्यस्यैवात्र ग्रहणमिति धातो-र्लक्ष्यूरित्येव भवति सौपेर इति । आसावित्यतोनुवर्तते । द्यौरिति । औकारेत्रान्त्रा-देशे यत्वम् । ननु चात्रौत्वस्य स्थानिवद्भावेन हसान्तत्वाद्धसेप इति सिलोपः स्यात् मैवं. यदयमासाविति नस्यात्वं शास्ति तत् ज्ञापयति न वर्णमात्राश्रिते विधौ स्थानिवत्त्वमिति यदि स्यात् पन्था इत्यत्रापि सिलोपः स्यात्तथा चोपधादीर्घसि-लोपनलोपैरप्यात्वादविशेषइति व्यर्थमात्वं स्यात् । सौ किं दिवौ । वाम्या इति । अमि दिवो वा आकारादेशो वक्तव्य इत्यर्थः । द्यामिति । आकारान्तादेशे यत्वम् । उ । उ इत्यविभक्तिको निर्देशः । यद्यत्र रस इत्युच्यते दिवं जहातीति द्युह इत्यत्र न प्राप्नोति सहादिरिति भविष्यति यथा दिवमूर्णोति द्यूर्णुदित्यत्र स्वरेप्यु-त्वम् । रसे किं दिवम् । द्युभ्यामिति । वकारस्यचोत्वे यत्वम् । द्युष्विति । उत्वे-यत्वम् । त्रिचतुरोः । किमिह स्त्रियामित्यधिकृत्यनाम्नो विशेषणंस्त्रियां वर्तमानस्य नाम्नस्त्रिचतुरोरिति, । आहोस्वित् त्रिचतुरोर्विशेषणं स्त्रियां वर्तमानयोस्त्रिचतुरोरिति। नाद्यः प्रियाः त्रयः त्रीणि वा यस्याः । प्रियाश्चत्वारः चत्वारि वा यस्याः सा प्रियत्रिः प्रियचत्वा इत्यत्रातिव्याप्तेः प्रियास्तिस्रः चतस्रो वा यस्य स प्रियतिसा प्रियचतसा इत्यत्र नाम्नो स्त्रियामावृत्तेरव्याप्तेश्च,ततःश्रौतसंबन्धाच्च द्वितीयोवरीया-निति प्रियाः तिस्रो यस्य स प्रियतिसा प्रियतिस्रौ प्रियतिस्रः । प्रियतिस्रं प्रियतिस्रौ प्रियतिस्रः प्रियतिस्रा प्रियतिसृभ्यां प्रियतिसृभिः प्रियतिस्रे प्रियतिस्रः २ प्रियति-स्रोः २ प्रियतिसृणां प्रियतिस्रि प्रियतिसृषु । तथा प्रियाश्चतस्रो यस्य स प्रियच-तसा प्रियचतस्रावित्यादौ । क्लीबेपि प्रियतिसृ प्रियतिसृणी प्रियतिसृणि प्रि-

र्द्वयोस्तिसृचतसृइत्येतावादेशौ भवतः ऋकारश्चऋ-कारवत्ततस्तुरारित्यात्वं भवति । तिस्रः । चतस्रः । तिसृ-

यचतसृ प्रियचतसृणी प्रियचतसृणीत्यादौ । अपि च पुंनपुंसकयोरप्यादेशौस्त एव त्रिचतुरोः स्त्रियां वृत्तेः । तथा प्रियास्तिस्रश्रोणिवायस्याः सा प्रियत्रिः प्रियत्री प्रियत्रय इत्यादौ । प्रियाश्चत्वारश्चत्वारिवायस्याः सा प्रियचत्वाः प्रियचत्वारौ प्रियचत्वार इत्यादौ च स्त्रियामपिनस्तः त्रिचतुरोरस्त्रीत्वात् । ननु चोभयोर्विशेषणं कस्मान्न भवति स्त्रियां वर्तमानयोः त्रिचतुरोर्नाम्नश्चेति । ततश्च प्रियाः तिस्रश्चतस्रो वायस्याः सेत्यत्रैवस्यातामिति चेन्न, सकृत् श्रुतस्य स्त्रियां ग्रहणस्यैकदेवोभाभ्यामशक्यसंबन्धत्वात् आवृत्तौ च गौरवापत्तेः । अत्र च त्यदादेष्टेरित्युत्तरसूत्रात् सिंहावलोकितन्यायेन स्यादाविति संबध्यतइति तिसृणां पुरांत्रिपुरमिति विभक्तिलुकितन्निमित्तः तिसृभावोपि निवर्तते तत्पुत्रइत्यत्रत्यदाद्यत्ववत् । एवं च क्लीबेप्रियतिस्रित्यत्रस्यमोर्लुकितन्निमित्तः तिसृभावोयथास्यात्तथेयं स्त्रियामत्र वक्ष्यामः । ऋवदिति । शातुल्यम ऋवत् तत्र शब्देवर्णत्वस्यातिदेशे प्रयोजनाभावाद्वर्णएव तदतिदिश्यत इत्याह । ऋकारश्चेति । ननु चेदमत्रास्ति प्रयोजनमेकवर्णत्वादन्तादेशौ तिसृचतसृभावौ यथा स्यातामित्येवं तर्हि ऋकारोप्यपरोत्रश्लिष्टो निर्दिश्यते ऋऋवदिति । ननु कोयमतिदेशः नतावन्निमित्तातिदेशः अशक्यातिदेशत्वात् निमित्तस्य क्षत्रिये ब्राह्मण्यवत्नापि संज्ञातिदेशः वतोऽनर्थकत्वापत्तेः अनावृत्तेश्च । आवर्तिन्यो हि संज्ञाभवन्ति न च ऋकार आवर्तते नापि ऋकाराश्रय आरादिनिषेधः ऋकारस्य भविष्यतीति वाच्यं उच्चारितं हि संज्ञास्वरूपं संज्ञिप्रत्यायकं नानुमितमिति ऋकारस्य संज्ञास्वरादिस्तु ऋकारस्याप्यस्त्येवेतिनास्या अप्यतिदेशः । शास्त्राति देशेप्ययमेवपरिहारः । रूपातिदेशेत्वादेशे ऋकारोच्चारणं व्यर्थम् । न च सामर्थ्यात् पाक्षिकं तद्रूपि श्रोष्यतेवतोऽनर्थकत्वात् ऋकारादेशविधानेनापि तथाऽस्य सिद्धत्वात् तादात्म्यातिदेशोपि सहावस्थितयोरुभयोरन्योन्यं भवति इह तु नास्ति ऋकारः । नत्वन्यत्रस्थितस्यापि ऋकारस्य बुद्ध्यासान्निद्ध्यात्तिसृचतस्रोर्ऋकारे तादात्म्यमतिदिश्यताम् । एवं तर्ह्यप्राधान्यान्नतादात्म्यातिदेशःअतः पारिशेष्यात्प्राधान्याच्च कार्यातिदेशोयमिति मत्वाह । तत इति । यस्मादृकारकार्यकृत् स्यादृकारस्तस्मादृकाराश्रयः स्तुरार्इति न । ऋतः प्रवृत्तस्यारोऽभावः सिद्धोभवति अरप्रसंगस्तआराबाधितत्वान्नोक्तः आरित्यपलक्षणम । कि-

भिः। चतसृभिः।तिसृभ्यः। चतसृभ्यः। तिसृभ्यः।चतसृभ्यः। न तिसृचतस्रोर्नामि दीर्घः। तिसृणाम्। चतसृणाम्। छन्दसि वा॥ तिसॄणाम्। चतसॄणाम्। तिसृषु चतसृषु॥ य्वोर्वि हसे * ४२४॥ धातोरिकारोकारयोर्दीर्घो भवति रेफवकारयोर्हसपरयोः पदान्ते च। गीः। गिरौ। गिरः। हे गीः। गिरम्। गिरौ। गिरः। गिरा। गीर्भ्याम्। गीर्षु। एवं पूर्धूरा-

यतिस्रइति। ऋतोऽङ डः। प्रियतिस्रीत्यादौ ङावित्यरपिनभवति। ननु प्रियतिसेत्यत्रापिऋतः सेरानप्राप्नोति मैवं तदन्तप्राप्तेःकेवलप्राप्तिपूर्वकत्वात्केवलयोश्चबहुवचनान्तत्वेनहसादौप्रयोजनाभावात्स्वरादौएवऋवद्भावस्यास्थितत्वात्। तिस्रइति। शसिनत्वत्रामृशसोरित्यलोपःस्यात्। नचऋकाराश्रयप्राप्तेःऋवद्भावेनबाधितत्वादकारस्य चस्वरूपासत्त्वात्तदाश्रयप्राप्तेरभावान्नस्यादिति वाच्यम् एवमेवरेफादेशस्याप्यप्रवृत्तेः। एवंतर्हिसंज्ञापूर्वकस्यविधेरनित्यत्वान्नालोपः। नतिसृइति। इदंचवचनंनामीत्यतःपरंवेद्यमितिदीर्घनिषेधइतिछंदसितुवा॥ य्वोः। इहधातोःप्रेरणेइत्यतोऽनुवर्तमानं धातोरिति य्वोर्विशेषणं य्वोरिति चेकारोकारौस्थानिनौगृह्येते न यवौहसयोर्दीर्घविधानानुपपत्तेः। र्वीति। रेफवकाराभ्यां द्वंद्वैकत्वेपरसप्तमीचेयम् हसइति चर्वीत्यस्यविशेषणंमत्वर्थीयाकारप्रत्ययान्तं हसवतिर्वीति। यद्यपि पूर्वस्थितेनापिहसेनसहवन्त्वंभवतितथापितेन व्यवधानात् न दीर्घत्वप्राप्तिरितिरेफवकाराभ्यां परएवहसो गृह्यते इति सर्वमालोच्याह धातोरित्यादि। हसः परोयाभ्यां तौतयोः। ननु चैवं विशेषणत्वात्परस्यप्राग्निपातेपरहसयोरिति स्यात् न, विशेषणविशेष्यभावे कामचारात् अथवापरं कुरुतःपरौ हसस्य परौ हसपरौ यौ हसंस्वस्मात्परं कुरुतः कौचतौ याभ्यां परो हसोभवति ततश्चयावानन्त्योरेफोवश्च यावांश्चोपधायां रिससर्वोपिहसोदीर्घस्यनिमित्तंभवतीति सिद्धम्। गीरिति। गॄनिगरणे क्विप्ऋतइति ऋस्थानिकत्वादिर्इकारस्य धातुसंबन्धिनोरेफेसपरेदीर्घेसिलोपेरविसर्गौएवं गीर्भ्यामित्यादावपिदीर्घः। गीर्ष्विति। अत्र विसर्गाभावश्चतुर्ष्वितिवज्ज्ञेयः। धातोः किं चतुरःइच्छति चतुर्यति दिवमिच्छति दिव्यति। य्वोः किं स्मर्यते। र्विकिं इष्यते। हसे किं गिरौ। इह च रिगतौ वीगतावित्यादौअतुसुसोरेतयोःरियतुः रियुः विव्यतुः विव्युः कियोः गियोः कुर्वेकुर्वीत्यादौचयत्ववत्वयोः स्थानि-

द्यः ॥ आबतःस्त्रियाम् * ॥ २८६ ॥ अकारान्तान्नाम्नःस्त्रियां वर्त्तमानादाप् प्रत्ययो भवति । पकारः सिलोपार्थः । स्या । त्ये । त्याः । त्याम् । त्ये । त्याः । त्यया । त्याभ्याम् । त्याभिः । त्यस्यै । त्याभ्याम् । त्याभ्यः । त्यस्याः । त्ययोः । त्यासाम् । त्यस्याम् ।

वत्त्वादसिद्धपरिभाषया असिद्धत्वाद्धाह्सपरत्वाभावान्नदीर्घः । परिभाषायाश्चानित्यत्वात्प्रतिदीन्नेत्यादौनालोपस्यासिद्धत्वमिति ह्सपरत्वाद्दीर्घः । धुर्यः कुर्यात् छुर्यादित्यादौचसंज्ञापूर्वकस्यविधेरनित्यत्वान्नदीर्घः । आबतः । इहातइति स्वरूपग्रहो न इच्छायामिति निर्देशादापि केवलाकारस्य ग्रहः ततएवस्त्रियामस्याभावाच्चततश्चपरिशेषादकारान्तस्यग्रहणमित्याह । अकारान्तादिति । एतच्चप्रकृतत्वान्नाम्नोविशेषणमित्याह नाम्नइति । ननु किमिह स्त्रियामिति स्त्रीत्वं प्रत्ययार्थः उपलक्षणं विशेषणं वातत्रस्त्रीशब्दस्य गुणमात्रवृत्तौ स्त्रीत्वेवाच्ये द्रव्यवचनान्नाम्न आबादयइत्याद्यर्थे स्त्रीत्वं भवति । अत्रपक्षेस्त्रीत्वस्यैकत्वादावाद्यं स्यादेकवचनमेवस्यात् कालिरित्यादाविवानुत्पत्तिश्चईपैवस्त्रीत्वस्योक्तत्वात्स्त्रीशब्देचस्त्यायतेर्ड्टःस्त्रीत्वेविधानात्स्त्रीत्वंप्रकृत्यर्थः ॥ इतीत्यादाविव न स्यादिति नाद्यः । द्वितीयेतुस्त्रीत्वस्योक्तत्वात्स्त्रीत्वोपलक्षितद्रव्यवचनान्नाम्न आबादिः स्त्रीसमानाधिकरणादाबादिरित्यर्थः स्यात् । अत्रापि पक्षेभूतमियंकारणमियं प्रधानमियंब्राह्मणीत्यत्र भूतादिभ्यः प्राप्नोति तस्मात्तृतीय एवपक्षो ज्यायान् । तत्रहिस्त्रियां यन्नामवर्त्तते तस्मात्स्वार्थेआबादय इति न कश्चिद्दोष इत्यभिप्रेत्याह । स्त्रियां वर्तमानादिति । तथाच महाभाष्ये उक्तं सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थेटाबादय इति । यद्यप्याद्ययोर्दोषोयथाकथंचिदुद्धार्यस्तथापि नास्त्यन्त्ये दोषसंभावनापीतिसएवाचार्यैराश्रितः पकारइति । आपइतिसिलोपायेत्यर्थः । ननूभयत्रापिपकारानिर्देशेप्यादन्तत्वादेव सेत्यादौ सिलोपः स्यादिति कथं सिलोपार्थः । एवंतर्हि सिलोपे अर्थे इत्वराकारनिवृत्तिःप्रयोजनं यस्येतिबहुव्रीहिः । दीर्घत्वेकृतइति । यस्यलोप इत्यस्य तुसंनिपातलक्षणपरिभाषयात्राप्रवृत्तिरित्याशयः । सर्वाशब्दवदिति । सर्वादित्वेसत्याबन्तत्वसाम्यादितिभावः । स्येति । त्यदो विभक्तौत्यदाद्यत्वे चापि दीर्घे चापइतिसिलोपः । ननु विभक्त्याश्रयबहिरङ्गत्वादसिद्धपरिभाषयान्तरङ्ग आन्नस्यात्न अनित्यत्वात्परिभाषायाः अनित्यत्वं मास्त्विति निर्देशादवसीयते । अन्यथात्राप्याबभावादास्त्विति निर्देशानपपत्तिः । त्यैङति । औङतीत्वे एत्वे । त्ययेति । टौसोरि-

त्ययोः । त्यासु । एवं सा । ते । ताः । या । ये । याः । एषा । एते । एताः । एवं किंशब्दः । का । के । काः । इयं स्त्रियाम् ॥ २१२ ॥ इदंशब्दस्य स्त्रियामियं भवति सौ परे । इयम् । इमे । इमाः । इमाम् । इमे इमाः । अनया । आभ्याम् । आभिः । अस्यै । आभ्याम् । आभ्यः । अस्याः आभ्याम् । आभ्यः । अस्याः । अनयोः । आसाम् । अस्याम् । अनयोः । आसु । चकारान्तस्त्वच् शब्दः च्चोः कुरिति कुत्वम् । त्वक्, त्वग् । त्वचौ । त्वचः । हे त्वग्, हे त्वक् । त्वचौ । त्व-

त्येत्वेऽय् । त्यस्यैइति । ङितांयटि यटोच्चेति सुप्यापश्चात्वे ऐत्वम् । त्यासामिति । अपइतिसुट् । त्यस्यामिति आमुङेः । एषेति । तइतिसत्वंकिलादितिषत्वम् । अन्वादेशे तुएतदोऽन्वादेशेइत्यनादेशे एनाम् एने एनाः एनया एनयोरितिज्ञेयम् । शेषंसुगमम् । किमर्थमियमादेशः क्रियते । दस्ययएवादिश्यताम् । न त्यदाद्यत्वस्य दुर्वारत्वात् दस्येति पृथग्वक्तव्यत्वाच्चदस्यमइत्यतः । परेतुइदमोयः सौस्त्रियामितिगौरवापत्तिः अन्यथासर्वेषां त्यदादीनां सर्वत्रयः स्यात्सर्वथा चत्यदाद्यत्वमपि दुर्वारमिति यथास्थितमेवसाधीयः । एवमपि स्त्रियामिति नवाच्यम् । पुंसितुविशेषविहितेनायमादेशेन बाधितत्वान्नातिव्याप्तिः क्लीबेपि नित्यत्वादादौ सेर्लुकि नतन्निमित्तमिति नस्यात्प्रसङ्गः । एवंतर्हि एतदेव स्त्रियांग्रहणं ज्ञापयति लुक्यपिकचित्तन्निमित्तंभवतीतितेन क्लीबेप्रियतिसृ प्रियचतसृत्यत्र सेर्लुक्यपि सिनिमित्तःतिस्रभावः सिध्यति । इयमिति । मान्तत्वविधिसामर्थ्यान्नात्वं सिलोपः । इमेइति । इदम् औ त्यदाद्यत्वेमत्वे आपिदीर्घे च इमाऔ इत्यत्रेत्वैत्वे । अनयेति । इदमष्टेस्त्यदाद्यत्वेऽन्टौसोरित्यनादेशे आपि दीर्घे टौसोरित्येत्वेऽय् । आभ्यामित्यादि । हलादौ इत्यसि त्यदाद्यत्वे आब्दीर्घौ अस्यैइति ङयिअत्वाब्दीर्घेपुङितांयटः सुटथत्वेचसभ्यइत्यसि । नचपुनराबाशंक्यः । यटोच्चेतितपरत्वात्तद्धिह्रस्व एवयथा श्रूयतेन दीर्घ इति क्रियते यद्येवंनास्यै रोचते फलमत्रापिनदीर्घः स्यात् न यटोच्चेत्यस्यैकपदसंस्कारकत्वेन पदान्तरसंसर्गिकार्याप्रतिबन्धकत्वात् । अस्य इति । ङसिङसोरत्वाब्दीर्घः यट्सुट्त्वास्त्वानि अनयोरित्योसोष्टावत् । आसामिति । आमि त्यदाद्यत्वेसुडामइति सुटिस्भ्यइत्यसि अत्वेचाप् । अस्यामिति । अत्वाब्दीर्घाम्भावयट्सुट्त्वास्त्वानि । आस्विति । आप्त्वाद्दीर्घः । कत्वमिति । यथासङ्ख्यपरिभाषया । त्वग्भ्यामिति

१ स्त्रियामिति ग्रहणम लुकितन्निमित्तमित्यस्याप्रवृत्तये इत्यन्ये ।

गः । त्वचा । त्वग्भ्याम् । त्वक्षु । एवमृच्वाच्प्रभृतयः ॥ पकारान्तोऽप्शब्दो नित्यं बहुवचनान्तः । आपः । अपः ॥ अपाम् ॥ २२१॥ अबादीनां भकारे । दत्वं भवति । अद्भिः। अद्भ्यः। अपाम्। अप्सु । शकारान्तो दिश्शब्दः । दिशाम् ॥ २२२ दिश्दृश्स्पृश्मृश्इत्यादीनां रसे पदान्ते च कुत्वं भवति । दिक्, दिग् । दिशौ । दिशः । हे दिक्, हे दिग् । दिशम् । दिशौ । दिशः । दिशा । दिग्भ्यामित्यादि । षकारान्तस्त्विष्शब्दः । त्विट्, त्विड् । त्विषौ । त्विषः । हे त्विट्, हे त्विड् । त्विषौ । त्विषः । त्विषा । त्विड्भ्यामित्यादि । आशिष्शब्दस्य सजुष्शब्दवत्प्रक्रिया । अदश्शब्दस्य सौ न विशेषः । त्यदाद्यत्वेऽनन्तरमाप्विभक्तिकार्यं पश्चान्मादुइत्यूत्वम् । असौ । अमू । अमूः । अमुम्। अमू। अमूः । अमुया।

त्वेजणा इति गः । त्वक्ष्विति । चस्य कत्वे षत्वे कषसंयोगे क्षः । नित्यमिति । शब्दशक्तिस्वाभाव्यादित्यर्थः । आप इति । शसि न दीर्घः । भिदुपीम् अपामिति बहुवचनमन्यानपि संगृह्णातीत्याह अबादीनामिति । तेन स्वतवद्भिः स्ववद्भिः माद्भिः समुपषद्भिरित्यत्र स्वतवन् स्ववस् मास् समुपषसामपि छन्दसिदत्वं सिध्यति ॥ तत्रैव यथाप्रयोगादिति भावः । भीति किम् । अप्सु । दिशां कुत्वं भवतीति । चोः कुरित्यतोऽनुवर्तते । दिगिति । कुत्वे प्राप्ते क एव भवति सावर्ण्यात्प्रथमातिक्रमे कारणाभावाच्च । त्विडित्यादि । षोड इति डत्वं शिष्टंस्पष्टम् । आशिषिति । सजुष्शब्दप्रक्रियया साध्या इत्यर्थः । तथाहि दोषामिति रेफे सजुषाशिषोरिति दीर्घेसिलोपे रस्य विसर्गे आशीः आशिषौ आशिषः आशीर्भ्याम् । आशीःषु आशीष्ष्विति सुगमम् । सौ न विशेष इति । यद्यपि त्यदाद्यत्वेऽदन्तत्वादापि प्रक्रियाविशेषस्तथापि रूपे न विशेष इत्यर्थः । अनन्तरमिति । अदन्तत्वादिति भावः । विभक्तिकार्यमिति । विभक्त्याश्रयं कार्यं विभक्तिकार्यमिति मध्यमपदलोपीसमासस्तेन यद्विभक्त्या सह सवर्णदीर्घादियच्च विभक्तेरीत्वादि यदपि विभक्तौ कार्यंटौसोरेत्वादि

१ बहुवचनं चिन्त्यं सुष्ठु आपो यस्मिन् स स्वाप् स्वद्भ्यामित्यत्रेष्टत्वात् प्राधान्यद्योतनायेत्यपिनवैदिकानां संग्रहार्थं बहुवचनमितिमाधवः तन्नेति रामाश्रमः लौकिकप्रयोगनिष्पत्तये इति प्रतिज्ञाभंगात् ।

अमूभ्याम् । अमूभिः । अमुष्यै । अमूभ्याम् । अमूभ्यः । अमुष्याः । अमूभ्याम् । अमूभ्यः। अमुष्याः । अमुयोः । अमूषाम् । अमुष्याम् । अमुयोः । अमूषु ॥ इति हसान्ताः स्त्रीलिङ्गाः ॥

अथ हसान्ता नपुंसकलिङ्गाः ॥ रेफान्तो वार्शब्दः । वाः । वारी । वारि २ । अयमइति विशेषणान्नुम् न भवति । वारा । वार्भ्याम् । वार्षु । चत्वारि । चत्वारि । चतुर्भिरित्यादि । नकारान्तोऽहन्शब्दः ॥ अह्नः ❀ २३ ॥ अह्नो नकारस्य सकारो भवति रसे पदान्ते च । अहः । अह्नी । अ-

तत्सर्वं संगृहीतं भवति पश्चान्मादूइतीति । यथाचैतत्तथा टानास्त्रियामत्रोक्तम् । असाविति । अदसः सौत्यदाद्यत्वे सौसइतिदस्यम् । सत्वे सेरौत्वे आय्योत्वम् । अमूइति । अदस्औ इत्यत्र त्यदाद्यत्वे मत्वेआपिदीर्घेआइतीत्वेएत्वे चोत्वम् । अमूरिति । प्राग्वज्जर्स।दीर्घेउत्वे । अमूमिति । अमो लोपे आपऊत्वम् अमूप्राग्वत् । अमूरिति । शस्यम्वत् । अमुयेति । टौसोरित्येत्वेपिअस्योत्वम् । अमूभ्यामित्यादिभादौ सर्वत्रापऊत्वम् । अमुष्याइत्यादि । ङेङसिङस्सु । याटः सुट्यापोत्वोत्वयोः षत्वम् । अमुयोरिति । ओसोष्यावत् । अमूषामिति । आपइत्यामः सुट्याषत्वे षत्वम् । अमुष्यामिति । आम्ङेरितिङेरामि यटः सुटि आपोऽत्वयत्वयोः षत्वम् । अमूष्विति । आप ऊत्वे षत्वं, शिष्टं स्पष्टम् । श्रीजा०व्याख्यारुअर्थहसान्तशब्दवचसां सिद्धान्तरत्नावली ॥ ५ ॥

अथेति । क्रमप्राप्त इत्यर्थः । वारिति । स्यमोर्लुके रस्यविसर्गः । वारीइति । ईमौ । वारीति । जश्शसोः शौ नुमयमइति नुम्नभवतीत्याह अयमइतीति । रेफस्य यमप्रत्याहारान्तर्गतत्वादितिशेषः । वार्भ्यामिति । रस्यविसर्गेरइतिपुनारः वार्ष्विति । रस्य प्राकृत्वान्नविसर्गः । चत्वारीति । वार्भि वत्त्वम् । चतुर्भिरिति । रस्यविसर्गे रइतिपुनारः ततोराद्यपइति भस्य द्वित्वे झभेजबा इतिभस्यबः । इत्यादीति । पुंवदितिशेषः । अह्नः । अह्नः सावित्यतः सोऽनुवर्ततेऽह्नइतिषष्ठ्यन्तादेशो भवतीत्याह नकारस्येति । रसेपरेइति । वसां रसेइत्यतोनुवर्तते । ननुचाह्नोरोरात्रिष्वित्येकमेव योगं कृत्वाऽत्रापि रएवविधीयतां मैवम् । अहोभ्यामित्यादौविसर्गस्य वार्भ्यामितिवद्रइति पुना रः प्राप्नोति । तथाहेदीर्घाहोनिदाघेत्यत्रापिर एव श्रूयेत । यथान्यासे तु नास्ति दोष इति रोरात्रिष्विति सूत्रे-

१ तन्न समीचीनं स्रोर्विसर्ग इत्यतो विसर्ग इत्यनुवर्ततां प्रक्रियालाघवात् ।

**ह्नी । अहानि । पुनरपि अहः । अह्नी । अहनी । अहानि । अह्ना । अहोभ्याम् । अहोभिः । अह्ने अहोभ्याम् २ अहोभ्यः । अह्नः । अहोभ्याम् । अहोभ्यः । अह्नः । अह्नोः । अह्नाम् । अह्नि । अहनि । अह्नोः । अहस्सु । ब्रह्म । ब्रह्मणी । ब्रह्माणि । एवं चर्म्मन्वर्म्मन्प्रभृतयः । नान्तादन्तयोः छन्दसि । ङेश्योर्वा लोपः । परमेव्योमन् सर्वाभूतानि । त्यदादीनां स्यमोर्लु-**

प्युक्तम् । अहरिति । अह्नःसावनेन सत्वे सेलुकि विसर्गः । अह्नी अहनी इति । वेङ्योरिपि वाल्लोपः । अहानीति नोपधाया इति दीर्घः । पुनरपीति । द्वितीयाया-मप्येतान्येव रूपाणीत्यर्थः । अह्नेत्यादि । स्वरे उपधालोपः । अहोभ्यामित्यादि भादौ अह्न इति सत्वे विसर्गेऽहब इत्युत्वे चोत्वं, ङौतु अह्नि अहनि इति वाल्लोपः । ब्रह्मेति । स्यमोर्लुकि पदान्तत्वान्नलोपः । ब्रह्मणी इति । अम्वयुक्तादिति नाल्लोपः । अवकु-प्विति णः । ब्रह्मभ्यामित्यादि । रसेन लोपः शेषं यज्वन्वत् एवमिति । प्रभृतिशब्दस्य प्रकारार्थत्वात् संयुक्तमवाद्यन्नन्ता एवं स्युरित्यर्थः । छन्दसीति । ङेरिकारान्तत्वाद् द्वन्द्वे पूर्वनिपातः । परमेव्योमन्निति । व्योमन्निति व्योम्नीति सति ङेर्लोपः । अथात्र नलोपः कस्मान्नभवति, न च वाच्यं ङेर्लोपस्य स्थानिवत्त्वेन रसपदान्तयोरभावा-दिति राजाश्व इत्यादावपि लोपाभावप्रसङ्गात् किञ्चातिदेशः आदेशाश्रितकार्याप्र-तिबन्धकत्वादपि नलोपः प्राप्नोति । एवं तर्हि छन्दसो दृष्टानुविधित्वान्नलोपाभावः । अथवा नलोपसूत्रेऽधाविति न धिमात्रनिर्देशः । किंतु धिश्चइश्चधि इति समाहार-द्वन्द्वैकत्वक्लीबत्वह्रस्वत्वानि नधपि तत्राधौ आगमशास्त्रानित्यत्वान्नुम् । इश्चात्र धिसाहचर्यात् सप्तम्येकवचनमेव गृह्यते इति राजेन्दुरित्यादौ नलोपः । अन्यथेहापि निषेधः स्यात् । ततश्चाधावित्यस्यायमर्थः धौङौच नलोपो न भवतीति । तेन यथा हे राजन्नित्यत्र नलोपो न भवति तथा परमेव्योमन्नित्यत्रापीति सिद्धमिष्टं तथा चाह भगवान् पाणिनिःनङिसंबुद्ध्योरिति । सर्वाभूतानीति । शिलोपः तस्यस्थानिवत्त्वा-न्नुमुदीर्घौ छान्दसत्वात् पृषोदरवन्नस्य वर्णस्य नाशः आगमानित्यत्वाद्वा छन्दसि दृष्टानुविधित्वाद्वानुम् । त्यदादीनामिति । सर्वाद्यन्तर्गणस्थानामेषांनपुंसकात् स्यमोरिति लुकि कृते त्यदादेष्टेरित्यत्वं न भवति तत्र हेतुमाह स्यादावितीति । लुकि न तन्निमित्तमिति । तन्निमित्तकार्यप्रतिषेधादिति भावः । परत्वेऽ-

किं कृते टेरत्वं न भवति स्यादाविति विशेषणात् द्विव-चनादौ टेरत्वे कृते कुलवत्प्रक्रिया । त्यत् । त्ये । त्यानि । तत् ते।तानि। यत्।ये।यानि।एतत् एते।एतानि । किम् के । कानि । इदम् ।इमे। इमानि। शेषं पुँल्लिङ्गवत् । प्रत्यक्। प्रत्यग् । प्रतीची। प्रत्यञ्चि । जगत् । जगती । जगन्ति । महत् । महती।महान्ति । सकारान्तः पयश्शब्दः । पयः । पयसी । पयांसि । पयसा । पयोभ्याम् । पयोभिरित्यादि । एवं तेजस्वचस्प्रभृतयः । अदश्शब्दस्य स्यमोर्लुकि कृते स्रोर्विसर्गः । अदः । द्विवचने अमू । अमूनि । अदः । अमू । अमूनि । शेषं पुंवत् ॥ इति हसान्ता नपुंसकलिङ्गाः ॥ अथ युष्मदस्मदोः स्वरूपं

पि पूर्वमत्वं न भवति नित्यत्वात् । ननु कृतेऽत्वेऽतोऽमित्यमाबाधितत्वाल्लुकोऽप्यनित्यत्वमिति परत्वादत्वमेवादौ प्राप्नोति । एवं तर्हि सर्वविधिभ्यो लुग्विधिर्बलवानिति लुगेवादौ स्यात् । कुलवदिति । प्रथमाद्वितीययोरितिशेषः । त्यदिति । स्यमोर्लुक् त्ये इति ईमौ त्यदाद्यत्वे पुँल्लिङ्गे सहैत्वम् । त्यानीति । जसासोः शौनुमृदीर्घौ एतदस्तु अन्वादेशे इत्येनादेशोपि भवति । शेषमिति । पुंल्लिङ्गवत् त्यदादीनां टावन्तं रूपजालं यथाप्रक्रियं ज्ञेयमिति शेष । प्रत्यगिति । प्रत्यच्शब्दात् स्यमोर्लुकि तन्निमित्तनुमोऽप्रवृत्तौ पदान्तत्वाच्चोः कुत्वम् । प्रतीची इति।ईमौ,अचेर्दीर्घश्चेत्यत्र ईरप्यनुवर्तते इति । अत्र।लोपदीर्घौ प्रत्यञ्चीति । नुमयम इति नुम्।टादौ।प्रतीचा प्रत्यग्भ्यामित्यादि पुंवत्साध्यम्। जगन्तीति।शौ नुम्।महान्तीति । प्राग्वन्नुमित्सम्महत इति दीर्घः । पयांसीति । नुमि सान्तत्वाद्दीर्घः।इत्यादीति । प्रागुक्तप्रक्रियत्वात् सुगममिति शेषः।अद इति । पदान्तत्वात् सस्य विसर्गः । द्विवचन इति अदस् ई इति स्थिते त्यदादेरित्यत्वे दस्य म इति मत्वे सहैत्वे मादू इति दीर्घे ऊकारे चामू इति स्यादित्यर्थः । अमूनीति । अदसः शौ त्यदाद्यत्वे मत्वे नुमि नोपधाया इति दीर्घस्योत्वम् । शेषमिति । तृतीयाद्यन्तं रूपजातंपुँल्लिङ्गवत्साध्यमित्यर्थः । तथाहि अदसस्त्यदाद्यत्वमत्वोत्वेषु नाभावेनामुनाभ्या मादौसर्वत्र त्यदाद्यत्वमत्वे

**निरूप्यते । तयोश्च वाच्यलिङ्गत्वात्त्रिष्वपि लिङ्गेषु समानं रूपम् ॥ त्वमहं सिना ॥ १८९ ॥ युष्मदस्मदोः सिसहितयोस्त्वमहमित्येतावादेशौ भवतः यथासंख्येन ।**

तत्र भ्याम् सु अद्भीत्यात्वे उत्वम् । अमूभ्याम् । भिसि पुनरदसश्चेति भिस्यधेब्भ्य॰ इत्यस्याप्रवृत्तौ भ्यसोश्चैस्मीत्येतस्यैरीबहुत्वेइतीत्वम् अमीभिः अमीभ्यः २ ङयि ङसेरति च सर्वादित्वात् स्मटि उत्वषत्वे अमुष्मैअमुष्मात्ङसःस्येउत्वषत्वे अमुष्य ओसोरेत्वे अयिचेत्वम् । अमुयोः २ आमः सुट्येस्मीत्येत्वस्याद्बहुत्वेषत्वममीषां ङेःस्मिनिउत्वषत्वे अमुष्मिन् सुप्येत्वस्य इत्वे षत्वममीषुएवं रूपाणि स्युरित्यर्थः। इति समाप्तौ॥ श्रीजानाऽव्याख्याषण्डहसन्तशब्दगणसांसिद्धान्तरत्नावली ॥

अथेति । स्वरूपमित्यनेनालिङ्गत्वादावाद्यभावेन रूपभेदाभावं द्योतयति यथा चैतत्तथा स्फुटयति तयोरिति । अपिरवधारणे युष्मदस्मदोः पुंस्त्रीक्लीबेषुत्वमहं युवामावां यूयं वयमित्याद्यभिन्नमेव स्वरूपंस्यादित्यर्थः । तत्र हेतुः वाच्यलिङ्गत्वादिति । उच्यते विशेष्यत इति वाच्यं विशेष्यं तस्य लिङ्गमिव लिङ्गं ययोस्ते तयोर्भावस्तत्त्वं तस्माद्विशेष्यलिङ्गत्वादित्यर्थः । ननुनायं हेतुस्समानरूपतां प्रयोजयति शुक्लादिशब्दानां विशेष्यलिङ्गत्वे भिन्नरूपत्वात् एवं तर्ह्ययमर्थः लिङ्गमाचष्टे लिङ्गयति लिङ्गयतीति लिङ्गं पचाद्यः वाच्यं लिङ्गं लिङ्गमाचक्षाणं ययोः तत्त्वाद्ययोर्वाच्यं विशेष्यमेव लिङ्गमाचष्टे न स्वयमलिङ्गत्वात्, तथा चोक्तम् । अलिङ्गेयुष्मदस्मदी इति । ततश्च लिङ्गविशेषापेक्षस्यापः प्रक्रियाविशेषस्य चाभावात्त्रिषु समानं रूपमित्यर्थः । च वाच्यलिङ्गत्वादिति वा समस्तं चस्य वाच्यलिङ्गमिव वाच्यलिङ्गं ययोस्तत्त्वादव्ययवदलिङ्गत्वादित्यर्थः । अथवोच्यन्ते इति वाच्यानि निमित्तान्येव लिङ्गानि लक्षणानि येषु त्रिषु लिङ्गेषु तत्त्वात्तयोः समानरूपमित्यर्थः । वक्ष्यमाणानां लक्षणानां त्रिषु लिङ्गेषु प्रवृत्तेः तेषु च विशेषाभावाद्रूपाभेद इति भावः । अत्र पक्षे युष्मभ्यां ब्राह्मणीभ्याम् इत्यादौ सन्निपातलक्षणपरिभाषया आद् न भवति अस्याश्चानित्यत्वाद्द्विशब्दादाद्भवति । त्वमहं सिनेति । संयोगे तृतीयेत्याह सिसहितयोरिति । युष्मदस्मदोरिति । इदं च युष्मदष्मदोः षष्ठीचतुर्थीद्वितीयाभिरित्यतोऽनुवर्तते । यथासंख्येनेति । युष्मदस्मदोरहमितित्वमहमिति । नन्वत्र त्वमहमोर्हसान्तत्वादेव सिलोपे सिद्धे व्यर्थं सिनेति लाघवाय साविंत्येव वाच्यं न च सुप्यतिव्याप्तिः त्वन्मदेकत्व

त्वम् अहम ॥ युवावौ द्विवचने ॥ ❀१८७॥ युष्मदस्मदोर्द्विवचने युवावावित्येतावादेशौ भवतः । आमौ ❀ १८८॥ युष्मदस्मदोःपरआवाम् भवति॥ युवाम् आवाम्। यूयं वयं जसा ॥ ❀ १८८ ॥ जसासहितयोर्युष्मदस्मदोर्यूयंवयमित्येतावादे-

इत्यनुवृत्तेः, नापि वाच्यं त्यदाद्यत्वं माभूदिति मान्तत्वविधिसामर्थ्यादेव तन्निर्वृत्तेर्यथायमियमित्यत्र, नापिसिलोपार्थं मान्तत्वमत्वबाधपूर्वमेवसिलोपप्रवृत्तेः । एवं तर्हि सकारनिमित्तमाम् सुभावित्यात्वं माभूदिति सिनेत्युक्तं तदपि मान्तत्वविधिसामर्थ्यान्न स्यादिति चेन्न । मान्तत्वस्याऽत्वबाधेनचरितार्थत्वात्। किञ्च पुरस्तादपवादन्यायेनात्वं स्यादेवेति वक्तव्यमेव सिनेति । इह च तदन्तविधेरपीष्टत्वात् त्वां मां युवामावां युष्मान् अस्मान् वाऽतिक्रान्त इत्यत्राप्यतित्वमत्यहमित्येव भवति । तथा तानेव करोतीति युष्मयतेरस्मयतेश्च क्विपितलोपेरयादिष्वेकदेशविकृतस्यानन्यत्वाद्युष्मदस्मदोरपि त्वमहमादय आदेशाःस्युरेवेति । तत्रापि त्वमहमित्यादीनि रूपाणि भवन्ति । तानि तु पदमञ्जर्यादेरवगन्तव्यानि विस्तरभयादिह नोच्यन्ते । युवावौद्विवचने इति । द्वयोरर्थयोर्वचनं द्विवचनमित्यर्थपरो निर्देशस्तेनद्व्यर्थवाचिनोरित्यर्थः तेन त्वांमांवाऽतिक्रान्तावतित्वामतिमां तथायुष्मानस्मान्वातिक्रान्तावतियुष्मानत्यस्मानित्यत्र नयुवावौ स्तोऽद्व्यर्थत्वात् युष्मदस्मदोः । युवामावामतिक्रान्तमतियुवामत्यावामित्यत्रतुयुवावौस्तः द्व्यर्थत्वात्तयोः । ननु चैवमपि युवयोः पुत्रो युष्मत्पुत्रः युवां करोति युष्मयतीत्यत्रापि युवावौ प्राप्नुतः मैवं, द्वित्व इति वाच्ये द्विवचनग्रहणस्यावृत्त्या संज्ञाशब्दस्यापि ग्रहणार्थत्वात् । आमौ । ननुकिमित्यामादेशः क्रियते नामेत्र क्रियते अमूशसोरित्यलोपप्रसङ्गात् अमो लाक्षणिकत्वंमाम् स्वावित्यपि नात्वप्रसङ्गः । एवं तर्ह्यकारोपदेशसामर्थ्यादेव नालोपो भविष्यति । अन्यथा ममात्रं विधीयेत किं च आमि सति युष्मयतेरस्मयतेश्च क्विपि तलोप औकारस्यामि युष्मामस्मामिति प्राप्नोति युषामसामिति चेष्यते तस्मादामावित्यस्यायमर्थः आअम् औ इति च्छेदः युष्मदस्मदोराकारान्तादेशो भवति औकारस्य च अमादेशः। एवं च क्विबन्तयोरपि युष्मऔ अस्मऔ इति स्थिते मकारस्यात्वे औकारस्य च अमि-युषामसामिति सिद्ध्यति। ननु चात्रापि युवावौ प्राप्नुतःएवं तर्ह्ययमाकारो मान्तयोरादेशाः पाक्षिका भवन्ति इति ज्ञापनार्थःरूपाणि तु तान्यपि पदमञ्जर्यादेरवगन्तव्यानि।

**शौ भवतः । यूयम् वयम्॥त्वन्मदेकत्वे ॐ १८६ ॥ युष्मदस्मदो-स्त्वद्मदित्येतावादेशौ भवतः एकत्वे गम्यमाने । आ-म्स्भौ ॐ १९० ॥ युष्मदस्मदोष्टेरात्वं भवत्यगि सकारे भिसि च परे । त्वाम् माम् युवाम आवाम् । शसो नो वक्तव्यः ॐ । युष्मान् अस्मान् । एटाङ्योः ॐ १७९ । युष्मदस्मदोष्टेरेत्वं भवति टाङीत्येतयोः परयोः । त्वया मया युवाभ्यामा-**

आत्वविधौ च युवामावामित्यत्रापि न दोषो भवति अदन्तत्वाच्च सुडाम इत्यस्यापि न प्रवृत्तिः अन्यथा हि लक्षणप्रतिपदोक्तपरिभाषाऽऽश्रयणीया स्यात् । यूयं वयमिति । इहापि मान्तत्वविधिसामर्थ्यादत्वंन । गौणत्वेप्यादेशविधेरिष्टत्वाद-तियूयमतिवयमित्येव भवति । त्वन्म । एकत्वे इत्यर्थपरो निर्देश ततश्चैकार्थवाचि-नोर्युष्मदस्मदोरित्यर्थः । अतएवत्वामात्मनइच्छति त्वद्यति त्वत्पुत्र इत्यादावप्यादेशः तथायुष्मानस्मान्वातिक्रान्ताअतियुष्मामत्यस्मामित्यादौ चादेशाभावः । समासस्यैका-र्थत्वे युष्मदस्मदोरनेकार्थत्वात् । एकत्वमिति युष्मदस्मदोरेकार्थत्वे गम्यमाने इत्यर्थः । आम्स्भौ । आ अमिति च्छेदः । अमित्यनेन द्वितीया लक्ष्येत । यथाऽतोमनत इत्यत्रा-तइति पञ्चमी तेन युष्मदस्मदोर्द्वितीयायां युषामासां युषानसानितिसर्वम-स्यात्वं सिध्यति अन्तादेशश्चायं षष्ठीनिर्दिष्टत्वाट्टेरात्वमिति क्वाचित्कोऽयंपाठः । टेरननुवृत्तेः युष्मदस्मदोर्युषामसामत्र दोषप्रसक्तेश्च भावित्येकदेशेन भिसेव लक्ष्यत इत्याह भिसीति । त्वां मामिति । युष्मदोस्मदश्चामित्वन्मदोः कृतयोः दस्यात्वे सव-र्णदीर्घेऽत्राऽमोऽल्लोपः । युवामावामिति । युवावयोः आमावित्यात्वेऽमिचाल्लोपः । त्यदादेरिति । शसि त्यदादित्वाददोत्वे तस्यात्वमित्यर्थः । अविशेषादात्वं नोक्तम् । शस इति । प्रकरणाद्युष्मदस्मद्भ्यामेवतयोश्चालिङ्गत्वाद्विध्यर्थमिदम् । युष्मानस्मा-नितिसुगमम् । त्वन्मदेति । कृताकृतप्रसङ्गित्वसाम्येपि शब्दान्तरप्राप्त्या अत्वस्यानि-त्यत्वात्पश्चाद्भावउक्तः । एटा । टआकारान्तरनिवृत्त्यर्थः ङेोऽसंदेहार्थः । टाङ्योरिति द्वन्द्वे टा इत्यस्य पूर्वत्वात् इदन्तस्यापि ङेः परत्वं निर्देशस्य सौत्रत्वाद्वा ए इति । अविभक्तिको निर्देशः । एत्वमिति । अन्तादेश इति शेषः । त्वया मयेति । युष्मद-स्मदोष्टेः त्वन्मदोष्टेः त्वन्मदोस्त्यदाद्यत्वस्यानेन एत्वेऽय् । ननु चैवं युष्मास्मोष्टेर्गौ-णत्वादसतित्यदाद्यत्वेमस्यानेन एत्वेऽयिच युषया असयेति प्राप्नोति । युष्या अस्या

वाभ्याम् युष्माभिरस्माभिः । तुभ्यं मह्यं ङ्या ॥ १९१॥ ङे-सहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमित्येतावादेशौ भवतः ॥ तुभ्यम् मह्यम् युवाभ्यामावाभ्याम् ॥ भ्यम्स्भ्यम्॥१९२ ॥ युष्मदस्मदोः परो भ्यस्भ्यं भवति । शकारो भकारादित्व-व्यावृत्त्यर्थः तेनात्वैत्वे न भवतः । युष्मभ्यमस्मभ्यम् ॥ ङसिभ्यसोःश्तुः ॥ १९३ । पञ्चम्या ङसिभ्यसोःश्तुर्भवति ॥

इति चेष्यते एवं तर्हि टाङ्योरित्यत्र य्वौवेत्यतो यकारोऽनुवर्तते टाङ्योरिति च टाङ्योसां लुप्तसप्तमीकोनिर्देशस्तदयमर्थः । युष्मदस्मदोर्यकारोप्यन्तादेशो भवति टाङ्योस्तु परतः त्यदाद्यत्वाऽपवाद:त्वया मया त्वयि मयि अतित्वया अतिमयाअति-त्वयि अतिमयि युष्मस्मोरपि युष्या अस्या युष्यि अस्यि ओसि तुपूर्वे यत्वे तेन सहैव युवावयोः कृतयोरोसीत्यत्वेऽयादेशः युवयोरावयोः । नचैवमोसि यत्वविधानं व्यर्थ-मिति वाच्यम् । युष्योरस्योरित्यत्र चरितार्थत्वात् तदेवं यत्वेनापि सिद्धावेत्वविधिश्चि-न्त्यप्रयोजनः । युवाभ्यामावाभ्यामिति । युवावयोः कृतयोरद्धीत्यात्वं आम्स्भावि-त्यत्र भकारस्यापि प्रश्लेषाद्वा । अत एव युष्मस्मोः युषाभ्यामसाभ्यामिति मस्यात्व-सिद्धिस्तत एव च युष्माभिरस्माभिरित्यत्रापि आत्वसिद्धौभिसः पृथगुपादानंमेऐभ्य इत्यस्य बाधनार्थम् । तुभ्यं मह्यं ङ्येति । सहयोगे टा इत्याह ङ्या सहितयो-रिति । तुह्यं मह्यमिति । मान्तत्वसामर्थ्यान्नात्वे इहाप्येकत्वद्वित्वबहुत्वेषु गौणत्वेपि परत्वादेतौ स्त इति अतितुभ्यमतिमह्यमित्येव भवति । भ्यस् । भ्यसत्र चतुर्थीबहु-वचनं गृह्यते ङसिभ्यसोरित्यत्र ङसिसाहचर्यात्पञ्चमीबहुवचनस्य ग्रहणात्, ननु श्भ्यमः शोनतावच् श्रुत्यर्थः युष्मभ्यमिति प्रयोगश्रुतेः नापि सर्वादेशार्थः । भ्यमोऽ नेकवर्णतयैव तत्सिद्धेरित्यत आह शकार इति । सति हि शकारे भादित्वाभावात् भादिनिमित्तमेत्वमात्वं च न भवति आत्वस्यैत्वबाध्यत्वेपि एत्वप्रतिबन्धप्रा-प्तिमुद्दिश्यप्रतिषेधउक्तःभादित्वव्यावृत्तेश्चानिष्टतांकर्तुंवाशक्यत्वात् शकारोऽनन्या र्थत्वादेत्वादिप्रतिबन्धानन्तरमुदकाहरणानन्तरमुदकार्थघटवन्नोपादयितेइत्याशयःङसि इकारोपदेशः पञ्चमीप्रतिपत्त्यर्थइत्याह पञ्चम्याइति । शकारइति । असतिहि शकारे उत्वस्योच्चारणार्थत्वात्तकारमात्रमादेशोन्तादेशः स्यादितिभावः । त्वन्म-दिति । त्वन्मदेकत्वइतित्वन्मदौ त्वं श्तुर्ङसेः युष्मदस्मदिति । अत्वं

---

१ आ अम्स्भौ इत्येव च्छेद अत्र अअम्स्भौ इति पदन्यासे त्वांमामित्यादौ न किमप्यनिष्टं युष्माभिरित्यादौ अकारमाश्रित्य चानिष्टं प्रसज्येत आकारप्रश्लेषएवरम्यः ।

शकारः सर्वादेशार्थः । त्वत् मत् युवाभ्यामावाभ्याम् ॥ युष्मदस्मत् ॥ तव मम ङसा *९७॥ ङसासहितयोर्युष्मदस्मदोस्तवममेत्येतावादेशौ भवतः । तव मम युवयोरावयोः । सामाकम् * । युष्मदस्मदोः परःसामाकं भवति । युष्माकमस्माकम् । त्वयि मयि युवयोरावयोः युष्मासु अस्मासु । अथानयोरादेशविशेषविधिर्निरूप्यते । युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवान्नौ वस्नसौ * १८२ ॥ षष्ठीचतुर्थीद्वितीयासहितयोः युष्मदस्मदोर्यथासंख्येनामी आदेशा

भ्यसःश्तुः रहचासन्देहार्थं श्तुर्ङसिभ्यसोरितिनिर्देश्ये अकारप्रश्लेषार्थमेवंनिर्देशः व्याख्यानाविशेषोवाकर्तव्यस्तथाहि ङसिभ्यसःअश्तुरिति ततश्चान्त्यभ्यांङसिभ्यसोः श्तुर्भवतिअश्चान्तादेशस्तेनयुष्मस्मोर्युषत् असत्इतिभवति अयमेवचाकारोभ्यस्श्भ्यं सामाकमित्यत्राप्यनुवर्ततइति तत्रापि युष्मस्मोर्युषभ्यमसभ्यं युषाकमसाकमितिसिध्यति तवमम ॥ गौणत्वेतावादेशौ भवतः इति तत्रातितवातिममेत्येवभवति सर्वादिति । युष्मदस्मदोः सर्वादिपाठादामित्यदाद्यत्वे कृतेन्तत्वात्सुडामः इत्यामः सुडित्यर्थः । सामामित्यामः ससुट्कस्यग्रहणंसुटोऽत्रस्थाननिवृत्त्यर्थं ननु चैवमतियुष्माकमित्यादौ गौणत्वात्सुटोऽप्रवृत्तेराकम्नप्राप्नोति उच्यते यदयमाकम्याकारमुपदिशतितज्ज्ञापयति गौणत्वेप्याकम्भवतीति आम्मकारोहियुष्मस्मोरामियुषाकमसाकमित्यत्रश्रवणार्थं क्रियते यद्यऽत्रगौणत्वेनसुडभावादाकम् । नप्रवर्तेत तर्हिव्यर्थएवाकारः स्यात् त्यदाद्यत्वान्तादाकम्यपिकृतेसहदीर्घेणापि युष्माकमस्माकमितिसिद्धेः युष्माकमस्माकमिति युष्मदस्मदोरामिअत्वे सुटिसामआकमिचसहदीर्घः । त्वयिमयीति ङौत्वन्मदोष्टेरत्वे एटाङयोरित्यत्वेऽय्युष्मासुअस्मास्विति । आम्भ्यामित्यात्वंयुष्मस्मोरपिमस्यात्वेकृतेयुषासु असास्विति भवति गौणत्वेतुत्वामतिक्रान्तइतियुष्मदएकार्थत्वे सिजसुङेङस्सु परत्वात्त्वदादेशंबाधित्वायथास्वं त्वमादयो भवन्तीति तत्रातित्वमतियूयमतितुभ्यमतितवेतिरूपाणिस्युः । अन्यत्रत्वदादेशेप्राच्यैवप्रक्रिया । औअम्यौषुअतित्वामिति स्यात् शसि तु अतित्वानितिअत्वाल्लोपदीर्घनत्वानि ननुनात्रगौणत्वादति-

भवन्ति ॥ तत्रैकवचनेन सहितयोस्तेमे भवतः । द्विवचनेन वान्नौ । बहुवचनेन वस्नसौ । स्वामी ते स समायातः स्वामी मे सांप्रतं गतः । नमस्ते भगवन्भूयो देहि मे मोक्षमव्ययम् ॥ १ ॥ स्वामी मां स जहासोच्चैर्दृष्ट्वा नौ दानयाचनाम् । राजा वां दास्यते दानं ज्ञानं नौ मधुसूदनः ॥ २ ॥ देवो वामवताद्विष्णुर्नरकान्नौ जनार्दनः ॥ स्वामी वो बलवान् राजा स्वामी नोऽसौ जनार्दनः ॥ ३ ॥ नमो वो ब्रह्मविज्ञेभ्यो ज्ञानं नो दीयतां धनम् । सानन्दान्वः प्रपश्यामः पश्यामो नः

घादिवदत्वं स्यात् । उच्यते दस्य मइत्यत्रदस्येति विभज्यते तत्र च युष्मदस्मदोरित्यनुवर्तते टेरःस्यादाविति च ततश्चानेनदान्तयोर्युष्मदस्मदोष्टेरत्वं प्रतिप्रसूयते इतिगौणत्वेपि स्यात् दान्तयोः किं मान्तयोर्माभूत् युष्मो युषाकमस्मोऽसाकम् टादावपिअतित्वया अतित्वाभ्याम् ३ अतित्वाभिः अतितुभ्यमतित्वत् २ अतित्वयोः २ अतित्वाकमतित्वयिअतित्वासु इतितथायुवामतिक्रान्तइत्यत्रापि सिजसूङेङस्सु प्राग्वत् । अन्यत्र द्व्यर्थत्वेयुष्मदोयुवादेशः तत्रौअमौषुअतियुवामितिः शसादौ त्वेतियुवान् अतियुवया अतियुवाभ्याम् अतियुवाभिः अतियुवभ्यम् । अतियुवत् २ अतियुवयोः २ अतियुवाकम् अतियुवयिअतियुवासु इति । युष्मानतिक्रान्तइत्यादावपिसिजसूङेङस्सु प्राग्वत् अन्यत्रबह्वर्थत्वाद्युष्मदोनात्वग्युवादेशौतत्रौअमौषुअतियुष्मामृशसादौचातियुष्मान् अतियुष्मयाअतियुष्माभ्याम् ३अतियुष्माभिःअतियुष्मभ्यम्अतियुष्मत् ३ अतियुष्मयोः २ अतियुष्माकम्अतियुष्मयिअतियुष्मासुएवमस्मदोपि ७। तथाचोक्तं श्रीरामचन्द्राचार्यैः। समस्यमानेद्व्येकत्ववाचिनीयुष्मदस्मदी । समासार्थोन्यसंख्यश्चेत्स्तो युवावौत्वमावपि १ सुजसूङेङस्सु परतआदेशाः स्युः सदैवते । त्वाहौयूयवयौतुभ्यमह्यौतवममावपि२ एते परत्वाद्बाधन्ते युवावौविषयेस्वके। त्वमावपिप्रबाधन्ते पूर्वविप्रतिषेधतः३द्व्येकसंख्यःसमासार्थोबह्वर्थेयुष्मदस्मदी । तयोरद्व्येकतार्थत्वान्नयुवावौत्वमौनच४इति अथानयोरिति आदेशविशेषो येनविधीयते सनिरूप्यतइत्यर्थः । युष्मद । षष्ठ्याअल्पस्वरत्वात्प्राग्निपातःसहयोगेतृतीयेयंतद्वत्षष्ठ्यादीनां प्रत्येकंवचनत्रयात्मकत्वात्तस्यचैकत्वासंभवात्एकैकवचनसहितयोर्यु-

**सुदुःखिनः ॥ ४ ॥ त्वा मामा ❀ १८३ । अमासहितयोर्युष्म-दस्मदोस्त्वामेत्येतावादेशौ भवतः । पश्यामि त्वामदालीढं पश्यमामदभेदकम् । पश्यामि त्वा जगत्पूज्यं पश्यमा जगतां पतिम् ॥५॥ नादौ ❀ १९४ । पादादौवर्तमानयोर्युष्म-दस्मदोर्नैते आदेशा भवन्ति । चादिभिश्च ❀ १८५ ॥ चादिभियोगे नैते आदेशा भवन्ति । चादिर्निपातः ❀ ३२८॥ च वाह**

ष्मदस्मदोः स्थानित्वं तत्र चयथासंख्यपरिभाषयातइतिमत्वाह । तत्रैकेति षष्ठ्यादीनामितिशेषः षष्ठ्यामेचतुर्थ्यांवांनौद्वितीयायावस्नसौइति तुक्रमोव्याख्यानादलंभवति तेमयादयो एकाद्यर्थाभिधायिनस्तादृशमेव स्थानिनमाक्षिपंतीतितथोदाहरति । स्वामीतइत्युभयत्रापिविनासहेतिस्वामिशब्दयोगे युष्मदस्मदोर्ङसितदेतयोस्तेमयादेशौ विधौचयत्रौवेत्यतोन्यवस्थार्थोवाशब्दोऽनुवर्ततेइत्यनन्वादेशपक्षेस्वामीतवेत्यापिभवति अन्वादेशेतुविवक्षिते स्वामीते इत्येव । नमस्ते इति तेनैवनमोयोगेयुष्मदस्मदोर्ङे देहिमेइति शेषः । कार्ये इतिसंप्रदानेअस्मदोङे । अमिविशेषं वक्ष्यति स्वामीवामिति । स्वामियोगेङोस् दृष्टातावितिशेषः । कार्यइतिसंबन्धेङोस् राजावांज्ञानंनौइति चसंप्रदाने चतुर्थीभ्याम् देवोवांनरकात् नाविति कर्मण्यौ नरकादिति भयहेतौचेतिपंचमी स्वामीवः स्वामीनइतिस्वामियोगेआम् नमोवइतिनमोयोगेचतुर्थी भ्यस् ज्ञानं नइति संप्रदाने सानंदान्वः प्रपश्यामोनइतिकर्मणिशस् अत्रसर्वत्रापियथायथंविभक्त्यन्तयोर्युष्मदष्मदोस्तेमेवांनौवस्नस्एतेआदेशाः। शिष्टं स्पष्टम् । त्वामा । किमत्रामोग्रहणममोवानाद्यः त्वामोरेकार्थवाचित्वेनबहुवचनान्तयोरस्थानित्वात् व्याख्यानाद्वाअतोन्त्यमाश्रित्याह अमासहितयोरिति । पश्यामित्वा-पश्यमेत्युभयत्रापिकर्मण्यम् नादौसामान्यनिर्देशाद्वाक्यादावपि नादेशा भवन्ति त्वांपातुमांपातुमाम् । नैतेआदेशाइति । तेमेवांनौवस्नस्त्वामाइत्यर्थः । नन्वनन्तरत्वात्त्वामोरेवानिषेधः स्यात् । मैवं तथासति त्वामामानादौत्येकयोगे कार्येपृथग्योगकरणस्यप्राप्तानांप्रस्तुतानां चसर्वेषामेवानिषेधार्थत्वात् उदाहरणानितुतवस्वामी समायातोममासौसांप्रतंगतः इत्यादीनियुष्मदस्मदोः पादादित्वेनज्ञेयानि । चादिभिः। तृतीयानिर्देशाद्योगेनिषेधः इत्याहचादिभिर्योगेइति । यद्यप्यविशेषेणचादियोगेनिषेधउच्यते तथाप्यादिशब्दस्यव्यवस्थार्थत्वात्चादिगणस्थःचवाहअहएवेति नचवाहा-

अह एव एवं नूनम् पृथक् विना नाना स्वस्ति अस्ति दोषा मृषा मिथ्या मिथस् अथ अथो ह्यस् स्वस् उच्चैस् नीचैस् स्वर् अन्तर् प्रातर् भूयस् आहो स्वित उद् सह ऋते अन्तरेण अन्तरा नमस् अलम् कृतम्; अमानोनाप्रतिषेधे ईषत् किल खलु वै आरात् भृशम् यत् तत् स्वराश्च इत्येवमादिगणो निपातसंज्ञो भवति। तत्रादिर्विभक्त्यर्थे ॥ ३३९ ॥ निपात्यते तस्मिन्निति तत्र यत्र कुत्र अत्र क्व, तस्मिन्काले तदा यदा कदा, तेन प्रकारेण तथा

हैवयुक्तेइतितन्त्रान्तरानुरोधात्पश्चैवगृह्यन्तेउदाहरणानितु उक्तैरेवचादिपदप्रक्षेपादादेशाभावेस्वामीतवचसमायातइत्यादीत्युक्तप्रायाण्येवेतिपृथग्नोक्तानि अयं चसाक्षान्मुख्ये एवयोगेनिषेधः न चादियुक्तयोगेगौणयोगत्वात्हरोहरिश्चमे स्वामीसूत्रे चस्याऽनुक्तसमुच्चयार्थत्वान्मनोज्ञानार्थधातुभिर्योगेतद्योगेपिनिषेधः चेतसात्वांसमीक्षतेभक्तस्तवरूपंध्यायति तथाकेवलात्संबोधनान्तरादपिनिषेधः । देवास्मान्पाहि केवलात्किंहेदयालोनः पाहिसर्वदादेवरक्षनः । चादिर्निपातः। ननु कथं निपातसंज्ञाविधीयतेऔनिपातइतिसन्धिनिषेधार्थमिति चेन्न सऔअव्ययमित्येव तस्यसिद्धत्वात्तथाहिआकारओकारान्तमेकस्वरश्चाव्ययंसन्धिंनप्राप्नोति अव्ययसंज्ञातुचादीनामप्यस्त्येव एवं तर्हिअन्वर्थसंज्ञाविज्ञानार्थंसंज्ञामहतीचक्रियते निपतन्त्यनेकेष्वर्थेष्वितिनिपाताइतिज्वलादित्वाण्णः । तथाचोक्तं निपाताश्चोपसर्गाश्च धातवश्चेतितेत्रयः। अनेकार्थाः स्मृताः सर्वे पाठस्तेषांनिदर्शनमिति । तेनयत्व्यौषेत्यत्रोक्तं वाग्रहणादियंविवक्षेति । यच्चह्रस्वोवेत्यत्रवक्ष्यतिनौकादौनभवतीत्यादितत्सर्वमुपपन्नं भवति । अमेति । अमानोनाएते प्रतिषेधे चादयः। स्वराश्चेति । अइउऋऌएऐओऔ एते । एवमादिरिति । आदिना शश्वत् सुदिक् चित् नेत् कूपदित्यादयः । तत्र विभक्तीनामर्थोऽभिधेयमपादानादिः तस्मिन् तत्रादिः प्रकृतिप्रत्ययसमुदायी निपात्यत इत्यर्थः। तदेवं दिङ्मात्रमाह । तस्मिन्नितीति । उपलक्षणमेतत्सप्तम्याः स्त्रीनपुंसकयोरपि। तत्रेति । अत्रसप्तम्यर्थेतदःत्रप्रत्ययः तादेशश्च निपात्यते । यत्रेति पूर्ववद्यदायदोयादेशः। कुत्रेति । तद्वत् किमःकः। अत्रेति । तथाएतदोश् । क्वेति । प्राग्वत् किमः क्वादेशोऽप्रत्ययश्च । तदेति तदोत्र काले वाच्ये

यथा इत्थम्, तस्मादिति ततःयतः इतः अतः कुतः, सार्वविभक्तिकस्तसित्येके, पूर्वस्मिन्निति पुरस्तात, अधस्तात्, अवस्तात्, परस्मिन्निति परेण । दक्षिणाहि वसन्ति चाण्डालाः । किमः सामान्ये चिदादिः कश्चित तदधीनकात्स्न्र्ययोर्वासात राजसात् भस्मसात् । ऊर्युरर्यङ्गीकरणे ऊरीकृत्य उररीकृत्य ॥ सद्य आदिः का-

ाप्रत्ययस्तादेशश्च । ननु विभक्त्यर्थे निपातनमुक्तम् । अत्र च कालोर्थोविशिष्ट इति कन निपातनं स्यात् एवं तर्हि विभक्त्यर्थे इत्यस्यायमर्थः विभक्तयश्चार्थाश्च विभक्त्यर्थं तत्र विभक्तिशब्देन सामर्थ्याद्विभक्त्यर्थो लक्ष्यते अर्थशब्देन विशिष्टोर्थः कालादिरिति । यदेति । यदोत्रदापादेशश्च । कदेति । किमोत्र कः । तथेति । तदोत्र प्रकारे थाप्रत्ययस्तादेशश्च मकारश्च सामान्यस्य भेदको विशेषः । यदेति । यदोपथा च । इत्थमिति । इदमस्थम् इदादेशश्च । तत इत्यादि । तद्यदिदमेतकिमन्तासि प्रत्ययः क्रमात्तयेश् अश् कुभावश्च । सार्वेति । सर्वाश्च ता विभक्तयस्तासुभवः केनेचेका इति कः णिच्च सर्वेभ्यः शब्देभ्यः सर्वविभक्त्यर्थेच तसूप्रत्ययो भवति इत्येके इच्छन्तीत्यर्थः । पुरस्तादिति । अत्र पूर्वशब्दात्सप्तमी पञ्चमीप्रथमार्थे अस्तात्प्रत्ययः पुरादेशश्च । पूर्वस्य दिग्देशकालेषु निपात्यते एवं परादिभ्योपि दिग्देशकालेष्वप्युदाहार्यम् । अधस्तादितिप्राग्वत् । अधरस्यास्तादधादेशश्च । अवस्तादिति । तद्वत् अवरस्यावादेशः । परेणेति । अदूरे एनोऽपञ्चम्याः। दक्षिणेति । दक्षिणोत्तराभ्यां दूरे आआही । चाण्डाला दक्षिणस्यां दिशि दूरे वसन्तीत्यर्थः । किम इति । सामान्यं विशेषाभावस्तत्र विभक्त्यन्तात् किमः चिच्चनादयः प्रत्ययाः प्रयोज्या इत्यर्थः। कश्चिदिति । अवशिष्ट इत्यर्थः । तदधीनेति । तदिति प्रकृत्यर्थः उच्यते तदायत्तत्वे गम्ये कृभ्वस्तिसंपद्योगे यःसात्प्रत्ययस्तथाप्रकृत्यर्थस्य काकेनस्य सर्वान्मनाविकाररूपायन्तौ च अभूततद्भावे कृभ्वस्तियोगे संपद्यते कर्तरियः सात्प्रत्ययस्तद्धितः शेषानिपात्याः कत्यादय इति वा निपातितः सोऽत्र चादिगणेऽव्ययसंज्ञार्थोज्ञेयः इत्यर्थः । राजसादिति । एतावत्येवाव्ययकार्यमिति कादियोगो न दर्शितः । प्रयोगस्तु राजसात्करोति भवति स्यात् संपद्यते चेति राजाधीनमित्यर्थः । भस्मसादिति । करोति भवति अस्ति चेति शेषः । अभस्म सकलं भस्मसंपद्यते इत्यर्थः । ऊर्येति । अङ्गीकर-

ले ✻ ३३१ ॥ निपात्यते सद्यः अद्य अधुना इदानीम् ॥ पूर्वेद्युः ✻ ३२५ ॥ प्रादिरुपसर्गाः प्र परा अप सम् अनु अव निर् दुर् वि आङ् नि अधि अपि प्रति सु उत् अभि ॥ परि उपेपश्चत अन्तर् आविर् । अयं गण उपसर्गसंज्ञकः ॥ प्राग्धातोः ✻ ३२७ ॥ उपसर्गा धातोः प्राक् प्रयोक्तव्याः ॥ तदव्ययम् ✻ ३२२ ॥ तदिदं चादिशब्दरूपम-

ण इत्युपलक्षणं विस्तारादावपि ऊरीकृत्येति । अङ्गीकारार्थत्वमदर्शनार्थमेवमुक्तम् । प्रयोगस्तु क्रियान्तरानुप्रयोगे ज्ञेयः अव्ययसंज्ञाप्रयोजनं तु केवलानामूर्यादीनां प्रयोगे द्रष्टव्यम् । सद्यः । कालेर्थे निपात्यते इत्यर्थः । पूर्वयोगे तु विभक्तिशब्दसांनिध्याद्विभक्त्यर्थविभक्तः कालादिरर्थः । इह तु केवल एव कालोर्थ इति ततोऽस्य भेदः । सद्यइति । समानेहनीत्यर्थः समानस्यात्र सभावो द्यश्च प्रत्ययोऽहनि वाच्येनिपात्यते । अद्येति । अस्मिन्नहनीत्यर्थः इदमोऽश् द्यश्च । अधुनेति । इदमोऽश्धुना च अस्मिन् काल इत्यर्थः । इदानीमिति । इदम इश् दानीं च प्रत्ययः अर्थः प्राग्वत् । पूर्वेद्युरिति । पूर्वस्मिन्नहनीत्यर्थः । पूर्वादेरेद्युस्प्रत्ययोऽत्र एवमन्येपि परुत्परार्यादयः आदिना ज्ञेयाः । प्रादिः । ननु किमर्थमुपसर्गसंज्ञा विधीयते आवर्तिन्यो हि संज्ञा भवन्ति प्रादिशब्दश्चावर्तते प्रादेश्च तथा तावित्यादिनोपसर्गशब्दः । एवं तर्हि यत्र प्रादिग्रहणं तत्रोपसर्गसंज्ञस्य ग्रहणं यथा स्यादिति संज्ञारम्भः महासंज्ञा तु अन्वर्थताविज्ञानार्थं क्रियया उपसमीपे सृज्यते इत्युपसर्ग इति एतदपि प्राग्धातोरिति वचनात् सिद्धम् । एवमपि यस्याः समीपे सृज्यते तामेव प्रत्युपसर्गः नान्यामिति तेन प्रगतो नायकः प्रनायक इत्यत्र शाकपार्थिवादित्वात्समासे गतपदलोपे च गमिः क्रियासमीपे सृष्टस्य प्रस्य नयतिं प्रत्यनुपसर्गत्वात् प्रादेश्चेति णत्वं न । प्रउपसर्ग इत्यन्वर्थसंज्ञया समीपे पूर्वत्र वा प्रयोगे प्राप्ते नियमार्थमिदम् । उपसर्गा इति । पूर्वसूत्रेण विहितसंज्ञाः प्रादयः इत्यर्थः । धातोः किं यावता प्रादीनां श्रुतायां क्रियायां तद्विशेषात्मकत्वात् अश्रुतायां तु साधनक्रियाक्षेपकात्मकत्वात् क्रियातः प्रागिति । विज्ञास्यते मैवमिहहि कर्तुमिच्छाति प्रचिकीर्षतीत्यत्र सवाच्यया इच्छया प्रस्य प्रयोग इति सदैव प्राक् प्रयुज्येत इति सति पुनर्धातुग्रहणे धातो-

व्ययसंज्ञं भवति क्त्वाद्यंतं च । क्त्वा क्यप् तुम् णम् च्वि धा कृत्वस् सु आम् इत्याद्यन्तमव्ययसंज्ञं भवति । अव्ययाद्विभक्तेर्लुक् * २५० ॥ अव्ययात्परस्या विभक्तेर्लुग्भवति न तुशब्दनिर्देशे । अव्ययानां च न लिङ्गादिनियमः । उक्तं हि सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययम् । उ-

रेव चिकीर्षितेः प्राक्प्रयुज्यते । तद । ननु चात्रान्तरत्वात्सद्यःप्रभृतीनामेवाव्ययसंज्ञा स्यात् । प्रादीनां तदन्तरित्वान्नतदिति निर्देशात् स हि प्रादीनां चादीनां च परामर्शार्थः अतएवाह । तदिदं चादीति । इह चादीनामादौ पाठादेवमुक्तम् । सूत्रक्रमे हि प्रादीति वाच्यं स्यात् । क्त्वाद्यन्तं चेति । क्त्वा आदिर्येषां ते तदन्तमपि शब्दरूपमव्ययसंज्ञं भवति क्त्वाक्यप् तुमुणमादीनां चान्तेपि तदव्ययमिति द्वितीयस्य सूत्रस्य पाठादिति भावः वस्य चायमर्थः तदव्ययं तच्छब्दोऽन्यत्र स्थितस्यापि तुमः परामर्शार्थः । तदिदं तुमुक्त्वाद्यन्तमव्ययसंज्ञं भवति । यष्टुं याति इच्छति भोक्तुं स्नात्वा भुङ्क्ते आगत्यात्ति पायं पायं गायतीत्यादितुमादीनां कृत्प्रत्ययानां चादिगणे पठितानां पूर्वेणैव संज्ञासिद्धौ द्वितीयमिदं विस्पष्टार्थं सूत्रमित्याचार्यैरुपेक्षितम् । अव्यय । ननु चाव्ययानां निस्संख्यत्वान्निष्कारकत्वाच्चविभक्त्युत्पत्तिरेवनास्तीतिकिंलुग्विधानेनोच्यते यदा तस्मात्सिऔजसिति स्वतन्त्रो विधिस्तदाव्ययेभ्योप्यनेनैव सामान्यविहिताविभक्तिर्भवत्येव । यदाकारकसूत्रैरेकवाक्यतामापन्नोयं विधिस्तदास्मादेव लुग्वचनाज् ज्ञापकादेभ्यः स्यादयः स्युः अत एव प्रत्ययलक्षणत्वेन पदत्वं भवति । न शब्देति । शब्दनिर्देशः स्वरूपपरनिर्देशः तत्राव्ययाद् विभक्तेर्लुक् न भवति । ईषद्दुःसुष्विति ज्ञापकादितिभावः । अथवा शब्दमाचक्षमाणानि शब्दानि अव्ययानि तेषां निर्देशे सति विभक्तेर्लुक् न अर्थभेदात्तथाहि चादीनामव्ययानां हि समुच्चयादयोर्थाः शब्दाभिधायिनां तु शब्दोर्थ इति अनव्ययत्वादेर्विभक्तेर्लुग्न भवतीति । ननु यथाव्ययेभ्योविभक्तेर्लुगुक्तस्तथा तत्रशालायामित्यादौ शालाशब्दसान्निधौ स्त्रीत्वयुक्तद्रव्यगतकारकशक्त्यभिधाना तत्रेत्यत्रापि आबतः स्त्रियामिति प्राप्तस्यापोऽपि लुग्विधेयइत्याशङ्क्याह ।

**कान्यलिङ्गान्यव्ययानि । अधुना लिङ्गे विशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते । आबतः स्त्रियाम् । जाया माया मेधा श्रद्धा ॥ अजादेश्चाप् वक्तव्यः * ॥ अजा एडका कोकिला बाला शूद्रा गणिका । काप्यतः ।**

अव्ययानां चेति । आदिशब्दात्संख्याकारकयोरपि न नियम इत्यर्थः । अत एव च स्त्रीत्वस्यानियतत्वादाप् न प्राप्नोतीति भावः । तथा चोक्तं महाभाष्ये—अव्ययादातो लुग्वचनानर्थक्यं लिङ्गाभावादिति । एतच्चाव्ययमित्यन्वर्थसंज्ञाविज्ञानादनुमीयते इति दर्शयितुमाथर्वणीं प्रणवविद्यास्थां श्रुतिमाह सदृशमिति । त्रिषु लिङ्गेषु स्त्रीपुंनपुंसकेषु सदृशं लिङ्गविशेषप्रतिपादनसामर्थ्याभावात् सर्वासुच विभक्तिष्विति । विभज्यते नामार्थोयाभिस्ता विभक्तयः कारकाणि तासुसदृशं, तथावचनेषु सर्वेषु अभिधेयेऽभिधानोपचारादेकत्वादिसंख्यावचनशब्देन गृह्यते । तत्र सदृशं यत्यस्मान्नव्येति न विगच्छति सत्त्वधर्मान्नगृह्णाति तत्तस्माद्व्ययमित्यर्थः । यच्छब्दरूपं नव्येति तदव्ययमिति वा गौणत्वे चाव्ययसंज्ञा नस्यादित्यपि प्रयोजनमन्वर्थसंज्ञायाः । अत्युच्चैसौअत्युच्चैस इति । ननूच्चैः शब्दस्य गणे पाठात् कथं तदन्तस्य प्रसङ्गोऽन्वर्थसंज्ञाया अव्ययसंज्ञायां तदन्तविधेरभ्युपगमार्थत्वादपि अत एव परमस्वः इत्यादौ तदन्तस्यापि संज्ञा भवति । अन्वर्थतायां तु महती संज्ञामूलमिति । श्रीजानार्द०व्याख्यायामगुरव्ययानि विरतिं सिद्धान्तरत्नावली ॥

अथ स्त्रीप्रत्ययानारब्धुकाम आह । अधुनेति । इदानीं स्त्रियामित्यधिकृत्य आबादयः प्रत्ययाःप्रारभ्यन्तइत्यर्थः । कयेत्याह लिङ्गेति । लिङ्गविशेषोऽत्र स्त्रीलिङ्गं तस्यविशेषेण ज्ञापयितुमिच्छया आबादिविधिना हि विशेषेण लिङ्गज्ञापनं भवति । अथवा लिङ्गञ्चविशेषश्च लिङ्गविशेषौ लिङ्गं च सामर्थ्यात् स्त्रीलिङ्गविशेषः सिलोपयडादिस्तयोर्विजिज्ञापयिषया आबादिनिरूपणे हि तदन्तानामापइत्यादिप्रवृत्तेर्विशेषोपि सिलोपादिः सुज्ञापितो भवति । आवतः स्त्रियामिति । अनेन हसान्तस्त्रीलिङ्गेषु व्याख्यातेन जायेत्यादिभ्योऽदन्तेभ्यः स्त्रियां वर्तमानेभ्य आबित्यर्थः । स्त्रीत्वादिसामान्यस्य च चेतनेषु स्त-

---

१ लिंगमपि नामार्थप्रत्ययानां द्योतकत्वात् अन्यथावागुपानदादिशब्देभ्यः इयं तव वागिति स्त्रीत्वबोधानापत्तेः अयमितिव्यवहारविषयत्वं पुंस्त्वमियमित्यादिव्यवहारविषयत्वं स्त्रीत्वमिदमितिव्यवहारविषयत्वं क्लीबत्वमिति विलक्षणं शास्त्रीयं स्त्रीपुंनपुंसकत्वम् अतएवखट्वादिशब्दवाच्यस्य स्तनकेशभगादिमत्त्वरूपलौकिकस्त्रीत्वाभावेपि तदवाचकादावादिप्रत्ययः ॥

**क्तान्यलिङ्गान्यव्ययानि । अधुना लिङ्गे विशेषविजिज्ञापयिषया स्त्रीप्रत्ययाः प्रस्तूयन्ते । आबतः स्त्रियाम् । जाया माया मेधा श्रद्धा ॥ अजादेश्चाप् वक्तव्यः * ॥ अजा एडका कोकिला बाला शूद्रा गणिका । क्राप्यतः ।**

अव्ययानां चेति । आदिशब्दात्संख्याकारकयोरपि न नियम इत्यर्थः । अत एव च स्त्रीत्वस्यानियतत्वादाप् न प्राप्नोतीति भावः । तथा चोक्तं महाभाष्ये—अव्ययादातो लुग्वचनानर्थक्यं लिङ्गाभावादिति । एतच्चाव्ययमित्यन्वर्थसंज्ञाविज्ञानादनुमीयते इति दर्शयितुमाथर्वणीं प्रणवविद्यास्थां श्रुतिमाह सदृशमिति । त्रिषु लिङ्गेषु स्त्रीपुंनपुंसकेषु सदृशं लिङ्गविशेषप्रतिपादनसामर्थ्याभावात् सर्वासु च विभक्तिष्विति । विभज्यते नामार्थोयाभिस्ता विभक्तयः कारकाणि तासु सदृशं, तथा वचनेषु सर्वेषु अभिधेयेऽभिधानोपचारादेकत्वादिसंख्यावचनशब्देन गृह्यते । तत्र सदृशं यत् यस्मान्नव्येति न विगच्छति सत्त्वधर्मान्नगृह्णाति तत् तस्मादव्ययमित्यर्थः । यच्छब्दरूपं नव्येति तदव्ययमिति वा गौणत्वे चाव्ययसंज्ञा नस्यादित्यपि प्रयोजनमन्वर्थसंज्ञायाः । अत्युच्चैसौ अत्युच्चैस इति । ननूच्चैः शब्दस्य गणे पाठात् कथं तदन्तस्य प्रसङ्गोऽन्वर्थसंज्ञाया अव्ययसंज्ञायां तदन्तविधेरभ्युपगमार्थत्वादपि अत एव परमस्वः इत्यादौ तदन्तस्यापि संज्ञा भवति । अन्वर्थतायां तु महती संज्ञामूलमिति । श्रीजानार्द०व्याख्यायामगुरव्ययानि विरतिं सिद्धान्तरत्नावली ॥

अथ स्त्रीप्रत्ययानारब्धुकाम आह । अधुनेति । इदानीं स्त्रियामित्यधिकृत्य आबादयः प्रत्ययाःप्रारभ्यन्तइत्यर्थः । कयेत्याह लिङ्गेति । लिङ्गविशेषोऽत्र स्त्रीलिङ्गं तस्यविशेषेण ज्ञापयितुमिच्छया आबादिविधिना हि विशेषेण लिङ्गज्ञापनं भवति । अथवा लिङ्गञ्चविशेषश्च लिङ्गविशेषौ लिङ्गं च सामर्थ्यात् स्त्रीलिङ्गविशेषः सिलोपयडादिस्तयोर्विजिज्ञापयिषया आबादिनिरूपणे हि तदन्तानामापइत्यादिप्रवृत्तेर्विशेषोपि सिलोपादिः सुज्ञापितो भवति । आबतः स्त्रियामिति । अनेन हसान्तस्त्रीलिङ्गेषु व्याख्यातेन जायेत्यादिभ्योऽदन्तेभ्यः स्त्रियां वर्तमानेभ्य आबित्यर्थः । स्त्रीत्वादिसामान्यस्य च चेतनेषु स्त-

---

१ लिंगमपि नामार्थप्रत्ययानां द्योतकत्वात् अन्यथावागुपानदादिशब्देभ्यः इयं तव वागिति स्त्रीत्वबोधानापत्तेः अयमितिव्यवहारविषयत्वं पुंस्त्वमियमित्यादिव्यवहारविषयत्वं स्त्रीत्वमिदमितिव्यवहारविषयत्वं क्लीबत्वमिति विलक्षणं शास्त्रीयं स्त्रीपुंनपुंसकत्वम् अतएवखट्वादिशब्दवाच्यस्य स्तनकेशभगादिमत्त्वरूपलौकिकस्त्रीत्वाभावेपि तदवाचकादावादिप्रत्ययः ॥

देव निश्चयेन पतन्त्यनेकेऽप्यर्थेष्विति निपातानामनेकार्थत्वात् । ऋण ईप् ॥ २०७ ॥ नकारान्तादृकारान्ताद्णन्ताच्च स्त्रियामीप्प्रत्ययो भवति । दण्डिनी ॥ ईपि राज्ञोऽल्लोपो वक्तव्यः ॥ राज्ञी शुनी कर्त्री औपगवी । यस्य लोपः ॥ २८१ ॥ इश्च अश्च यस्तस्य लोपो भवति स्वरे य-

श्रेयस्यैव श्रेयसितरा स्वार्थे तरः नह्यतिशयस्यातिशयः शक्यो वक्तुमिति ततः स्त्रीत्वादापि पाक्षिकोनेन ह्रस्वः आदिनारूपकल्पचेलड्ब्रुवगोत्रमतहतानां ग्रहणं तेन विदुषिरूपा विदुषिकल्पा इत्यादावपि पाक्षिको ह्रस्वः । ननुनौरेवनौका गौरेवगोका इत्यादावपि ह्रस्वः किं नेत्याशङ्क्याह नौकादाविति । तत्र हेतुमाह । वाग्रहणादेवेति । एवकारेण तरादौ भवतीत्यपि वाग्रहणाल्लभ्यते इति सूचितं भवति कुत एतावदतो लभ्यमित्यत आह । निश्चयेनेति । एतच्च चादिर्निपात इति सूत्रे उपपादितं ततश्च ब्राह्मणितरेत्यादौ नित्यह्रस्वः ग्रामणिपुत्रइत्यादावुत्तरपदेऽपि वा ह्रस्वः स्यादित्येवमनेन प्रयोगाऽनुसारेण सर्वोऽपि ह्रस्वविधिः सूचितो भवतीति ज्ञेयम् ॥ ऋणः । ऋकारोऽत्ररेफभूतो निर्दिष्टो न रेफो व्याख्यानात् असन्देहार्थं नात्प्राग्निर्देश्ये परनिर्देशाद्वा तत्रापि केवलस्य ऋणः प्रयोगाभावात्सामर्थ्यात्तदन्तग्रहणमिति मत्वाह नकारान्तादित्यादिपकार ईबिति विशेषणार्थः । दण्डिनीति । दण्डोस्यास्तीति मान्तोपधादितीन्नन्तत्वेननान्तत्वादीप् हसेप इति सिलोपः । ईबिति । वक्तव्यो व्याख्येयः । तथाहि अल्लोपस्स्वरइत्यत्र वादीपोरित्यत ईबनुवर्तते तेनैवाल्लोप इत्यर्थः । राज्ञीति । नान्तत्वादीपि अल्लोपे चुत्वे जञोर्ज्ञः । शुनीति । श्वादेरिति वस्योत्वम् । कर्त्रीति । ऋदन्तत्वादीपि ऋरम् । औपगवीति । उपगोरपत्यं स्त्रीत्यणि आदिवृद्धावुकारस्यावि अणन्तत्वादीप् यस्य अदन्तनिर्देशान्न पकारस्य ग्रहणमत आह इश्चेति । निर्देशस्य सौत्रत्वादकारस्य परनिपातः । ननु ईश्च आश्च यं तस्येति किं न स्यादुच्यते यदयं टिसंज्ञायामन्त्य इत्याह तज्ज्ञापयति ह्रस्वावर्णस्यात्र ग्रहणमिति अन्यथान्ते भवोन्त्य इत्यत्रादन्तशब्दादेर्लोपो न स्यात् तत्साहचर्याच्च ह्रस्व एवेवर्णो गृह्यते न दीर्घः नापि पकारः वोव्यः स्वरे इत्यतोत्र यस्वर इत्यनुवर्तते इत्याह स्वरे यकारे चेति।ननु देवा इत्यत्राप्यल्लो-

**कारे च परोष्ट्वितः ❀ २२८ ॥ षकारटकारउकारऋकारा-नुबंधात्स्त्रियामीप्प्रत्ययो भवति । वराकी कुरुचरी गोमती पचन्ती पठन्ती ॥ नदादेः ॥ २८८४ ॥ नदादेर्ग-णात्स्त्रियामीप्प्रत्ययो भवति । नदी गौरी । इन्द्रादेरा-नीप् ❀ ३०१॥ इन्द्राणी । भवानी रुद्राणी । पुंयोगे च ❀ ३०३ ॥ शूद्री गणकी ॥ जातेरयोपधात् ❀ ३०० ॥ जातिवा-**

पः स्यात् न यदयं उभये स्वरा इत्याह तज्ज्ञापयतीति नेदं विभक्तिस्वरे प्रवर्तते इति अनेनौपगवीत्यत्राल्लोप इति भावः । ननु च स्वस्रादिभ्योपि ऋवर्णान्तत्वा-दीप् स्यात् उच्यते यदयं स्तुरारिति सकारसंबन्धिन ऋकारस्यारं शास्ति तज्ज्ञा-पयति नात्रेप् भवतीति अन्यथेपि परे रेफादेशे कृते ऋकार एवात्र नेति कस्यार् स्यात् न चात्र सकारसंबन्धी ऋकारोस्ति ननु चायमस्ति स्वसारमतिक्रान्तोतिस्वसा अतिस्वसारौ अतिस्वसार इत्यादि ॥ एवं तर्हि गर्गनडात्रिस्त्रीपितृष्वस्रादेरिति निर्देशाज्ज्ञापकात् त्रग ईबितीबनित्य इति स च प्रयोगानुसारेण पञ्चब्राह्मण इत्यादौ नान्तात्तथास्वसृतिसृचतसृननान्ददुहितृयातृमातृभ्य ऋदन्तेभ्यस्तथा दण्डः प्रहरण-मस्यांक्रीडायां दाण्डेत्यादौ अण्णन्तादपि क्वचिन्न भवति । तथाह भगवान् पाणिनिः न षट्स्वस्रादिभ्यइति । ष्ट्वितः । अत्रषट्उ ऋ एषां कृतद्वन्द्वानामिच्छब्देन बहुव्री-हीनामाऽन्यपदार्थः इच्छब्दश्चषादिभिः प्रत्येकं संबध्यते तेन षितः टितः वितः रि-तश्चनाम्न इत्यर्थः स्यादित्यभिप्रेत्योदाहरति वराकीति । षाकोकण इति वृञः षाके गुणोऽर् अत्र षित्त्वादीप् यस्येत्यलोपः कुरुचरीति । अटाविति । चरेष्टस्तस्य टित्त्वा-दीप् । गोमतीति । गावः सन्त्यस्या इत्यस्यर्थो मतुस्तस्योदित्त्वादीप् उदित्त्वेपि उखास्रत् पर्णध्वदित्यादौ धातोरीब् न भवति अञ्चतेस्तु प्राचीत्यादौ यथा भवति तथा चेर्नुम्विधौ प्रत्यपादि । पचतीति । पचेः शतुर्ऋदित्त्वादीप् । अप्ययोरिति शतु-र्नुम् । एवं पठन्तीति पठेः । नदा । नदीति । नदतेः पचादेरः ईप् अल्लोपः । गौरीति गौरशब्दादीप् इन्द्रादेरिति । पुंयोगे वक्तव्य इति शेषः । इन्द्राणी भवानीति । इन्द्रभवाभ्यामानीप् अल्लोपः । आद्येणत्वम् । आदिना शर्वरुद्रमृडेभ्यःमहत्त्वे हिमा-

चिनोऽयकारोपधादकारान्तात्स्त्रियामीप्प्रत्ययो भवति । महिषी हंसी कुक्कुटी ब्राह्मणी । अयकारोपधग्रहणात् क्षत्रिया ॥ प्रथमवयोवाचिनोऽत ईब्वक्तव्यः * ॥ कुमारी किशोरी कलभी प्रथमवयोग्रहणात् वृद्धा । अद्ग्रह-

रण्ये दोषेयवान् लिपौ यवनान्मातुलाचार्यक्षत्रियाः पाक्षिकाः आचार्यानी तु णत्वाभावार्थं पत्न्यादिषु द्रष्टव्यः । ननुचेन्द्रादिभ्योऽदन्तेभ्योऽनीप्यपिसवर्णदीर्घेणेन्द्राणीत्यादिस्यादेवेति किमाकारेण न च वाच्यमलोपः स्यादिति अनीपोऽदुपदेशसामर्थ्यात् एवं तर्हि इन्द्रं करोति इन्द्रयति ततःक्विप् इन्द्रस्त्री इन्द्राणीत्यत्र हसान्ताल्लुवणार्थमाकारोपदेशः । पुंयोगे चेति । एतच्च पुंशब्दादिति सूत्रादत्र लभ्यते तस्य चायमर्थः पुंवाचकः शब्दः पुंशब्दस्तस्मात् संप्रति स्त्रियांवर्तमानादीप्स्यादिति । शूद्रीति । शूद्रस्य स्त्रीत्यर्थः शूद्रशब्दोयंपुंवाचकस्ततसंबन्धात्स्त्रियमाहेतीब्जातः एवं गणक्यपि।यदा तु शूद्रजातिमाचष्टे तदाजातित्वाच्छूद्रेति स्यात् । जातेः । अयोपधादित्यस्यार्थमाह । अयकारोपधादिति । न विद्यतेयकार उपधा यस्य तस्मादित्यर्थः । अकारान्तादिति । आबत इत्यतोऽत इत्यनुवृत्तेरित्यर्थः । महिषीत्यादि । महिषादिजातिः स्त्रीत्यर्थः जातेः किं मुंडा । क्षत्रियेति । योपधादीबभावे आबत इत्याप् योपधत्वेपि गवयहयमुकयमत्स्यमनुष्येभ्यो नदादित्वादीपि गवयीत्यादि ज्ञेयमक्षिकेत्यादिभ्यस्तु स्त्रियामेव नियतेभ्यो जातित्वेऽपीप् न अजादिषु पाठसामर्थ्यात् जातिलक्षणं तूक्तं महाभाष्ये, प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः । असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुरिति । अस्यायमर्थः या सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यामाविर्भावतिरोभावौ प्राप्नोति यावत् द्रव्यभाविनीत्यर्थः । अत एव वृद्धस्थविरेत्यत्रेब्न भवति । अयावद्द्रव्यभावित्वेनवृद्धत्वादेरजातित्वात्गुणैश्चयुगपद्द्रव्येणसंबध्यतेयथा निर्गुणं न भवति तथा जातिरहितमपीत्यर्थः बह्वर्थामिति । अर्थशब्दो विषयवाची बहुविषयांबहुव्यक्तिव्यापिनीमित्यर्थः असर्वलिङ्गामितितु ब्राह्मणी वृषलीत्याद्यर्थं लक्षणान्तरं न च प्राच्यलक्षणसंकोचकमिति तटादेः सर्वलिङ्गत्वेपि जातित्वं भवत्येव । प्रथमेति । इह तावदुपचयापचयलक्षणे द्वे वयसी तथोक्तम् । वर्द्धतां यावदनेन वर्द्धितव्यं पश्चादुपायेन युज्यतामिति । तत्र यन्नामश्रवण-

णात् शिशुः । स्वाङ्गाद्वा ॥ ३०२ ॥ स्वाङ्गवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । सुमुखी मृगाक्षी तन्वङ्गी । वाग्रहणात् पद्मवदनेत्यादौ न भवति ॥ कृदिकारादक्तेरीड्वा वक्तव्यः ॥ अङ्गुलिः अङ्गुली । आ-

मात्रेण प्रथमं वयो वक्ति न प्रकरणादिना उत्तानशयाद्विवर्षा इत्यादिवत् । तस्मादुदन्तादीब्वक्तव्यइत्यर्थः । कुमारीत्यादिप्रथमवयोवचना एते चिरंटीवधूटीत्याद्यप्यत्र ज्ञेयम् । अत्र मते यौवनस्याऽपि प्रथमवयोरूपत्वात् । वृद्धेत्यन्तिमवयोवतीत्यर्थः । शिशुरिति । उदन्तोयं नादन्तः । अजादित्वात्कन्या । स्वाङ्गाद्वा । अत्र स्वमङ्गं स्वाङ्गमित्युक्ते सुमुखा शालेत्यत्रापि मुखस्य शालाङ्गत्वादीप्प्राप्नोति दीर्घकेशी रथ्येत्यत्रच न प्राप्नोति केशानां रथ्याङ्गत्वाभावादित्यव्याप्त्यतिव्याप्त्यभावायस्वाङ्गपरिभाषितं महाभाष्ये–अद्रवन्मूर्तिमत्स्वाङ्गं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च तस्य चेत्तत्तथा युतम् । अस्यार्थः प्राणिनि तिष्ठतीति प्राणिस्थं स्वाङ्गं भवति । एतेन सुमुखा शालेति निरस्येत अद्रवदित्यनेन बहुस्वेदेति । भवतीति भवंततोऽन्यदभवं स्वेदस्तु भवरूप इति मूर्तिमदित्यनेन बहुज्ञानेति मूर्तिर्हि असर्वगतद्रव्यपरिमाणं स्पर्शवद् द्रव्यपरिमाणं वा तद्वज्ज्ञानंतु न तथाअविकारजमित्यनेन बहुशोफेति विकारो हि धातुवैषम्यं तज्जं शोफस्तु विकारजः । अतत्स्थमिति । अप्राणिस्थमपिप्राणिनिदृष्टं च स्वाङ्गंस्यादनेन दीर्घकेशीरथ्येत्यत्राव्याप्तिः परिहृता, केशानामिदानीमप्राणिस्थत्वेऽपि प्राणिनिदृष्टत्वात् तस्यचेदितितस्याप्राणिनस्तन्मुखादि चेत्तथायुतं भवति यथा प्राणिनस्तदप्राणिस्थमपि स्वाङ्गं स्यादित्यर्थः । एतदपि दीर्घमुखी प्रतिमेत्यत्र संज्ञार्थप्रतिमायामुखस्य प्राणिनोमुखस्येवस्थितत्वात् । सुमुखीति । शोभनं मुखमस्याः सास्तीत्यर्थः । शिखेत्युदाहर्तव्येस्वाङ्गान्तोदाहरणं तु वाशब्दात् सूत्रे गुणीभूतस्वाङ्गग्रहणस्येष्टत्वात् दर्शितम् । मृगाक्षीति । इदमत्राऽनुदाहरणं तथाहि मृगस्याऽक्षिणी यस्या इति बहुव्रीहौ मध्यपदलोपे टाडका इति टे ग्रस्येतिलोपे टित्त्वात् ष्ट्रित इत्यनेनेप् भवतीति तत्रोदाहर्तव्यमिदं तन्वङ्गीतीदमपि नदादेरित्यत्रोदाहर्तव्यम् । अङ्गगात्रकण्ठनासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाणांस्वाङ्गानामपि नदादिषु पाक्षिकपाठात् वाग्रहणादिति तस्यनिपातत्वेनानेकार्थत्वात् । पद्मवदनेत्यादौ बहुस्वरेभ्यः क्रोडादिभ्यश्च स्वाङ्गेभ्योपि नित्यमीप् न स्यादि-

जी आजिः । धूली धूलिः । अक्तेरिति विशेषणात् कृतिः धृतिः॥ऐ च मन्वादेः ❀ ३०४॥ मन्वादेर्गणात् स्त्रियामी-प्रत्ययो भवति ऐकारादेशश्च । मनायी वृषाकपायी । पत्न्यादयः ❀ ३०५ ॥ पत्नी । अन्तर्वत्नी । सखी । अ-

स्याशयः अत्र संयोगोपधस्वाङ्गानि गुल्फादीनि क्रोडादिषु ज्ञेयानि । कृदिकारादिति। कृत इकारः कृदिकारस्तस्मादीन्न स्यात् न तु क्तिप्रत्ययान्तादिति वक्तव्यार्थः । अङ्गुलीति । ध्वादेरङ्गुलिः इत्यङ्गेरङ्गुलिः कृत् । आजीति । आजेरौणादिके इञि वृद्धिः। धूलीति । ध्वादेरुलिः सर्वत्रात्र पक्षे ईप् । कृतिः भूतिरिति । क्तिरिति स्त्रियां क्तिः कित इति नेट् कित्त्वान्न गुणः । ऐच । ऐकारादेशश्चेति । मन्वादेरिति । आदेशापेक्षयाविपरिणतया षष्ठ्यन्तस्येति शेषः । मनायीति । मनोरयि । उतश्चै । ऐआय् मनोः स्त्रीत्यर्थः । मनावीत्यपिपत्न्यादित्वात् ज्ञेयम् । पत्न्या । पत्नी आदिर्येषां ते तथोक्ताः बहुवचननिर्देशस्तु गणानन्त्यसूचनार्थः । अत एव वृत्तौ दिङ्मात्रं दर्शयितुं कियतो निरूपयति पत्नीत्यादि । निपात्यन्त इति । विशिष्टार्थकार्याः ईबन्ता अनी-बन्ताश्चाऽत्र गणे सिद्धा एव पठ्यन्तइत्यर्थः । तत्र पत्नीशब्दो यज्ञसंयोगे पत्युर्नान्तता निपात्यते । अन्तर्वत्नीति । अत्रान्तःशब्दस्याधिकरणप्रधानत्वादस्तिसामानाधिकरण्याभावात् प्राप्तोवतुर्नुक्च गर्भयोगे निपात्यते ईप् तु नान्तत्वात्सिद्ध एव गर्भयोगादन्यत्र तु अन्तरस्यां शालायां घट इति वाक्यमेव न तु वतुः । तथोक्तं पदमञ्जर्यामिह च न भवत्यन्तरस्यां शालायां विद्यत इति अस्मिन् विषये एवंविधिवाक्यमेव भवति न तु मतुपादीत्यर्थः । एवं पतिवत्नीत्यत्र भर्तृयोगे च तुमुकौ अन्यत्र पतिमतीत्युदित्त्वात् ऋन्नित इतीप् । सखी अशिश्वीति । अत्रानदन्तादपि ईप् । युवतिरिति । तिप्रत्ययोत्र युवन्शब्दान्निपात्यते नलोपः सिद्ध एव । इत्यादीति । अविहितलक्षण ईनादिरत्र ज्ञेय इत्यर्थः । विस्तरभयादिहास्माभिरपि प्रतिशब्दं नोक्तः । दारशब्द इति । शब्दशक्तिस्वाभाव्यादिति शेषः । नियतपुंलिङ्गत्वादेव च स्त्रीवाचकत्वेऽपि स्त्रीप्रत्ययोऽस्मान्न भवतीति प्रदर्शनार्थमत्रोक्तः अन्यथादन्तपुंलिङ्गेषु वक्तव्यः स्यात् । वौ । वा ओरितिच्छेदः न त्वौरिति विच्छिद्य गुणादौ प्रत्ययो भवतीति युक्तगुणस्य प्राङ्निर्देशात् सतो हि कार्यिणः कार्येण भाव्यमिति ओरित्यपि उवर्णस्यग्रहणं नत्वोकारस्य प्रकृत्याऽगुणस्यादन्तत्वाभावात्त

शिश्वी । युवती इत्यादयो निपात्यन्ते दारशब्दो नित्यं बहुवचनान्तः पुंलिङ्गः । दाराः दारान् दारैः दारेभ्यः दाराणाम् दारेषु । वोर्गुणात् ॥ ३०६ ॥ उकारान्ताद् गुणवाचिनो वा स्त्रियामीप्प्रत्ययो भवति । पट्वी । पटुः । मृद्वी । मृदुः । तन्वी तनुः । उतऊः ॥ ३०७ ॥ उकारान्तात्स्त्रियामूप्रत्ययो भवति पङ्गूः वामोरूः । करभोरूः एभ्यो

त्रापि तदन्तस्य ग्रहणं न केवलस्य उमात्रस्य गुणस्याभावात् ओर्गुणाच्चेति त्वभिप्रेते ओर्गुणादित्येव निर्दिशेत् गुणशब्दोपि गुणवचनपट्वादिपरः न तु स्वरूपपरः स्वरूपस्याऽनुदन्तत्वात्तत्रापि गुणवचनपरो न गुणमात्रवाचिपरः गुणैकार्थानां स्त्रियामप्रवृत्तेः । तथोक्तममरेण—गुणेशुक्लादयः पुंसीति । एतदेवालोच्याह । उकारान्तादित्यादिसूत्रेसामान्यनिर्देशेऽपिदीर्घान्तेरगुणवचनोनास्तीति मत्वोवर्णान्तादितिनोक्तं पटुमिच्छति पटयति ये इतिदीर्घः पटूयतीति पटूः क्विप्प्रत्ययस्तल्लोपः यत इति यलोपः अयं तु संप्रति क्रियावचन इति नात्रास्य प्रसङ्गःपट्वीत्यादि । गुणवतीत्यर्थः । सर्वत्र पक्षे ईप् वाग्रहणात्संयोगोपधात् खरोश्चन पांडुः खरुः । गुणलक्षणं तूक्तं महाभाष्ये—उपैत्यन्यज्जहात्यन्यत् दृष्टोद्रव्यांतरेष्वपि । वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः इति सुगमम् । उतः । ननु ओरिति वर्तमाने उतइतिकिमर्थं न च वाच्यमूदन्तान्माभूदिति सत्यसति वाविशेषाभावात् । न च तथा प्रक्रियागौरवमाशङ्क्यं सूत्रगौरवात्तद्गौरवस्यज्यायस्त्वात् । एवं तर्हि तदनुवृत्तौ तद्विशेष्यस्य तत्संबद्धस्यगुणस्याप्यनुवृत्तिःस्यादिति पुनरित्युक्तं यद्युतइत्युच्यते उविधावपि द्वयोरुवर्णयोः सहदीर्घेण पङ्गूरितिदीर्घश्रुतेः सिद्धत्वात् उत उरित्येवास्तु सूत्रे एवमपि दीर्घान्तत्वात्पङ्गुरित्यत्र इति नित्यं द्वित्वं न भविष्यति । किं तु दीर्घादपीत्यपिशब्दात्पदान्ताद्दीर्घाच्छस्य वा द्वित्वमिति विकल्प एव स्यादिति सिद्धमिष्टमेवं तर्हि ब्रह्मबन्धूरित्यत्रान्यार्थह्रस्वो मा भूत् टाडका इति कश्च बहुव्रीहौ मा भूदिति दीर्घविधिः दीर्घस्य हि उकारद्वयात्मकत्वेन द्वितीयोकारस्यतद्बाधनार्थत्वात् पङ्गूरिति । पङ्गोरुप्रत्यये सहदीर्घः । वामोरूरिति । वामौ ऊरू यस्याः । करभोरूरिति । करभवदूरू यस्या इत्यर्थः । इह च वोर्गुण इत्यतो निपातत्वानुवृत्ते रज्जुः हनुः

नामत्वात्स्यादयः आबन्तादाप इति सिलोपः ईबन्ता-द्ध्रस्वः सेर्लोपः पूर्ववद्बोध्यः ॥ इति स्त्रीप्रत्ययाः ॥ ❀

अथ विभक्त्यर्थो निरूप्यते ॥ लिङ्गार्थे प्रथमा ❀ २५८ ॥ धातुप्रत्ययाद्यतिरिक्तमर्थवच्छब्दरूपं लिङ्गं तस्यैवार्थे सन्मात्रे प्रथमा विभक्तिर्भवति लिङ्गादयोपि प्रथमार्था इ-ति केचित । तत्सद्ब्रह्म ॥ रविरिव राजते राजा । रोषा-

कृकवाकुरित्यादावूर्न भवति । एभ्योनामत्वादिति । आबाद्यन्तानामप्यर्थवत्त्वादधातु-त्वादविभक्तित्वाच्च । विभक्तिर्नामेति नामसंज्ञायां तस्मात्सिऔ जसितिस्यादय इत्य-र्थः । आबन्तादिति । सिलोपइत्युपलक्षणं घेरित्वमौ ईत्वं टौसोरेत्वमित्याद्यपि द्रष्ट-व्यम् एवमीबन्तादपि धौह्रस्वत्वं ङितामडित्यादि । पूर्ववदिति । तत्राबन्तानां गङ्गा-वत् ईबन्तानां तु नदीवत् ऊप्रत्ययान्तानामपि वधूवद्रूपाणि ज्ञातव्यानीत्यर्थः इति ॥ श्रीजा० सारस्वतव्याकृतौ योषित्प्रत्ययसामियं सुविशदासिद्धान्तरत्नावली ॥ इति स्त्रीप्रत्ययाः ॥

अथेति । विभक्तीनामर्थो लिङ्गार्थादिः स निरूप्यत इत्यर्थः । लिङ्गार्थे । यद्यत्र लिङ्गं स्त्रीपुंनपुंसकमुच्यते तदा स्त्रियां विशिष्टत्वात्परत्वाच्चाबादयः प्रथमाबाधका इति । तत्र प्रथमार्थं सिलोपविधानं ज्ञापकमाश्रयणीयं स्यात् । अलिङ्गत्वाच्चाव्ययेभ्यः प्रथमा न स्यादेव अर्थग्रहणं चात्राधिकं स्यात् तस्माल्लिङ्गशब्दः पूर्वाचार्यसंज्ञा अस्य शास्त्रस्य पारम्पर्यप्रतिपादनेन प्रामाण्यप्रतिपादनार्थमाश्रितेत्याह धातुप्रत्ययेति । एतच्चाविभक्तिनामेत्यस्यार्थेनैव कृतार्थं लिङ्गनाम्नोरर्थाभेदात् । तस्यैवार्थइति । अस्यैव विवरणं सन्मात्रइति । योर्थः सन्नेव केवलं न जात्यादिरूपो न लिङ्गसं-ख्याकारकशक्तियोगी यथाव्ययार्थः केवलमस्तीति शक्यो वक्तुं न पुनरीदृशस्तादृश-स्तथाविधइत्यर्थः । ननु चैवमुच्चैरित्यादावेव प्रथमा स्यान्न तु कुमारी वृक्षः कुंडं द्रोणः खारी आढकमेको द्वौ बहव इत्यादौ लिङ्गपरिमाणवचनसंबोधनानां लिङ्गा-र्थादधिकत्वात् एवं तर्हि द्वितीयोत्रार्थशब्द आवृत्त्या निर्दिश्यते । तेनात्राधिके-ऽर्थे प्रथमा सिद्ध्यति अत एव च गौर्वाहीकइत्यादावपि अथवा यदयमामन्त्रणे सिद्धिरित्याह तज्ज्ञापयतिऽविशिष्टेप्यर्थे प्रथमास्तीति अन्यथामन्त्रणे सेरभावा-द्विधानमनर्थकं स्यात् एतदेवाधिकरोति लिङ्गादयोपीति । तथा च पाणिनिः ।

१ सूत्रमते तु कर्तृकर्माद्यर्थकप्रत्ययेन कर्त्रादेरुक्तत्वात् प्रथमायाः प्रातिपदिकार्थ एवार्थः तस्य चाख्यातार्थकर्त्रादिनाभेदान्वयेन प्रथमार्थस्यकारकत्वम् अतएवाख्यातार्थद्वारकक्रिया-न्वयात् तदर्थस्य क्रियाजनकत्वादस्याःकारकविभक्तित्वेनभाष्ये व्यवहारः चैत्रोभवतीत्यत्र एकत्वावच्छिन्नचैत्राभिन्नकर्तृकं भवनमितिबोधः आख्यातकृदादिना कर्त्रादेरभिधानेऽपि प्रथ-मयानुभूतकर्तृत्वादिशक्तिः प्रतिपाद्यते इतितात्पर्यम् । कर्माख्याने तु चैत्रेण ग्रामोगम्यते इत्यत्र चैत्रकर्तृकव्यापारजन्य एकत्वावच्छिन्नग्रामाभिन्नकर्मनिष्ठसंयोगः इति बोधः ।

**त्कुमारी रोरूयते बोभुज्यते भुवं भूपालः प्रागास्तौ रामलक्ष्मणौ ॥ सन्ति सन्तः कियन्तः । आमन्त्रणे च ॥ मां समुद्धर गोविंद प्रसीद परमेश्वर । कुमारौ स्वैरमासाथां क्षमध्वं भोस्तपस्विनः । भोभगोअघोसः ॥ २५८ ॥**

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा संबोधनेचेति । अथवा सन्मात्र इत्युपलक्षणम् अन्वयव्यातिरेकाभ्यां यस्य योऽर्थः प्रतीयते समर्थ लिङ्गं न व्यभिचरति येन विना लिङ्गस्याप्रयोगः स सर्वो लिङ्गार्थः । तेन सत्ता गोत्वं शौक्ल्यं शुक्लो गुणः पाचकः डित्थइत्यादावपि सर्वत्र प्रथमं भवति तत्र षष्ठी तु संबन्धस्याविवक्षितत्वात् । पराऽपि न प्रथमा बाधते । अत्र पक्षे लिङ्गादयोऽपीत्यस्यायमर्थः प्रथमं नाम अर्थतः प्राथम्यात् प्रथमस्य अर्थाः प्रथमार्थाः नामार्था एवं लिङ्गपरिमाणादय इति लिङ्गार्थपदेनैव तेष्वऽपि प्रथमायाः सिद्धत्वात् नते पृथकूग्राह्याइति केचिदस्तत्संमत्या व्याचक्षते इति । तत्सद्ब्रह्मेति । अद्वितीयानन्दचैतन्यं ब्रह्म अविद्याशबलं सत् उभयत्रलिङ्गार्थे प्रथमातदिदंविशेषणं प्रसिद्धार्थे वेदान्तेषु प्रसिद्धमित्यर्थः । अथवा ब्रह्मेति लिङ्गार्थे प्रथमोदाहरणं ब्रह्मविशेषणं सत्तायोगि नित्यमिति यावत् तदिति प्राग्वत् अथवा सद्ब्रह्मेतिपाठः सत् सत्तायोगि । तदित्याह ब्रह्मेति तस्य कदाचिदपि विनाशाभावादिति भावः । अत्र सदित्येव लिङ्गार्थस्योदाहरणं रविरिवेतिराजेति पुंलिङ्गस्योदाहरणं कुमारीति स्त्रीलिङ्गस्य एवं नपुंसकस्यापि ज्ञेयम् । रोरूयत इति । रौतेः शब्दार्थाद्यङि द्वित्वे यङीति पूर्वस्य गुणः अतिशयेन रौतीत्यर्थः । भूपाल इति । वक्ष्यमाणस्यान्योक्ते प्रथमेत्यस्योदाहरणं प्रथमाप्रसङ्गादत्र वैशद्यार्थं पृथक् दर्शितम् । आख्यातेन भूपालस्य कर्तुरुक्तत्वात् अतएव तत्रोक्तकर्मण एव दर्शयिष्यति बोभुज्यत इति तु भुजेर्यङि अतिशयेन भुनक्तीत्यर्थः । रामलक्ष्मणाविति समासे द्विवचनस्य सन्तः इति कृति जसः अत्र हि अस्तेः शतरि अलोपे जसि नुम् कियन्तइति तद्धिते जसः । किं परिमाणमेषामित्यर्थप्रक्रिया तु सर्वत्रात्र प्राग्वत् । आमन्त्रणे चेति । अयं च यथाआमन्त्रणे सिद्धिरिति सूत्रस्यैव एकदेशस्तथा तत्रैव प्रत्यपादि । गोविंदेति । आमन्त्रणे सेर्द्धित्वे लोपः एवं परमेश्वरेत्यत्रापि । कुमाराविति । संबोधनेऔ । तपस्विन इति । जस् इदमुदाहरणद्वयं तु संबोधने सर्वापि प्रथमा स्यादिति सूचनादितिसूचनाय दर्शितम् । भोस्तपस्विन इति

एते शब्दा निपात्यन्ते धिविषये । क्षमस्व भोद्गुराराध्य भगोस्तुभ्यं नमोऽस्तुते । अधीष्व भो महाप्राज्ञ घातयाघोः स्वघस्मरम् ॥ ३ ॥ शेषाः कार्य्ये कर्त्तृसाधनयोर्दानपात्रे विश्लेषावधौ संबन्धआधारभावयोः ॥ २६७ ॥ शेषा विभक्तयो द्वितीयाद्या एष्वर्थेषु भवन्ति कार्य्ये कर्म्मका-

तु भोःशब्दोऽव्ययं चादिषु संबोधनार्थे द्रष्टव्यः भवदर्थस्यैकत्वविषयत्वात् तथोक्तममरेण । अथ संबोधनार्थकाः स्युः प्याट्प्याडंगेहेहैभोइति । महाभाष्येपि भो ब्राह्मणा इत्याशंक्योक्तमव्ययमेव भोः शब्दः नैषा भवतः प्रकृतिरिति । भोभगो एते शब्दा इति । भवद्भगवदघवतामर्थे सांताडोदुपधाधिसहिताः समुदायानिपात्यन्त इत्यर्थः । तेन भवदादीनामप्यत्र प्रयोगो भवतीति सूचितम् । धिविषय इति अधिकारात् संबोधनैकवचनविषय इत्यर्थः । उदाहरति क्षमस्वेति । भो इति । हे भवन्नित्यर्थः । अत्र भोस् इति विसर्गलोपः । भगोइति । हेभगवन्नित्यर्थः । अस्तुते इति । संबोधनान्तविशेषणं नास्ति स्तुतिगुणकथनं यत्र अवाग्विषयानंतगुणत्वात् गुणातीतत्वाद्वा नास्ति स्तुत् यत्रेति वा चतुर्थ्यंतं विशेषणम् । अघो इति । अघवन्नित्यर्थः । शेषंसुगमम् । इति प्रथमा ॥ शेषाः । शेषशब्दोयमुपयुक्तादन्यवद्भुक्तप्रथमातो पराद्वितीयाद्या विभक्तीराहेत्याह शेषाविभक्तयोद्वितीयाद्या इति । एष्वर्थेष्विति । क्रमेणेतिशेषः । तत्र कार्येद्वितीया कर्तृसाधनयोस्तृतीया दानपात्रे चतुर्थी विश्लेषावधौ पञ्चमी संबन्धे षष्ठी आधारभावयोः सप्तमीत्यर्थः । तत्रैषामर्थान् क्रमेण विवक्षुस्तावत्कार्यशब्दार्थमाह । कार्यंकर्मकारक इति । क्रियते यत्तत्कार्यमितिव्युपत्तेरिति भावः । यद्यत्र करणार्थः करोतिः स्यात्कटं करोतीत्यादावेवकार्यत्वं स्यात्कटादेः क्रियमाणत्वात् नादित्यं पश्यतीत्यादौ तदत्राप्यर्थः करोतिः तत्रासत्यपि कारकइत्यधिकारे कारकक्रिया युक्तइति ज्ञापकादुपस्थितस्य कर्मादीनां विशेषणस्य आधारत्वे क्रियानिमित्तत्वात् कारकक्रियायाश्च प्रधानकर्तृकत्वात् कर्त्राक्रियया व्याप्यते तत्कार्यमित्यर्थे माषेष्वश्वं बध्नातीत्यत्र माषाणां कर्तुरनीप्सितत्वादाधारत्वेन विवक्षितत्वादकार्यत्वान्न द्वितीया ज्ञापकत्वं चास्यतत्रैववक्ष्यामः तच्चकार्यं त्रिधेत्याह उत्पाद्यइत्यादि । तत्रोत्पाद्यं नामयदसदुत्पद्यते उत्पत्त्यावासदेव प्रकाश्यते यथा

१ कार्यत्वं तु पाणिनीयानुशासनशासितत्वं नक्रियाजन्यफलशालित्वं तदंगीकारे चैत्रोग्राममगच्छतीत्यादौ चैत्रस्यापि कर्मतापत्तिः क्रियाजन्यसंयोगस्य उभयाश्रयत्वात् अस्मन्मते तु परस्याकर्तृसंज्ञयाकर्मसंज्ञाया बाधनात् विभक्त्युत्पत्तौ संज्ञाया एव नियामकत्वात् ।

**रके उत्पाद्ये आप्ये संस्कार्ये विकार्ये च द्वितीया विभक्ति-र्भवति ॥ कटं करोति कारूको रूपं पश्यति चाक्षुषः । रा-ज्यं प्राप्नोति धर्म्मिष्ठः सोमं सुनोति सोमपाः ॥ ४ ॥ अ-भिसर्व्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु । द्वितीया-**

कटं करोति कारूकइति आप्यंतु यत्र प्रत्यक्षानुमानाभ्यां क्रियाजन्यम् । कश्चिदु-तिशयो न दृश्यते यथा रूपंपश्यति चाक्षुष इति विकार्यमपि यत्र लब्धसत्ताकमे-वावस्थान्तरमापद्यते यथा सोमं सुनोति सोमपा इति । तथोक्तं भर्तृहरिणा—यदास-ज्जायते सद्वाजन्मनासत्प्रकाश्यते । तन्निर्वर्त्यं विकार्यंतुकर्मद्वेधाव्यवस्थितम् ॥ १ ॥ प्रकृत्युच्छेदसंभूतं किंचित्काष्ठादिभस्मवत् । किंचिद्गुणांतरोत्पत्त्यासुवर्णादिविका-रवत् ॥ २ ॥ क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्रा-प्यमिति कथ्यते ॥ ३ ॥ इति । तथा परेपिचत्वारः कर्मभेदाः द्वेष्यं यथा विषं भंक्ते । उदासीनंयथा ग्रामं गच्छन् तृणं स्पृशतीति तथादुह्यादीनामेव प्रयोगे गांदो-ग्धिपयइत्यादौ पयःप्रभृतिद्वितीयं यच्चदिविप्रभृतेः प्रयोगे करणाद्यविवक्षायामक्षान् दीव्यतीत्यादौ विवक्षितं करणविवक्षायां त्वक्षैर्दीव्यतीत्येवतदेवं सप्तविधं कर्मसर्व-स्यापि कर्त्राक्रियया व्याप्यमानत्वात् । तथोक्तम् । निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधामतम् । तत्रेप्सिततमं कर्म चतुर्द्धाऽन्यत्तुकीर्तितम् ॥ १ ॥ औदासीन्येन यत्प्राप्यं यच्चकर्तुरभीप्सितम् । संज्ञांतरेणनाख्यातं यद्यच्चाप्यन्यपूर्वकमिति ॥ २ ॥ कटं करोतीत्यादि । ननु कर्तव्यश्चेन्नकटःकटश्चेन्न कर्तव्यइत्यनुपपन्नं कटं करोतीति नैष दोषः । तथाविधं वस्तु करोति यस्य कृतस्य कटइति संज्ञास्यादित्यर्थाश्रयणात् एवमोदनंपचतीत्यादावपि ज्ञेयम् । रूपं पश्यतीति । नह्यत्र दर्शनक्रियया रूपे कश्चिदतिशयो जन्यते प्राकट्यं जन्यतइति चेत् प्रतिपत्तृव्यतिरिक्तानां न जन्यत इति मूकीभावः राज्यं प्राप्नोतीत्यपि आप्यस्योदाहरणं स्पष्टम् । सोमं सुनोतीति । सोमोयज्ञीय ओषधिविशेषः तंगुणान्तराधानेन व्यपदेशा-न्तरनिमित्तं करोतीत्यर्थः । अत्र सर्वत्रापिकार्येभ्यो द्वितीयायां प्रक्रिया पूर्व-वज्ज्ञेया । अभिसर्वतसोरिति । अभिसर्वयोस्तसन्तयोः प्रयोगेद्वितीया कार्येत्य-न्वयः । तथाधिगित्यस्य योगेऽपि धिगित्यविभक्तिको निर्देशः नत्वव्ययाद्विभक्ते-रिति लुप्तविभक्तिकः धिगुपपदत्वेनानव्ययत्वात्तथाम्रेडितान्तेषु कृतद्विर्वचनेषु पर्य्यादिषु उपरि अधिअधस्सु योगे द्वितीया कार्य्या तथा ततोऽन्येष्वपि उभ-

म्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥ ५ ॥ अभितो ग्रामं नदी वहति सर्वतो ग्रामं धिक् देवदत्तम् उपर्य्युपरि ग्रामम् । अधोऽधो नगरम् अध्यधि ग्रामम् । समया ग्रामम् निकषा ग्रामम् । कालाध्वनोर्नैरंतर्ये * ॥ मासमधीते । क्रोशं पर्व्वतः । क्रियाविशेषणे क्लीबत्वमेकव-

र्वतःपरतःसमयानिकषा हा ऋते प्रतिपरि अनुअभितस्अधिइत्यादिष्वपि योगे द्वितीया कार्य्या इति दृश्यते शिष्टप्रयोगात् ज्ञायतइत्यर्थः । अभितो ग्राममिति । उभयतोभिमुखं चेत्यर्थः अभितः सर्वतइत्येतौ तत्रादिरिति तसन्तौ निपातौ । धिगिति । निन्दार्थमव्ययम् । उपर्युपरीत्यादि । अत्रत्रयाणामपिदेशतःकालतश्च सामीप्ये सद्यआदिषु द्वित्वं निपात्यते । उपर्युपरिबुद्धीनामित्यत्र तु उपरिबुद्धिशब्दस्य कृतबहुव्रीहेः कृतकर्मधारयस्य वा षष्ठयतन्स्योपरीत्यनेन संबन्धइत्यनाम्रेडित्वात् द्वितीया न भवति । अथवा अन्ते समीपेऽर्थेआम्रेडिताः कृतद्वित्वाः आम्रेडितान्ता इतितत्पुरुषे क्वचिदमाद्यन्तस्येत्यन्तशब्दस्य परनिपातः बहुव्रीहौ वा तेषु समीपेऽर्थे द्विरुक्तेषूपर्यादिषु योगे द्वितीया स्यादित्यर्थः । इह तु वीप्सायां द्वित्वमिति षष्ठ्येव भवति । तथोक्तं वामनालङ्कारे उपर्यादौ सामीप्ये द्विरुक्ते द्वितीया वीप्सायां द्विरुक्ते षष्ठ्येवभवतीति । समयाग्राममित्यादितु ततोन्यत्रापीत्यस्योदाहरणं समयानिकषा इत्येतौ सामीप्यार्थौ । कालाध्वनोरिति । अन्तरमवकाशः निर्गतमन्तरं निरन्तरं तस्यभावोनैरन्तर्यं तत्र नैरन्तर्येसाकल्येन क्रियागुणद्रव्यैः कालाध्वनोः संयोगे गम्ये कालाध्ववाचिशब्देभ्यो द्वितीयास्यादित्यर्थः । मासमधीत इति । अध्ययनक्रिययात्यन्तसंयोगोत्र मासस्यास्तीतिजाताद्वितीया।नचसा ऽधातोः सकर्मकत्वादेव सेत्स्यतीति वक्तव्यानारम्भआशङ्क्यः वक्तव्यस्य मासमास्तइत्याद्यर्थत्वात् । यदात्रापिकर्मत्वं कालभावाध्वगन्तव्याःकर्मसंज्ञाह्यकर्मणामिति भाष्यकारवचनात् अत एवास्यते मासः आसितव्यः आसितः मासइति कर्मणि प्रत्ययोत्पत्तिः तदागुणद्रव्याभ्यां नैरन्तर्य्ये द्वितीयार्थमेतदित्यभिप्रेत्य द्रव्ययोगे उदाहरति क्रोशं पर्वत इति एवं मासं कल्याणी मासं गुडधानाः क्रोशमधीते क्रोशं कुटिलानदी । अनैरन्तर्ये तु क्रोशस्यैकदेशे पर्वतः । क्रियाविशेषण इति । क्रियायाः विशेषणे क्ली-

**चनंच * ॥ कर्तरिप्रधानेक्रियाश्रये साधने च । क्रियासिद्ध्युपकारके करणेर्थे तृतीया । भिन्नः शरेण रामेण रावणो लोकरावणः । कराग्रेण विदीर्णोपि वानरैर्युध्यते पुनः । दानपात्रे संप्रदानकारके चतुर्थी । वेदविदे गां**

त्वमेकवचनं च वाच्यमित्यर्थः । एकवचनं तु द्वितीयायाएवक्रियायाः कर्मरूपेन तद्विशेषणस्यापि कर्मत्वात् अत एवेदं द्वितीयाधिकारे पठितं तथोक्तं प्रसादे, क्रया हि सर्वधातूनामान्तरं कर्म्मेति । अथ शेषाकार्य इत्यत्रान्वर्थौ कर्तृसाधनशब्दौ तीयां विधत्तइति प्रदर्शयितुमाह कर्त्तरीति । अन्वर्थश्च करोति क्रियां निष्पादयति कर्त्तेति । न चैवं करणेऽतिव्याप्तिः तस्य गुणभावेन क्रियानिष्पादकत्वात् इह स्वातन्त्र्यस्य विवक्षितत्वादिति मत्वाह प्रधानइति । अगुणभूतइत्यर्थः । अत एव देवदत्तआस्ते शेते इत्यादावप्रधानकारकान्तराभावेपि तथा रथोगच्छतीत्यादि-अचेतनेष्वपि विवक्षावशात्स्थालीपचतीत्यादावपि सिद्धं च कर्तृत्वम् अगुणभावस्याऽत्र सर्वत्रापि सत्त्वात् क्रियाया आश्रये आधारभूते क्रियाप्रवर्तके प्रधाने कर्त्ते-तृतीयेतियोजना । साधनेचेति । साध्यते क्रिया अनेनेतिसाधनम् । तत्र यद्यपि र्त्रादिभिरपि साध्यते तथापि नानन्तर्येणेति न तत्र व्यभिचारः । आनन्तर्यंकयात्र विवक्षितमित्याह क्रियेति । क्रियायाःसिद्धेरुपकारकमासन्नयानिष्पादकं यदनन्तरं-क्रियासिद्धिरितियावत् । एतदेवचान्यैः करणमिति व्यवहृतं तथाहि, क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ॥ विवक्ष्यते यदा तत्रकरणत्वंतदास्मृतमिति तत्राप्यर्थे-तृतीया स्यादित्यर्थः । भिन्नः शरेणेत्यादि । रामेणरावणः शरेणभिन्नोऽपिपुनर्युध्यतेति योजना । अत्ररामेणेति प्राधान्यात् कर्त्तरि कर्मवाचिनाक्तेनानुक्ते टा । शरेणेति साधने शरव्यापारानन्तरमेवभेदनक्रियासिद्धेः पुनश्च वानरैः कराग्रेण विदीर्णः टिताङ्गोपि । अत्रापिवानरैरिति कर्तरि भिस् कराग्रेणेति करणे टा प्रक्रियावत् किमित्येवं भिन्नो विदीर्णश्चेत्याह लोकेति । यस्माल्लोकस्य जगतो रावणो दुःखप्रदस्ततइत्यर्थः । युध्यतइति कर्तरिते । दानपात्र इति । किंचिदुद्दिश्यापुनर्ग्रहणाय स्वद्रव्यत्यागो दानं तस्य यत्पात्रं यस्मै दीयते तत् । गुरवे गांददातीत्यादौगुर्वादितः चतुर्थीस्यादित्यर्थः । इदमेवान्यैःसंप्रदानमितिव्यवहृतम् । तथाहि, कर्मणा यमभिप्रैति ससंप्रदानम् । संप्रदानंतदेवस्यात्पूजानुग्रहकाम्यया ।

दुदाति । विश्लेषो विभागस्तत्र योऽवधिश्चलतयाऽचलतया वा विवक्षितस्तत्रापादाने पञ्चमी । धावतोऽश्वात्पतितः भूभृतोऽवतरति गङ्गा । संबन्धे षष्ठी ।

दीयमानेन संयोगात्स्वामित्वं लभतेयदीतिच । अतएव रजकस्य वस्त्रं ददातीत्यत्रापुनर्ग्रहणात् अतः पृष्ठं ददातीत्यादौ तु संप्रदानत्वाभावान्न चतुर्थी। षष्ठी तु कारकशेषत्वान्नटस्य शृणोतीतिवदुपपद्यते। ददातिप्रयोगोप्युपमानात् तच्च संप्रदानमादित्याय पुष्पं ददातीति, अनिराकर्तृयाचकायाऽन्नं ददातीति, प्रेरकं गुरवे गां ददातीत्यनुमतमिति त्रिधा । तथोक्तं भर्तृहरिणा—अनिराकरणात्कर्तुः त्यागाङ्गं कर्मणेप्सितम्। प्रेरणानुमतिभ्यांच लभते संप्रदानतामिति । त्यागाङ्गंदानस्याङ्गं शेषभूतं कारकंकर्मणागवादिनामुमिष्टम् वेदविदेगामिति । वेदविदो दानपात्रत्वात् ङे। विश्लेष इति। अस्यार्थमाह विभागइति। पृथग्भाव इत्यर्थः । तत्र योऽवधिरिति। यतोपैति पृथक् भवति सोऽविशेषाच्चलोऽचलश्च तत्र पञ्चमी स्यादित्यर्थः। अयमेव चान्यैरपादानमिति व्यवह्रियते। तथाहि ध्रुवमपायेपादानम्। अपाये यदुदासीनं चलं वा यदि वाचलम्। ध्रुवमेव तदावेशादपादानं तदुच्यते इति। संयुक्तस्य हि विश्लिष्टिक्रियारम्भो भवेद्यतः। तदेवावधिभावेन अपादानं प्रकीर्त्तितमिति। तथोदाहरति धावतइति। अत्राश्वात्पतित इति पृथक् चलनावधिरश्व इति ततोङसिः धावत इति तु तद्विशेषणम्। भूभृतइति अचलस्योदाहरणं तथा कुडयात् पततोऽश्वात् पतितइत्यत्र परंपातापेक्षं पततोपिस्यादेवावधित्वम्। तथोक्तम्-पततो ध्रुवएवाश्वो यस्मादश्वात्पतत्यसौ । तस्यत्वश्वस्यपतने कुड्यादिर्ध्रुवइष्यते इति। ध्रुवोवधिरित्यर्थः एवं परस्परस्मान्मेषावपसर्पत इत्यत्रापसर्पणापेक्षमन्योन्यस्याऽवधित्वम्।तदुक्तं—मेषान्तरक्रियापेक्षमवधित्वंपृथक् पृथक्। मेषयोःस्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथगिति। अवधिग्रहणंकिं ग्रामादायाति शकटेन। करणे तृतीयात्वन्यत्र सावकाशाद्वृक्षस्य पर्णंपततीत्यत्र तु सन्नप्यपायो न विवक्षित इति षष्ठी। चोराद्बिभेति भीत्या निवर्तते चौरात्त्रायते चौरकृताद्वधादेस्त्राणेन निवर्तयतीति भयादिपूर्विकायानिवृत्तौ भयादीनां प्रवृत्तेः सर्वत्रात्र बुद्धिपरिकल्पितो विश्लेषोस्तीतिविश्लेषावधावेवपञ्चमीसिद्धेरिति न तदर्थं यत्नान्तरं कृतं सूत्रकृता। एवं पापात्पराजयते इत्यादावपि पराजेर्न्यूनताभावेपूर्वनिवृत्तौ वृत्तेर्विश्लेषो वेद्यः । संबन्धेषष्ठीति । संबन्धोनेकविध

राज्ञः स पुरुषो ज्ञेयः पित्रोरेतत्प्रपूजनम् । गुरूणां

तथाहि नटस्य शृणोतीत्यादौ क्रियाकारकरूपः । एवं माषाणामश्नीयादित्यादावपि माषसंबन्ध्यशनस्य विवक्षितत्वात्तत्रैव संबन्धे षष्ठी । द्वितीया तु सतोपि कर्मत्व-स्याऽनुदराकन्येतिवदविवक्षितत्वान्न वस्तुस्थित्या हि सदसद्वावस्तु विवक्षितमेव विभक्तिं जनयति । तदुक्तं, संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां च क्रियायांसोभिधीयत इति । अश्रुतायां तु क्रियायां राज्ञः पुरुष इति स्वस्वामिभावः वृक्षस्य शाखेत्यवयवावयविभावइत्यादिबहुविधोऽपि संबन्धिभेदादव-गन्तव्यः । ननु च संबन्धस्योभयसंबन्धिनिष्ठत्वादुभाभ्यां विशेष्याद्विशेषणाद्वा षष्ठीं प्राप्नोति नाद्यः एकतोपिजातया षष्ठ्या द्विष्ठस्यापिसंबन्धस्य सुवचत्वात् । न द्वितीयः विशेष्यस्य स्वार्थमात्रवृत्तित्वेनानपगतप्रथमाविषयत्वात् । स्यादेतत् । पुरुषपदमन्तरे-णापि राज्ञइत्यत्रानियतप्रतियोगिकसंबन्धित्वं प्रतीयते पुरुषपदसन्निधौ तु सविशे-षस्य प्रतीतिरित्येतावत् संबन्धात् तदपेक्षैव प्राक्षष्ठी भवति ततश्चाप्रधाने पदं निधाय पश्चाद्विशेषविवक्षायां संनिहितं पुरुषं प्रधानमपि द्विष्ठत्वात्संस्पृशतीत्येतावत् । तदुक्तं, द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते । तत्राभिधीयमानस्तु प्रधानेऽ-प्युपयुज्यत इति । यथा—परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणम् । विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनादिति । न च पुरुषशब्दादपि षष्ठ्युच्चारणे विपरीतो विशे-षोवगंस्यत इति षष्ठी कुतः स्यादिति वाच्यं शब्दस्य भावाभावाभ्यामर्थस्य भावा-भावाकरणात् किंतु विद्यमानस्यैवार्थस्य प्रतिपादयिषितस्य स्ववाचकपदप्रयो-जकत्वात् तत्र गुणस्य परोपकारकत्वेन विवक्षितत्वात्तदन्ते षष्ठी भवति पुरुषस्य तूपकार्यत्वात् स्वनिष्ठत्वेन विवक्षितत्वात्प्रथमा भवति । यदातु विपरीतो गुणप्र-धानभावो विवक्ष्यते तदा पुरुषस्य राजेति भवति । राज्ञः पुरुषस्य गृहमित्यत्र राज्ञ इति षष्ठी राजपुरुषयोरेव संबन्धमाचष्ट इति पुरुषस्याऽपि गृहादिसंबन्धविवक्षायां भिन्नविषयो गुणप्रधानभावो नैकस्याऽपि विरुध्यत इति द्वाभ्यामपि षष्ठी भवति । सबन्ध इति किं द्वितीयादीनां कर्मादिरिव षष्ठ्या वाच्यः संबन्धोयथा स्यात् अनि-र्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थे मा भूत् । राज्ञः स पुरुषइति । राजपुरुष-योरत्र स्वस्वामिसंबन्धे राज्ञोऽप्रधानात्षष्ठी । पित्रोरेतदिति । संबन्धसामान्ये षष्ठीं वि-धाय ततः प्रपूजनमिति संबन्धनीयं पित्रोः प्रपूजनमिति योजनायां कर्तृकार्ययोरित्येव

**वचनं पथ्यं कवीनां रसवद्वचः । आधारे सप्तमी । षड्विधमधिकरणम् । औपश्लेषिकं सामीपिकमभिव्यापकम् वैषयिकम् नैमित्तिकमौपचारिकं चेति । कटे शेते कुमारोसौ वटे गावः सुशेरते । तिलेषु विद्यते तैलं हृदि ब्रह्मामृतं परम् । युद्धे सन्नह्यते धीरोङ्गुल्यग्रे**

षष्ठी स्यादिति नात्रैतदुदाहर्तव्यं स्यात् । माता च पिता च पितरौ तयोः पित्रोरिति । सहादेरिति । मातृपितृशब्दयोः पित्रादेशो द्वित्वार्थमेतदुक्तम् । एवं बहुत्वार्थं गुरूणां कवीनामिति सुविशदम् । सर्पिषो जानीत इत्यादौ त्वज्ञानार्थजानात्यादिप्रयोगे करणादौ संबन्धविवक्षयैव षष्ठी । आधारइति । आधीयन्ते क्रियाअस्मिन्नित्याधार इति संज्ञायामकर्तरि चेति, चकारात् घञ् । एवं च साक्षात्क्रियाश्रयत्वात्कर्तृकर्मणोः सप्तम्याः तृतीयाद्वितीययोरनवकाशत्वादप्रसङ्गादमुख्येऽपि कर्तृकर्मणोराधारे सप्तमी भवति । अयमेवाधारोधिकरणमिति व्यवह्रियते । तदुक्तं, कर्तृकर्मव्यवहितां साक्षाद्धाधारयत् क्रियाम् ॥ उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमिति । षड्विधमिति । षट्प्रकारमित्यर्थः । तथोक्तम्—आधारस्त्रिविधो ज्ञेयः कटाकाशतिलेषु यः । निमित्तादिप्रभेदाच्च षड्विधः कैश्चिदिष्यत इति । औपश्लेषिकमित्यादि । आधाराधेययोः प्रादेशिकः संबन्धः औपश्लेषिकः आधाराधेययोरन्यत्र सिद्धयोर्यः संयोगः स उपश्लेषः तत्रभवं यथा कटे शेते इत्यत्र कटकुमारयोः १ । सामीप्यं सान्निध्यं तत्रभवं सामीपिकं यथा वटे गावइति नात्र गवां वटेन संयोग इत्यौपश्लेषिकाद्भेदः २ । अपृथग्देशयोराधाराधेययोः सर्वावयवसंबन्धकमभिव्यापकं यथा तिलेषु तैलमिति तिलानभिव्याप्य तैलं विद्यतइत्यर्थः । देशविभागाभावादौपश्लेषिकाद्भिन्नमिदम् ३ । विषयोऽन्यत्रभावस्तत्र भवं वैषयिकं यथा हृदि ब्रह्माऽमृतं योगिनां निदिध्यासितं स्फुरतीति शेषः । अन्यथा ब्रह्मणोऽन्यत्रापि भावादवैषयिकमेतत् स्यात् मनोब्रह्मणोश्चाऽमूर्तत्वान्नौपश्लेषिकमभिव्यापकं च परं सर्वोत्कृष्टममृतं नित्यमिति ब्रह्मविशेषणम् ४ । निमित्तं हेतुस्तत्र भवं नैमित्तिकं यथा युद्धे सन्नह्यते धीर इति युद्धनिमित्तं सन्नह्यतीत्यर्थः ५ । उपचारे भवमौपचारिकं यथाङ्गुल्यग्रे करिणां शतमिति । हस्तिशतमङ्गुल्यग्रे उपचर्यते ६ । एवं षड्विधाधिकरणे सप्तमीं निरूप्य शेषाः कार्य इति क्रमो-

करिणां शतम् ॥ भावः क्रियालक्षणं तत्राऽपि सप्तमी । वर्षति देवे चौर आयातः । पतत्यंशुमालिनि पतितोऽरातिः ॥ विनासहनमकृतेनिर्द्धारणस्वाम्यादिभिश्च * २६२ ॥ एतैरपि योगे द्वितीयाद्या विभक्तयो भवंति । विना पापं सर्व्वं फलाति । अन्तरेणाक्षिणी किं जीवितेन । अन्तरा त्वां मां मधुरिपुरित्यादिपदं ग्राह्यम् । सह शिष्येणागतो गुरुः । सदृशश्चैत्रो

पेतां भावसप्तमीमाह । भाव इति । भवनं भावः क्रिया सा च प्रसिद्धा ग्राह्या तद्ग्रहणस्यैवोचितत्वात् सोत्रास्तीति भावः मत्वर्थे अः प्रसिद्धक्रियावान् तत्र भावे प्रसिद्धक्रियावतीत्यर्थः । प्रसिद्धक्रियावांश्च सापेक्षत्वादप्रसिद्धक्रियावन्तं संलक्ष्यैव भवति क्रियालक्षणं च क्रियाद्वारैवेति प्रसिद्धक्रियया अप्रसिद्ध क्रियालक्षणे प्रसिद्धक्रियावतः सप्तमी स्यादित्यभिप्रेत्याह क्रियालक्षणमिति । लक्ष्यतेऽनेनेति लक्षणमिति साधने युटि सामान्यविवक्षया क्लीबत्वं क्रियाया लक्षणं क्रियालक्षणम् । अप्रसिद्धक्रियांलक्ष्यनयः सभावः । प्रसिद्धा क्रियातत्रभावयति सप्तमी स्यादित्यर्थः । तथोदाहरति । वर्षतीति । देवस्याऽत्र वर्षणक्रियया सर्वजनप्रसिद्धया चौरागमनाप्रसिद्धक्रियोपलक्षणे प्रसिद्धक्रियावतो देवात्सप्तमी जाता वर्षतीत्यत्र तु तद्विशेषणत्वेन । एवमंशुमालिनि सूर्ये अस्तं याति शत्रुःपतित इत्यत्राऽपि भाववतांशुमालिनः सप्तमी। विना । इह शेषा इति पूर्वतोऽनुवर्तते निर्द्धारण इत्यर्थपरो निर्देशः विनादीनांच स्वाम्यन्तानां द्वन्द्वे तत आदिशब्देन बहुव्रीहौ विनादिभिः प्रत्येकं संबध्यमानोप्यादिशब्दोन संबध्यते । ततश्च विनादिभिर्योगे द्वितीया सहादियोगे तृतीया नमआदियोगे चतुर्थी ऋतेप्रभृतियोगे पञ्चमी निर्द्धारणार्थे षष्ठी स्वाम्यादियोगेसप्तमीत्यर्थः। इत्यभिप्रेत्यतावद्विनादियोगे द्वितीयामुदाहरति विनापापमिति । विनायोगेऽत्र पापात् द्वितीया जाता । एवमुत्तरत्र तत्तद्योगे विभक्तयो ज्ञेयाः । अन्तरेणेति । अक्षिणी नयने विना किं जीवितमफलमित्यर्थः । अन्तरेति । तव मम च मध्ये मध्वरिरित्यर्थः। युष्मदोस्मदश्चात्रान्तरायोग इत्युभयत्र द्वितीया । इत्यादिपदादिति । इतिः प्रकारे एवं प्रकारमुपपदद्वितीयान्तं प्रयोगजातमादिपदाद्विनाशब्देन संब-

मैत्रेण,साकं नयनाभ्याम् । श्लक्ष्णा दन्ताः । सार्द्धं धनिभिर्धृतः साधुः । नमो नारायणाय । स्वस्ति राज्ञे । सोमाय स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । वषट् इन्द्राय । ऋते ज्ञानान्न मुक्तिः । अन्यो गृहाद्विहारः । नि-

ध्यमानं ज्ञेयमित्यर्थः । शिष्येणसहेति । सहयोगेत्र शिष्यशब्दात्तृतीया । ननु क्रियागुणद्रव्यैर्द्वयोः संबन्धे सति सहशब्दप्रयोग इति द्वयोः संबन्धाविशेषात्कथं गुरोर्न तृतीया । उच्यते । नाममात्रापेक्षयान्तरङ्गयान्योक्तप्रथमया बाधितत्वात् । एवं च क्रियादिभिः प्रागभिसंबन्धात्प्रधानादन्तरङ्गया तत्तद्विभक्त्या व्याप्तविषया तृतीया प्रागेव सहार्थेन संबन्धादप्रधानादेव भवति । यस्य हि साक्षात् क्रियादिना संबन्धः शब्दवाच्यः तस्य प्राधान्यं यस्य तु सहार्थान्यथानुपपत्त्या प्रतीयमानस्तस्याप्राधान्यमिति विवेक्तव्यं, सहागतौ गुरुशिष्यावित्यादौ तु द्वयोः क्रियादियोगेऽन्तरङ्गा प्रथमा पश्चात्सहयोगेपि न निवर्तते । ग्रामं न गच्छतीत्यादौ पश्चान्नञ्योगे द्वितीयावत् । ननु शिष्येण सहागतो गुरुरित्यत्र शिष्यस्यापि सहार्थसामर्थ्यात्प्रतीयमानकर्तृत्वमस्त्येवेति कर्तृसाधनयोरित्येव तृतीया सेत्स्यतीति । किमत्र सहग्रहणेन, न चात्राप्यन्योक्ते प्रथमा स्यादिति वाच्यं, मुख्यस्य गुरोरेव कर्तुः क्तादिभिरभिधानात् गौणस्य त्वनन्योक्तत्वात् । उच्यते । इह तर्हि शिष्येण सहागमनं गुरोरित्यत्र कर्तृकार्ययोरितिशिष्यादपि षष्ठी स्यात् । तथा तिलैः सह माषान् वपतीति तिलानामपि कर्मत्वप्रतीतेर्द्वितीया स्यात् । तथा शिष्येण सह स्थूलो गोमांश्चेति द्रव्यगुणसंबन्धप्रतिपादनतात्पर्यात्क्रियागन्धस्यैवाऽभावात्कर्तृगन्धोपि नास्तीति तृतीया न स्यात् । किञ्च भिन्नः शरेण रामेणेत्यादौ मुख्ये कर्तरि संभवति गौणमुख्यन्यायेन शिष्येण सहागतो गुरुरित्यत्र गौणे कर्तरि तृतीया न स्यादित्यपि सहग्रहणमत्र कर्तव्यमिति यत्किञ्चिदेतत् । सहशइत्यादीनित्वादिनाज्ञेयानि । वारणार्थोऽलंशब्दोप्यत्र ज्ञेयः । अलं विलंबेनेति । नमोनारायणायेति । नमोयोगे चतुर्थी । स्वस्तिराज्ञेइत्यादीनि त्वादिनाज्ञेयानि । अलं करोति कन्यामित्यत्र तूपपदविभक्तेः कारकविभक्तिर्बलीयसीति । कर्मणि द्वितीया ऋतेज्ञानादिति । ऋतेयोगे पञ्चमी आदिना-

र्द्धारणं क्रियागुणजातिभिः समुदायात्पृथक्करणात्तत्र षष्ठी सप्तमी च ॥ क्रियापराणां क्रियापरेषु वा भगवदाराधकः श्रेष्ठः, गवां गोषु वा कृष्णा संपन्नक्षीरा, एतेषामेतेषु वा क्षत्रियः शूरतमः । स्वाम्यादियोगे षष्ठीसप्तम्यौ । गोष्वधिपतिः । गवामधिपतिः । कर्तृकार्ययोरक्तादौ कृति षष्ठी * २६३ ॥ कर्तरि कार्ये च षष्ठी विभक्तिर्भवति क्तादिवर्ज्जिते कृदन्ते शब्दे प्रयुज्यमाने । व्यासस्य कृतिः । भारतस्य श्रवणम् । स्मरतौ च

न्योगृहाद्विहारइत्यादि । निर्द्धारणशब्दार्थमाह क्रियागुणेति । यस्मात्समुदायादेकदेशस्य क्रियादिभिर्निर्द्धारणं विवेचनं पृथक्करणं भवति तत्र समुदायेविभक्तिःस्यादित्यर्थः । ननुकुतइदंलभ्यम्, उच्यते । निर्धार्यते विविच्यतेऽस्माद्वृन्दादेकदेशस्तन्निर्द्धारणमित्यपादाने ल्युट् तत्र निर्द्धारणे समुदाये इत्यर्थः । तत्रषष्ठीति । क्रमप्राप्तेत्यर्थः । सप्तमीचेति । विनादिसूत्रेऽनुक्तसमुच्चयार्थाच्चकारादिति भावः । तथोदाहरति क्रियापराणामिति । क्रियासु पराः क्रियावन्तस्तेषां तेषु वा यो भगवत आराधकः विष्णोरुपासकः स श्रेष्ठइतिक्रियायामत्रोदाहृतिः । गवां कृष्णेति । गुणे, संपन्नं क्षीरं यस्याः सा । क्षीरसंपत्तिमतीत्यर्थः । एतेषांक्षत्रियइति ज्ञातौ । गोषुस्वामीति । स्वामियोगेत्र सप्तमी गवांस्वामीति तु प्राग्वच्चकारात्षष्ठी, गोष्वधिपतिरित्यादिशब्दादत्र सप्तमी गवामिति तु प्राग्वत्षष्ठ्यपि । एवमीश्वरादियोगेपि।एवमन्यत्राप्युपपदविभक्त्योऽविहितलक्षणा यथायथमनेन लक्षणेन विधेयाः। विस्तरभयात्तु नोदाह्रियते । कर्तृकार्ययोः । कृतीतितुप्रत्ययत्वात्तदन्तग्रहणमित्याह कृदन्तइति । किं सर्वस्मिन्नेत्याह । क्तादिवर्जित इति । क्तादिभिर्वर्जितेऽक्ताद्यन्ते इत्यर्थः । व्यासस्येति । कृञोत्र क्तिः कृतिः व्यासस्येति कर्तरि षष्ठी । भारतस्येति । श्रवोत्र कृल्युट् तस्य कर्मणि षष्ठी । कर्तृकार्ययोःकिम् आसनादुत्थानं, कृतीतिकिम् आख्याते माभूत् । नच तृतीयाद्वितीयेनिरवकाशे इतिवाच्यं, क्तादौसावकाशत्वात् तेनकृतं कृतवान् क्तादयस्तु क्तक्तवतुशतृशानकसुकानाकितृन्नव्ययखलुकञो

कार्ये । मातुः स्मरति मातरं स्मरति । हेतौ तृतीया पञ्चमी च वक्तव्या * ॥ अनित्यः शब्दः, कृतकत्वेन कृतकत्वाद्वा । भयहेतौ पञ्चमी । चौराद्बिभेति, व्याघ्रात् त्रस्यति, विद्युत्पाताच्चकितः ॥ षष्ठी हेतुप्रयोगे * । कस्य हेतोरियं कन्या । इत्थंभावे तृतीया ॥ शिष्यं पुत्रेण पश्यति । संसारमसारेण पश्यति । येनाङ्गविकारः । अक्ष्णा का-

ज्ञेयाः । पक्षेतव्यादयोऽपि । स्मरतौचेति । स्मृत्यर्थानामित्यर्थः । चकारोऽनुक्तसमुच्चयार्थः । तेन दयेशादीनां ग्रहणम् । इदमुक्तचिंतापरं संबन्धविवक्षायां शेषाः कार्य इत्येवषष्ठीसिद्धेः कर्मत्वविवक्षायां तु तेनैव कार्ये द्वितीयासिद्धेरिति । हेताविति । फलसाधनयोग्यः पदार्थो हेतुः तद्वाचिनस्तृतीयापञ्चम्यौ वाच्ये इत्यर्थः । कृतकत्वेनकृतकत्वादिति । अत्र तार्किकाणां मते शब्दस्यानित्यत्वे फले साध्ये तत्साधनसमर्थं कृतकत्वं हेतुरिति टाङसीजाते, वैयाकरणानां तु नित्यएव शब्दः । यदुक्तं सिद्धेशब्दार्थसंबन्धइति । भयहेताविति । भयस्य हेतुः कारणं तत्रपञ्चमी वाच्येति । चौराद्बिभेतीति । चौरोऽत्रभयकारणम् । एवंव्याघ्रविद्युत्पातावपि । त्राणं बाधकेभ्यो रक्षणं बाधकाश्च भयहेतवइति । तत्रापि भयहेतौ पञ्चमी स्यादिति चौरात्त्रायत इत्युदाहार्यम् । अत्रोभयत्रापि विश्लेषावधावित्येव यथा पञ्चमी भवति तथा तत्रैव प्रत्यपादीति तत्प्रपञ्चएवेदम् । षष्ठी हेत्विति । हेत्वर्थशब्दप्रयोगेषष्ठीस्यादित्यर्थः । इत्थंभावइति । प्रकारविशेषे इत्थमितिनिपातोऽयं तमभीष्टं प्राप्तवानित्थम्भावः । भवतेः प्राप्त्यर्थात्कार्येऽणित्यण् वृद्धिः । कंचित् प्रकारविशेषं प्राप्तइत्यर्थः । तमाचष्टे लक्षयतीतिञिः टिलोपः इत्थं भावयतीति पचाद्यः णेरितिञिलोपः इत्थंभावः पुत्रादिपदार्थः तत्रेत्थम्भूतलक्षणे तृतीया स्यादित्यर्थः । शिष्यमिति । कश्चित्कंचिदाह कः शिष्यइति सप्रत्याह आचार्यपुत्रसंनिहित इति । सपश्चात्पुत्रेणोपलक्षितं शिष्यं पश्यतीति भवत्येवात्र शिष्यप्रकारप्राप्तस्य पुत्रो लक्षणमितिपुत्रादौजातः । पत्रेणेति पाठेतुपत्रं पुस्तकपत्रं तेनलक्षितं शिष्यं पश्यतीत्यर्थः । संसारमिति । असारोऽस्थैर्यं तेन संसारं पश्यतीति संबन्धः । अत्रापि संसारप्रकारप्राप्तस्यासारोलक्षणं यद्यप्यत्रोभयत्रापि दर्शि प्रति पत्रासारयोः करणत्वादेव तृतीया सि-

णः। पादेन खञ्जः। जनिकर्त्तुः प्रकृतिः॥ यस्मात्प्रजाः प्रजायंते तत्सद्ब्रह्म। आङादियोगे च॥ आपाटलिपुत्राद्वृष्टो देवः। तादर्थ्ये चतुर्थी च वक्तव्या *। संयमाय श्रुतं धत्ते नरो धर्म्माय संयमम्। धर्मं मोक्षाय मेधावी धनं दानाय मुक्तये। क्रुद्धादियोगे च। क्रूराय

क्ष्यति तथापि यदा प्रमाता प्रमितिदशायामेव स्वप्रमितिवाक्यं प्रयुङ्क्ते पुत्रेणार्थं शिष्यः असारेणायं संसार इति तदाद्दश्यभावेपि यथास्यादितीदमारभ्यते इहपत्रहस्तः शिष्यइति बहुव्रीहौ लुगनन्तरं पत्रशब्दात्तृतीयाप्राप्तान्यपदार्थप्राधान्येन गुणीभूतवृत्तिपदार्थत्वादित्थम्भूतलक्षणस्याप्रधानत्वान्न भवति। येनाङ्गेति यद्यत्राङ्गशब्दोऽवयववाची स्यात्तदक्षिकाणमस्येत्यादौ काणादेरेव स्यात्तेनैव ह्यक्ष्यादेर्विकारस्य लक्ष्यमाणत्वान्नाक्ष्णाकाण इत्यादावक्ष्यादेस्तस्मादङ्गशब्दो मत्वर्थीयाकारप्रत्ययान्तः शरीरवाची गृह्यते इत्यभिप्रेत्योदाहरति। अक्ष्णाकाणइति। काणताया अक्षिधर्मत्वेप्यवयवधर्मस्यावयविन्यारोपात्पुरुषोपिकाण इत्युच्यते। तत्र यदङ्गगतो विकारस्ततस्तृतीयेत्यक्षिशब्दाट्टा अचास्थ्नामिति नुमत्वयोरल्लोपणत्वे अक्ष्याद्युपक्रमेऽत्र वाक्ये काणादिप्रयोगो निरूपयतीत्यादिसन्देहनिवृत्त्यर्थः। अङ्गविकारः किम् अक्षिकाणमस्येति जनिकर्तुरिति। जनेः कर्ताजनिकर्ता तस्य प्रकृतिरितिपञ्चम्यर्थे प्रथमा तेन जनिकर्तुः प्रकृतेर्भयहेतौ चेत्यतोनुवर्त्तमाना पञ्चमीस्यादित्यर्थः। ननुजनीतिनिर्देशे इकारःकिमिक्श्तिपौ धातुनिर्देशइतिवा धातोरुच्चारणार्थे वौणादिक इण्वा नाद्यः। गमांस्वरइत्युपधालोपप्रसङ्गात्। नापिद्वितीयः शब्दात्मकस्य धातोःकर्त्रा संबन्धाभावात्। अर्थद्वारकेऽपिसंबन्धे जनेरेव ग्रहणे पर्यायाऽग्रहणात् तृतीये त्विणोभावार्थत्वाज्जन्यर्थग्रहण उपधावृद्धिरपि जनिवध्योर्नेति न भवति। प्रकृतिरिह कारणमाश्रयम्। अतएव पुत्रात्प्रमोदो जायत इत्यत्रापि भवति। यस्मात्प्रजाःप्रजायंतइति। अत्रजायमानानां प्रजानां कारणब्रह्मनिर्देशकाद्यदो ङसिर्जातः। जायमानत्वं तूक्तं पदमञ्जर्यां, पूर्वावस्थामविजहत्संस्पृशद्धर्ममुत्तरम्। संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयत इति। इहापि यद्यतो जायते तत्ततो निर्गच्छतीति विश्लेषावधावित्येवपञ्चमी सिद्धेति विस्पष्टार्थमिदम्। आङादीति। आदिनाऽपपरिप्रतीनांग्रहणम्। अपहरेः

क्रुध्यति । मित्राय द्रुह्यति गुणवतेऽसूयति । ल्यब्लोपे पञ्चमी वक्तव्या * ॥ हर्म्यात्प्रेक्षते हर्म्यमारुह्य प्रेक्षत इत्यर्थः । निमित्तात्कर्म्मयोगे सप्तमी वक्तव्या * । चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः । षष्ठीसप्तम्यौ चानादरे * ।

परिहरे: संसार: । अत्राऽपपरीवर्जनार्थौ । प्रतिः प्रतिनिधिप्रतिदानार्थः । कृष्णात्प्रति प्रद्युम्नः तिलेभ्यः प्रतियच्छति माषानिति । तादर्थ्य इति । तस्मादिदं तदर्थमित्यत्र तदा कार्यं निर्दिश्यते समासेन च कारणं तदर्थस्य भावस्तादर्थ्यमिति यणा कार्यकारणसंबन्धोभिधीयते । तत्र च संबन्धे विशेषणात्षष्ठ्यां प्राप्तायां तदपवादतया चतुर्थ्यपि तत एव विधीयते । इत्यभिप्रेत्योदाहरति । संयमायश्रुतमिति । संयमोऽत्रकार्यविशेषणमिति ततश्चतुर्थी जाता श्रुतं तु कारणं यदि कारणं हेतुतया तृतीया प्राप्नोति नचतुर्थ्येव हेतुहेतुमत्त्वस्य प्रत्यायितत्वात् एवमुत्तरत्रापि योज्यम् । क्रुद्धादीति । क्रुद्धमिति भावेक्तःक्रुध्यर्थः आदिना तु द्रुह्याद्यर्थानां ग्रहणम् । युज्यतेनेनेति योगः करणे घञ् क्रुद्धादीनां योगः क्रुद्धादियोगः येन क्रुद्धादयो युज्यन्ते केन चयुज्यन्ते यं प्रति कोपस्तत्र चतुर्थी स्यादित्यर्थः । क्रूरायेत्यादि । अमर्षयतीत्यर्थः । द्रुह्यतीति । अपकरोतीत्यर्थः । असूयतीति । तद्गुणेषु दोषानारोपयतीत्यर्थः । देवदत्तायेर्ष्यतीत्यपि द्रष्टव्यम् । ईर्ष्यात्वक्षमा । यद्यपि क्रुध्यादीनां चित्तदोषार्थत्वादर्थकृतोऽभेदस्तथापि द्विषादिनिवृत्तये आदिग्रहणम् । मित्रं द्वेष्टीति अनभिनन्दनं हि द्विष्यर्थः । कथं देवदत्तमभिक्रुध्यतीति कर्मत्वविवक्षया । ल्यब्लोपइति । लोपोऽत्राप्रयोगः नतु लाक्षणिकोऽभावात् ल्यबन्तस्याप्रयोगे पञ्चमी स्यादित्यर्थः हर्म्यादिति । इहल्यबन्तस्याप्रयोगोऽपि गम्यमानमर्थमाह हर्म्यमिति । निमित्तादिति । निमित्तमिह क्रियाफले तद्वाचिनः कर्मणा सह समवायादिसंबन्धे सति हेतुतृतीयापवादभूतासप्तमीवाच्येत्यर्थः । चर्मणीत्यादि । चर्मकामो व्याघ्रं हंतीत्यर्थः । इहास्तिहन्तिकर्मणा द्वीप्यादिनाचर्मादेर्निमित्तस्य समवायः संबन्ध इति । ततः सप्तमी जाता पुष्कलकः शंकुः सहेतुः सीम्निज्ञानार्थं निखात इत्यर्थः । संयोगोऽत्र योगः । कर्मयोगेकिं वेतनेन धान्यं लु-

**बहूनां क्रोशतो गतश्चौरः । बहुषु साधुषु वदत्स्वपि स्वयमनार्यो यात्यसाधुमार्गेण मातापित्रो रुदतोः प्रव्रजति पुत्रः । अन्योक्ते प्रथमा * ५६४ ॥ यदिदं कार्य्यत्वाद्यन्येनाख्यातेन कृता चोक्तं भवति तदा प्रथमा प्रयोक्त-**

नाति । विषयेचेति क्वचित्कोत्रायुक्तः पाठः विषयस्याधिकरणत्वात् । षष्ठीसप्तम्याविति । न विद्यते आदरो यस्याः सानादरा क्रोशनादिक्रिया साऽस्मिन्नस्तीत्यनादरः मत्वर्थीयाकारवाच्यः क्रियावान् ततः षष्ठीसप्तम्यौ वाच्ये इत्यर्थः । बहूनामिति । तेषां क्रोशनमनादृत्य गत इत्यर्थः । अत्रानाद्रियमाणक्रोशनक्रियावतो बहुशब्दात्षष्ठी जाता । एवं बहुषु क्रोशत्सु गत इति सप्तम्यपि । बहुष्विति । बहूनां साधूनां वचोऽनादृत्याऽनार्योऽसाधुमार्गेण स्वयं यातीत्यर्थः । एवं बहूनां साधूनां वदतामपि स्वयमनार्यो यात्यसाधुमार्गेणेति । मातापित्रोरिति । तद्रोदनमनादृत्य पुत्रः प्रव्रज्यं करोतीत्यर्थः । इदंतु षष्ठीसप्तम्योः समम् । अन्योक्ते । वचिरत्र प्रतिपादनार्थः । अन्यैरुक्तं यत्सन्निहितं कर्तृकर्मादि । कर्त्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणे इत्याहुः कारकाणि षडितिषड्विधं कारकं विभक्तयोपि तदन्योक्तं तत्रान्योक्ते अन्यशब्देनात्रातिक्रान्तकारकविभक्तिव्यतिरिक्ताःकृदाख्यातसमासतद्धिता गृह्यन्ते इति सर्वं मत्वाह यदिदमित्यादि । आदिना कर्त्रादीनां ग्रहणं चात्समासतद्धितयोर्ग्रहणम्, घटइति । अत्र करोतेराङ्कुवि कर्मणि आत्मनेपदंते यक्चतुर्ष्विति यक् अयकीर्तिं रिङादेशः कित्त्वान्न गुणः तत्र तेइत्याख्यातेनोक्तत्वाद् घटे कर्मणि प्रथमाजाता । एवं कार्यइति । ऋहसान्ताद्ण्यण्कृतोक्ते कटे कर्मण्यपि समासोक्ते प्राप्तानन्दःतद्धितोक्ते कुङ्कुमेन रक्तं कौङ्कुमम् । उक्ते किं कटं करोति अन्यग्रहणं किं कटंकरोति भीष्ममुदारं दर्शनीयं कटमिति द्वितीयोक्ते भीष्मादिकर्मणि मा भूत् । ननु घटः क्रियत इत्यादावाख्यातादिभिः कर्मादीनामुक्तत्वादेव द्वितीयादयो न भविष्यन्ति पटुगुप्तावित्यत्रद्वन्द्वेनोक्तार्थत्वाच्चशब्दवत् ततश्च लिङ्गार्थत्वाल्लिङ्गार्थ इत्येव प्रथमा स्यादिति गतमन्योक्तप्रथमया, मवम् इह स्वार्थद्रव्यलिङ्गात्मकस्त्रिको नामार्थइति पक्षे कर्मादिवदेकत्वादिसंख्याऽपि विभक्त्यर्थः । तत्रकर्मादयो विशेषणम् एकत्वादयो विशेष्याः कर्मणि यदेकत्वादि तत्र द्वितीयैकवचनादीति तत्र कृतः कट इत्यादिकर्मादिषूक्ते-

ष्या । घटः क्रियते कटः कार्य्यः । छन्दसि स्यादिः सर्व्वत्र ॥ दध्ना जुहोति पुनन्तु ब्रह्मणस्पतिः व्रजतीर्विरेजुः । इति कारकप्रक्रिया ॥ * ॥ अथाऽर्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते । समासश्चान्वये नाम्नाम् * ३०८८ ॥

अपि प्रधानभूतसंख्याभिधायकद्वितीयादयः स्युरेवेति । एवमपि लिङ्गार्थप्रथमाऽवकाशत्वाद्द्वितीयादयो न भविष्यन्ति । यदि कृतः कट इत्यादावपि द्वितीयादयः स्युः क्वेदानीं लिङ्गार्थप्रथमा स्यात् । नच वाच्यमेवं कटं करोतीत्यादावपि प्रथमाप्रसङ्गःअत्र कटशब्देनैव कर्मशक्तिमतोर्थस्य प्रतीतेः लिङ्गार्थादधिकार्थत्वात् कृतः कट इत्यत्र तु कटस्य कृतशब्दस्य संनिधौ कर्मताप्रतीतेरपि वाक्यार्थत्वात् लिङ्गार्थादनधिकार्थत्वं नच वृक्षइत्यादावकारकेषु प्रथमावकाशः तत्राप्यस्तीतिप्रतीतेः कर्तृत्वात्तृतीयाप्रसङ्गात् यत्र तर्हि विशेषणान्तरनिवृत्तौ तात्पर्यं नक्रियासंबन्धे यथा-राज्ञोयं पुरुषो न देवदत्तस्येति तत्र प्रथमावकाशः अस्त्वनुमता एवैवं कृतः कट इत्यादौद्वितीयादयः किं परत्वादप्यत्र द्वितीयादयः प्राप्नुवन्ति । अन्यच्च कर्तव्यः कटः इत्यत्र कृद्योगे सर्वथा कर्तृकार्ययोरिति षष्ठीस्यादित्यन्योक्तेः प्रथमैषारभ्यते छन्दसीति । सर्वत्र सर्वेष्वऽपि कारकेषु सर्वेष्वपिवचनेष्वविशेषेण वेदे सर्वा विभक्तयो वाच्या इत्यर्थः । दध्नाजुहोतीत्यादि । अत्र होः कर्मणि तृतीया सर्वत्र वचनमत्र बहुलार्थं तेन दधिजुहोतीत्यपि । ब्रह्मणस्पतिरिति । जसःस्थानेसिः वाचस्पत्यादित्वात्सत्वम् व्रजतीरिति । जसः स्थाने शस् नुमपि छान्दसत्वादनित्यत्वाद्वा न एवं धुरि दक्षिणायाः ङेङस् न तावद्ब्राह्मणान्निन्दामि अमो ङसिः इत्यादयोऽन्येपि प्रयोगादत्रोह्याः ॥ इतीति कारकाणां प्रकरणं समाप्तमित्यर्थः । श्रीजा० व्याख्याकारककाण्डसातिममला सिद्धान्तरत्नावली ॥ समाप्ताकारकप्रक्रिया ॥

अथेति । पदानामित्यनेन नाममात्रस्य वाक्यस्य च न समास इति सूचयति । अर्थवद्विभक्तीत्यनेन कारकविभक्त्यन्तानां समासो न प्रायेणोपपदविभक्त्यन्तानामिति च । एतच्चानन्तरमेव स्फुटयिष्यामः । समास । अत्र च समास इति योगविभागः कर्तव्यः संज्ञार्थः यानित ऊर्ध्वमनुक्रमिष्यामः समाससंज्ञास्ते वेदितव्याः ततश्चान्वये नाम्नामिति द्वितीयो योगः । तत्र च समास इत्यनुवर्तते अयं च योगः परिभाषा समासविधिनियमार्थेति सर्वं मत्वाह नाम्नामित्यादि । भ-

नाम्नामन्वयो योग्यत्वे सत्येव समासो भवति चशब्दा-त्तद्धितोऽपि ततो भार्य्यापुरुषस्येत्यादौ न भवति ।

वतीति । वक्ष्यमाण इति शेषः । अन्वयशब्दार्थमग्र एव वक्ष्यामः । यद्यप्यत्र नाम्ना-मित्युच्यतेतथापिप्रकृतिमात्रस्यार्थप्रत्यायनाशक्तत्वेनाप्रयोगात्समासविधानानुपपत्तेः । पदमिह नाम्ना लक्ष्यते अन्वयानुपपत्तेश्च अन्वयोनामाकाङ्क्षायोग्यतासंनिधिमतां पदानां परस्परं संबन्धः । तथाहि राज्ञः पुरुष इति वाक्ये राज्ञइति पदमनियतसंब-न्ध्यपेक्षयोद्भूतसंबन्धविशेषणभूतमर्थमाचष्टे । स्वसन्निहितं योग्यं च पुरुषमपेक्षते ममायमिति । तथा पुरुषपदेनापि स्वनिष्ठः पुरुषोऽभिधीयमानः स्वसन्निहितं योग्यं च राजानमवच्छेदकत्वेनापेक्षते अहमस्येति तदेतद्वाक्ये व्यपेक्षालक्षणं सामर्थ्यं समासे पुनरेकार्थीभावलक्षणम् । तथाहि राजपुरुष इत्यत्र राजपदं राजानमभिधायन-तावत्येव पर्यवस्यति किन्तु पुरुषमप्याचष्टे। अत एवात्र राज्ञः पुरुषोऽश्वश्चेति वाक्य-वद्राजपुरुषोश्वश्चेति द्वाभ्यां संबन्धोन भवति तथा राज्ञः पुरुषो देवदत्तस्यचेतिवाक्य-वद्राजपुरुषो देवदत्तस्य चेत्यपि न भवति । तथा ऋद्धस्य राज्ञः पुरुषइतिवद्राजपु-रुष ऋद्धस्येतिविशेषणसंबन्धोपि न भवति तथा राज्ञः पुरुष इति वाक्यवद्राजपुरुष इतिविभक्त्यलोपोन भवति । ननुसमासेविभक्तिलोपस्तुसमासप्रत्यययोरिति विधाना-द्भवति न समासेद्वयोरेकस्मिन्विशिष्टेर्थे कृते पृथगर्थाभावात् स्वाभाविक्येव विभक्ति-निवृत्ती राजाश्वइत्यादौ तद्वद्भावेन पदान्तेन लोपाद्यर्थं लक्षणेनान्वाख्यायते पृथग-र्थाभावे तु पृथग्विभक्तिर्न भवति । यथावर्णेषु तथा राज्ञ ऋद्धस्य पुरुषेपिवाक्यव्य-वधानमपि राजपुरुषइत्यत्र समासे न भवति एकार्थतया पुरुषपदे वर्णान्तरस्येव तथा राज्ञः पुरुषः पुरुषो वा राज्ञ इति वाक्यवत् प्रयोगानियमोपि राजपुरुष इति समासे न भवति एकार्थीभावात् पुरुषपदे वर्णानामिव पृथक्संख्याविशेषेपि पृथग-र्थेष्वेव दृश्यते । राज्ञः राज्ञो राज्ञोवापुरुष इतिसमासे पुनरेकार्थतया पृथगर्थाभावा-भेदैकत्वसंख्याविशेषेपिपृथगर्थेष्वेव दृश्यते । राज्ञः राज्ञो राज्ञांवापुरुष इतिसमासे पुनरेकार्थतया पृथगर्थाभावादभेदैकत्वसंख्यावगम्यते राजपुरुष इति । तथाहि समासे संख्याविशेषप्रतिपादिकाया विभक्तेर्निवृत्तौ अनुपात्तसंख्याविशेषमेकत्वादिष्वनुगतं संख्यासामान्यमभेदैकत्वसंख्यैव प्रतीयते । यत्र त्वर्थप्रकरणादिकं प्रमाणं तत्र स्यादेव द्विवचनबहुवचनान्तस्याऽपि समासः यथा मुद्गैः क्रीतं मुद्गक्रीतं नह्येकेन

१ अविभक्तिनामेति पारिभाषिकंतु नैव सूत्रद्वयज्ञापकात् । तज्ज्ञापकंतु इत्थंवर्णनीयम् इह विभौयदि पारिभाषिकं विगृह्येत तर्हि विभक्तेरभावात् लुगेव कस्य विदध्यात् ।

सच षड्विधः । अव्ययीभावस्तत्पुरुषो द्वन्द्वो बहुव्रीहिः कर्म्मधारयो द्विगुश्चेति । पूर्वपदप्रधानोऽव्ययी-

पुद्रेन क्रयः संभवति तथा युष्मत्पुत्र इत्यादौ त्वदादेशाभावः द्विपुत्रइत्यादौ द्व्यादीनां प्रयोगान्यथानुपपत्तिः। तदेवं सर्वत्र वृत्तौ प्रमाणमन्तराभावेऽभेदैकत्वसंख्यैव गम्यत इति स्थितम् । तथाचमहाभाष्येद्विबहुष्वसमासः द्विवचनबहुवचनान्तानामसमास इति तथा तिष्ठति ब्राह्मणस्य कंबलइति वाक्यवत्तिष्ठतिब्राह्मणकम्बलइति संबोधनषष्ठी समासयोरन्यतरसन्देहसत्त्वेन व्यक्तयाभिधानं न भवति । तथा राज्ञो गौश्चाश्वश्च पुरुषश्चेति वाक्यवत्समासेऐकार्थ्यात् भेदनिबन्धनस्य समुच्चयस्य द्योत्यत्वांऽभावाच्च शब्दो न प्रयुज्यते । राजगवाश्वपुरुषा इति तथाचेदंभाष्येपि वृत्तिवाक्ययोरर्थभेदमुदिश्योक्तं सुब्लोपो व्यवधानं यथेष्टमन्तरेणाऽपिसंबन्धः स्वरभेदः संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं च योगश्चेति तदेवं वाक्ये व्यपेक्षालक्षणं सामर्थ्यं समासे पुनरेकार्थीभाव इति भेदः तदेतत्सामर्थ्यं पदानामेव भवति न नाममात्रस्येति सूत्रे नामशब्दोऽन्वयशब्दसान्निध्यात् पदं लक्षयति समासइति महासंज्ञाकरणस्य पदद्वयं समस्यते यस्मिन् स समास इत्यन्वर्थसंज्ञाविज्ञानार्थत्वात्तथाऽन्वयोपपत्तेश्च पदद्वयस्यैव समासे सिद्धेनाम्नामिति बहुवचनं क्वचिद् बहूनामपि पदानां स समासप्रतिपत्त्यर्थं नीलोज्ज्वलवपुरिति । चशब्दादिति तत्र समासश्चेति चशब्दः स्त्रीप्रत्ययव्यवहितस्याऽपि तद्धितस्याऽनुकर्षणार्थः । तेन तद्धितोपि सामर्थ्ये सत्येवस्यादिति वक्ष्यमुपगोरपत्यं चैत्रस्येत्यत्रोपगुशब्दादपत्येऽण्न भवति । ननुनाम्नां समास इत्येवास्तु सूत्रं मा भूदन्वयग्रहणमित्याशङ्क्याहततइति । यस्मान्नाम्नामन्वये सत्येव समासस्तस्माद्देवदत्तस्य भार्या पुरुषस्य गृहमित्यत्र भार्यापुरुषयोर्मिथोऽन्वयाभावान्न समास इत्यर्थः । यद्येवं कथं देवदत्तस्य गुरुकुलमित्यसापेक्षस्य समासः । मैवं समासोऽत्र सापेक्षः गुरुद्वारकः कुलेन संबन्ध इत्यर्थात् गुरुणाऽपि देवदत्तसंबन्धो भवति । तथोक्तं, समुदायेन संबन्धो येषां गुरुकुलादिना । संसृष्टावयवास्तेऽपि युज्यन्ते तद्वता सहेति। सचेति। प्रतिपत्तिगौरवादविशेषाच्च न चतुर्विध इति भावः। तदेव षाड्विध्यमाह अव्ययीभावइति इहानव्ययमव्ययं भवत्यस्मिन् समासे सोऽव्ययीभाव इत्यन्वर्थसंज्ञार्थत्वान्महासंज्ञाकरणात्सिद्धान्तम र्थमाह पूर्वेति ।

भावः द्विगुतत्पुरुषौ परपदप्रधानौ द्वन्द्वकर्म्मधारयौ चोभयपदप्रधानौ बहुव्रीहिरन्यपदप्रधानः तस्य क्रियाभिसंबन्धादुभयपदप्रधानो बलवान् । ऐकपद्यमैकस्वर्यमैकविभक्तिकत्वं च समासप्रयोजनम् । अधिस्त्रीतिस्थिते स्त्रीशब्दाद् द्वितीयैकवचनेऽम् स्त्रियमधिकृत्य भवतीति विग्रहे अन्वययोग्यार्थसमर्थकः पदसमु-

पूर्वपदशब्देन तदर्थो लक्ष्यते पूर्वपदार्थप्रधान इत्यर्थः । एवं हि अव्ययानव्ययसमुदायोऽत्राव्ययधर्मान्लभत इति भावः । अतएव समृद्धा मद्राः सुमद्रा इत्यादावुत्तरपदार्थप्राधान्येऽव्ययीभावो नातिप्रसज्जतिउन्मत्तगङ्गादावव्ययीभावं तु तल्लक्षणएव वक्ष्यामः । अथवा पूर्वाचार्यसंज्ञा अव्ययीभावादयस्तदाश्रयणमिह तदीयोपाधेरपि परिग्रहार्थमित्यत आह पूर्वेत्यादि । इहापि पूर्वपदादिशब्दैस्तदर्था लक्ष्यन्ते। कर्मधारयस्योभयपदप्राधान्यं तु विशेषणविशेष्यभावे कामचारात् । तस्येति । अत्र तच्छब्देन पूर्वोत्तरोभयान्यपदार्थः तत्रायं हेतुः क्रियाभिसंबन्धादिति उपकुम्भमित्यादौ हिअस्तीत्यादिक्रियायोगउपार्थस्यैवनकुम्भार्थस्येत्यव्ययीभावे पूर्वपदार्थस्यप्राधान्यमिति पूर्वाचार्याणामभिप्रायः । एवंतत्पुरुषादावपियोज्यम् । उभयेति । परत्वादन्तरङ्गत्वाच्चेति शेषः । ऐकपद्यमिति । एकपदस्य भाव ऐकपद्यम् एकस्वरस्य भाव ऐकस्वर्यम् । उभयत्रापि भावे यणिं आदिवृद्धिः । यस्य लोपइत्यलोपः एकविभक्तेर्भाव ऐकविभक्तित्वम् एतानि समासस्य प्रयोजनानि वाक्ये हि राज्ञः पुरुषः इतिचद्वे पदस्वरावपि द्वावाद्युदात्तौ षष्ठीप्रथमे च द्वे विभक्ती समासे पुनः पदस्वरविभक्तीनामैक्यमेव राजपुरुष इति । नन्वेकविभक्तित्वमित्येतावतैव ऐकपद्यमपि सिद्धं विभक्त्यन्तस्यैव पदत्वात्।एवं तर्हि अलुक्समासे एकविभक्तित्वाभावेपि पदैक्यमस्तीति प्रतिपाद्यते चशब्दोऽनुक्तस्यापि पूर्वनिपातसमासान्तप्रत्ययादेः प्रयोजनस्य सूचनार्थः । अधिस्त्रीति । समासवाक्यार्थमधिस्त्रीति समर्थे पदद्वये स्थिते सतीत्यर्थः । स्त्रीशब्दादिति । अध्यर्थस्याऽधिकृत्येत्यस्य योगे स्त्रीशब्दस्य कर्मत्वादिति भावः । स्त्रियमधिकृत्येति । अधिस्त्रीत्यव्ययीभावसमासस्याऽर्थबोधके स्त्रियमधिकृत्येति वाक्ये सतीत्यर्थः ।

दाद्यो विग्रहो वाक्यमिति यावत्। कृतेसमासेऽव्ययस्य पूर्व्वनिपातो वक्तव्यः। पूर्व्वेऽव्ययेऽव्ययीभावः ॥ ३१२॥ अव्यये पूर्व्वपदे सति योऽन्वयः सोऽव्ययीभावसंज्ञकः समासो भवति इति समाससंज्ञायाम्। समासप्रत्यययोः ॥ २५१॥ समासे वर्तमानाया विभक्तेः प्रत्यये च परे लुग्भवति इत्यमो लुक् नामसञ्ज्ञायां स्यादि

ननु कथमयं विग्रहः यतो नित्यसमासोऽव्ययीभावः। नित्यसमासश्चाऽविग्रहः। तथाचवक्ष्यति अविग्रहोनित्यसमास इति सत्यम्। अस्वपदविग्रहोपि नित्यसमासो भवति यत्तत्रैव वक्ष्यति अन्यस्त्वस्वपदविग्रहोऽपि अत एव स्त्रियमधिकृत्येति विगृहीतम्। अन्यथा अधिशब्दस्याऽधिकरणवचनत्वात्तद्योगे स्त्रीशब्दात्सप्तम्येव स्यादिति स्त्रीष्वधीति व्यग्रहीष्यत्। अव्ययेति। अन्यानपेक्षत्वे सति परस्परसापेक्षोन्वययोग्योऽर्थः। तस्य समर्थको यः पदसंघातः स विग्रहशब्दवाच्यः। वाक्यमितियावदिति। विग्रहो वाक्यमित्यर्थान्तरमित्यर्थः। वाक्यलक्षणं तक्तं वाक्यपदीये, साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्। कर्मप्रधाने गुणवदेकार्थं वाक्यमुच्यते। पूर्वं अत्र समासश्चान्वयेनाम्नामित्यस्तीति मत्वाह अव्यये पूर्वपदे सति योऽन्वय इति। नाम्नामिति शेषः। ननुपरेऽव्यव्यये नाम्नामन्वयस्योपपत्तेः कुतोऽव्ययस्यपूर्वनिपातः उच्यते। इदं पूर्वग्रहणं लिङ्गं भवत्यव्ययीभावे अव्ययंप्रागिति ततश्च कृते समास इत्येतदस्यैव विवरणं तत्र कृते कर्तुमारब्धइत्यादि कर्मणि क्तो व्याख्येयः। ननून्मत्तगङ्गं त्रियमुनमित्यादौ कथमव्ययीभावः उच्यते। इहाव्ययीभाव इति योगो विभज्यते तत्र चान्वयेनाम्नामित्यनुवर्तते ततश्चायमर्थः नाम्नामन्वयेसतिअव्ययीभावः समासो भवति। उन्मत्तगङ्गं सर्वोप्यनव्ययपूर्वपदोऽव्ययीभाव इहोदाहरणं योगविभागस्येष्टसिद्ध्यर्थत्वान्नातिप्रसङ्गः योगविभागसामर्थ्यादुन्मत्तगङ्गादावपूर्वपदप्रधानोऽव्ययीभावो भवतीति। समासेति। अनेन समासस्याऽव्ययीभावसंज्ञायामित्यर्थः। समास इहाव्ययादित्यतो विभक्तिलुगनुवर्तते समासश्चप्रत्ययश्चतौ तयोः एकैवात्र सप्तमी विषयभेदेन संबध्यते इत्याह समासे वर्तमानायाविभक्तेः प्रत्यये चपरइति। समासेन्तर्गतायाविभक्तेर्लुग्भवति।

विभक्तिः अधि स्त्रीसीति स्थिते। स नपुंसकम् ❀ ॥२५६॥ सोऽव्ययीभावो नपुंसकलिङ्गो भवति नपुंसकत्वाद् ह्रस्वत्वम्। अव्ययीभावात् ❀ ॥ २५३ ॥ अव्ययीभावात्परस्या विभक्तेर्लुग् भवति अधिस्त्रि गृहकार्य्यम्। रायमतिक्रान्तमतिरि कुलम्। नावमतिक्रान्तमतिनु जलम्। ह्रस्वादेशे संध्यक्षराणामिकारोकारौ वक्तव्यौ ❀ ॥

प्रत्यये च परे या विभक्तिस्तस्या लुग्भवतीत्यर्थः। इत्यमोलुगिति। बालावबोधाय विग्रहानुरूपमेतदुक्तम्। लुक्तु सप्तम्याः सप्तम्यन्तस्य स्त्रीशब्दस्य समस्यमानत्वात्। तथा च विग्रहेऽपि काशिकायां सप्तम्यन्तएवस्त्रीशब्दो दर्शितः स्त्रीष्वधिकृत्य कथा प्रवर्तत इति अधेरव्ययस्याऽधिकरणक्रियार्थत्वात्तद्योगे स्त्रीशब्दस्य कर्मत्वाद्वितीयान्तः स्त्रीशब्दः समस्यत इत्यमो लुगित्यर्थः। नामसंज्ञायामिति। अधिस्त्रीशब्दस्य समाससंज्ञत्वात् कृत्तद्धितसमासाश्चेति नामसंज्ञायां तस्मात्स्यौजसिति स्यादयः। सन। अव्ययार्थप्रधानस्याव्ययवद्लिङ्गत्वे अन्यपदार्थप्रधानस्य उन्मत्तगङ्गादेरभिधेयवल्लिङ्गे प्राप्तेरमूवचनमिदम्। तत्र स इति तच्छब्दोऽव्ययीभावादित्यतोऽनुवृत्तस्याऽव्ययीभावशब्दस्य प्रथमान्ततां नपुंसकसामानाधिकरण्याय सम्पादयितुमित्यत आह। सोऽव्ययीभाव इति। ह्रस्वत्वमिति। नपुंसकस्येति। स्त्रीशब्दस्येति शेषः। अव्ययी। इहाव्ययादित्यतो विभक्तेर्लुगनुवर्तते इति मत्वाह। अव्ययीभावादित्यादि। नन्वव्ययीभाव इत्यन्वर्थसंज्ञयैवाव्ययत्वादव्ययादित्येवविभक्तिलुकः सिद्धत्वादनर्थकमेतदिति चेत् सत्यं, संज्ञानिबन्धनं तु कार्यं संज्ञाविधानमन्तरेण न सिद्ध्यतीत्यवश्यंलुगारब्धव्यः पूर्वाचार्यसंज्ञापक्षे तु नेयमाशंकाप्युदेति। अधिस्त्रि गृहकार्यमिति। गृहकार्यं स्त्रियमधिकृत्य भवतीत्यर्थः। इहाधीत्यव्ययस्य सप्तम्यन्तेन द्वितीयान्तेन वा स्त्रीशब्देनाऽन्वये पूर्वेऽव्यये इत्यव्ययीभावे समासे समासप्रत्ययोरिति विभक्तिलुकि पुनर्नामसंज्ञायां स्यादिषु सनपुंसकमिति क्लीबत्वान्नपुंसकस्येति स्त्रीशब्दस्य ह्रस्वे अव्ययीभावादिति सप्तविभक्तिलुकि लुकिनेति तन्निमित्तकार्याभावे सर्वत्राऽप्यधिस्त्रीति स्यादित्यर्थः। रायमतिक्रान्तमित्यादि। इहापि पूर्ववदतिशब्दस्य रैनौशब्दाभ्यामव्ययी-

**यथाऽसादृश्ये * ३१४ ॥ शक्तिमनतिक्रम्य करोतीति यथाशक्ति ॥ अतोमनतः * २५४ ॥ अकारान्तादव्ययीभावात्परस्या विभक्तेरम भवत्यतं वर्जयित्वा । कुम्भस्य समीपमुपकुम्भं वर्त्तते उपकुम्भं पश्य । वाटाङ्योः * २५५॥ टाङी-**

भावे लुकि पुनर्नामत्वात् स्यादिषु क्लीबत्वात् ह्रस्वत्वे लुकि चातिरि अतिनु सर्वत्र ज्ञेयम् । नन्वत्रैदौतोर्ह्रस्वत्वे कथमिदुतावेव जातावित्याशङ्क्याह । ह्रस्वादेशइति । एऐ ओऔ एषामित्यर्थः । यथा इह यथाशब्दस्याऽप्यव्ययत्वात् पूर्वेव्यय इत्येवाव्ययीभावसिद्धेः सादृश्यनिषेधार्थमस्य वक्तव्यस्यारम्भः । अतएवासादृश्य इत्यकारप्रश्लेषः असन्देहार्थं सादृश्ये यथेत्यनिर्देशाच्च योग्यतावीप्सापदार्थानतिवृत्तिशादृश्यानि यथार्थाः । तत्र योग्यतानामानुरूपता यथा रूपस्य योग्यं यथारूपम् वीप्सा नामपदार्थानां व्याप्तुमिच्छा यथा विष्णुं विष्णुं प्रति यथाविष्णु । पदार्थानतिक्रमः पदार्थानतिवृत्तिः तामुदाहरति । यथाशक्तीति । अनेनाऽत्र यथाशब्दस्य शक्तिशब्देन समासः अत्र च पूर्वेव्ययइत्यतः पूर्वग्रहणमव्ययीभावग्रहणं चानुवर्त्तते इति यथाशब्दस्य पूर्वत्वमव्ययीभावत्वाच्चाऽव्ययीभावादिति विभक्तेर्लुक् । असादृश्ये किं यथा हरिस्तथा हरः । अतो । अमयं लुगपवादः नाप्राप्ते लुकि आरभ्यमाणत्वात् अत इति सामर्थ्यात्तदन्तग्रहणं विभक्तेरितिस्थान्यनुवर्तते । अनत इति न तपराकारग्रहणमाद्यस्य वैयर्थ्यात् किं तर्हि ङसेरादेशस्य न अत् अनत्तस्याऽनत इति प्रसज्यप्रतिषेधोयमिति सर्वमालोच्याह । अकारान्तादित्यादि । अमिति । पञ्चमीं वर्जयित्वेत्यर्थः । अतोहि पञ्चम्युपलक्ष्यते । प्रथमादीनां विभक्तीनाममादेशविधानात् पञ्चम्याएव निषेधो युक्त इति । अत एव वक्ष्यति अनतइति विशेषणात् पञ्चम्या अन्नभवतीति । यथा चाहभगवान् पाणिनिः नाव्ययीभावादतोम्त्वपञ्चम्याइति । ननु चामप्रवृत्तेः पूर्वं विभक्तिलुका बाधितत्वात् ङसेरदादेश एव नास्ति नितरांनिषेधः नतमामुपलक्षणत्वम् । एवं तर्हीदमेवाद्ग्रहणं लिङ्गम् पञ्चम्या लुगभावस्य सूत्रे वा अत इति योगविभागः कर्तव्यः तत्राऽलुक् क्वचिद्दित्यतोऽलुगनुवर्तते । ततश्चाऽदन्तादव्ययीभावात् परस्या विभक्तेर्लुग्भवतीत्यर्थः । तेनाऽत्र लुक् न प्रवर्तते अतएव चेतरसूत्रे विकल्पादमामुक्तेऽपि पक्षे लुग्न भवति ततोऽमनतइत्यपरो योगः तत्राऽत इति पूर्वयोगादनुवर्त्तते ततो

त्येतयोर्वाम्भवति । उपकुम्भं कृतम् उपकुम्भेन कृतम् उपकुम्भं देहि उपकुम्भं निधेहि उपकुम्भे निधेहि ॥ अवधारणार्थे यावति च ॐ ३१३ ॥ यावन्त्यमत्राणि तावतो ब्राह्मणानामन्त्रयस्वेति यावदमत्रम् । अमादौ तत्पुरु-

मूलोक्त एव तस्यार्थः । नन्वेवमपीतरेतराश्रयत्वम् आमि निषिद्धे अदादेशः सत्यदादेशे अनतइत्यमूनिषेध इति नैषदोषः भाविनोऽतो ग्रहणात् अथवा लुकि निषिद्धे अपवादापवादे उत्सर्गस्यैव प्रवृत्तिरिति । ङसेरति कृतेऽदादेशस्यैवप्राप्तस्यामो निषेधः अनतइत्यद्ग्रहणस्य पञ्चम्युपलक्षणार्थत्वाद्वानेदमाशङ्क्यं ङसेरेवत्वमूनिषेधइति । उपकुम्भमिति । प्राग्वदव्ययीभावसंज्ञादि सेरत्राऽमादेशेऽमूशसोरित्यल्लोपः एवमौजसोरप्यमुदाहार्यम् । पश्येति । अत्र दृशिना अमौशसामपि उपकुम्भमित्यस्य कर्मता दर्शिता । वाटा । टाश्चङिश्च टाङी तयोः टाइत्यस्य प्राथम्यादिदन्तादपि ङेः पूर्वत्वं सौत्रत्वान्निर्देशस्य वा । टाङीत्येतयोरिति । अकारान्तादव्ययीभावात् परयोस्तृतीयासप्तम्योरित्यर्थः । ननु सूत्रे टाङिग्रहणमेवास्ति तत्कुतोयमर्थः तृतीयासप्तम्योरिति उच्यते इहाव्ययाद्विभक्तेरित्यनुवर्तते सा च स्थानषष्ठी टाङ्योरिति संबन्धसामान्ये षष्ठी ततश्च टाङ्योः संबन्धिन्या विभक्तेरित्यर्थः । सा चार्थात्तृतीया सप्तमी च । तथा चाह भगवान्पाणिनिः तृतीया सप्तम्योर्बहुलमिति । वाशब्दोत्र बहुलार्थः तेन मद्राणां समृद्धिः सुमद्रम् । उन्मत्ता गङ्गा यत्र स उन्मत्तगङ्गं देश इत्यादौ सप्तम्या नित्यमम्भावः । उपकुम्भं कृतमिति । अत्र टाभ्यांभिसामम्भावं कृतमित्यनेन द्योतयति । उपकुम्भेनेति । अमोऽभावपक्षेऽत्र टेन एवमुपकुम्भाभ्यां उपकुम्भैरित्यपि। उपकुम्भं देहीति । अत्र ङेभ्यांभ्यसाममं धेहीति सूचयति । उपकुम्भादानयेति । अत्राऽऽनयेति पञ्चमीसूचनार्थमेवं भ्यांभ्यसोरप्युपकुम्भाभ्यामुपकुम्भेभ्य इति ज्ञेयम्। अत्राऽमूलुकोरभावस्त्वतोम् तत इत्यत्रैव प्रत्यपादि । उपकुम्भदेश इति । ङसोसामामत्राऽमादेशसूचनार्थं देशशब्दः । उपकुम्भं निधेहीति । अत्र ङ्योस्सुपाममूनिधेहीति सूचयति । उपकुम्भे निधेहीति । अत्र पक्षे वा टाङ्योरिति नाऽम् एवमोस्सुपोरप्युपकुम्भयोः उपकुम्भेष्विति ज्ञेयम्। लुगभावस्तु अतोमनत इत्यत्रोक्तःसूत्रकारस्तु अव्ययीभावस्याऽसत्त्ववचनस्य संख्याविशेषयोगाभावात् द्विवचनबहुवचनानुपपत्तिं मन्यमानः

षः ॥ ३१५ ॥ द्वितीयाद्यंतपूर्वपदे सति तत्पुरुषसञ्ज्ञकः समासो भवति । ग्रामप्राप्तो दात्रच्छिन्नम् यूपायदारु वृकभयम राजपुरुषः अक्षशौण्डः । क्वचिदमाद्यन्तस्य परत्वम् ॥ भूतपूर्व आहिताग्निः समासे क्वचिदैकपद्यं णत्व-

सप्तानां विभक्तीनामेकवचनोदाहरणाभिप्रायः । अनतः टाङ्योरिति वदन् कैयटहरदत्तावनुसरति यथाह कैयटः अव्ययीभावादप्येकवचनमात्रमेवोत्पद्यते तावतैव तृतीयासप्तम्योर्बहुलमित्यस्योपपादनात् । अवधारणेति । यावच्छब्द उपपदे सति उत्तरपदेनाऽव्ययेऽव्ययीभावः समासः स्यादवधारणेऽर्थे इति वक्तव्यमित्यर्थः । अवधारणमियत्तावच्छेदः । यद्यपि यावदित्यव्ययस्यावधारणे पूर्वेऽव्यय इत्यैवसमासः सिद्धस्तथाप्यार्थनियमार्थं तद्धितान्तयावच्छब्दस्य समासार्थंच वक्तव्यारम्भः । यावन्तीति । यावद्मत्रमिति । यावदित्यव्ययस्याऽव्ययीभावः स च नित्यसमास इति तद्धितान्तयावच्छब्देनाऽस्वपदविग्रहो दर्शितः । प्रक्रिया तु पूर्ववत् । अवधारणे किं यावद्दत्तं तावद्भुक्तं नावधारयामि किम्मया भुक्तमिति । इत्यव्ययीभावः । अमादौ । अमत्र द्वितीयैकवचनं गृह्यते आदिशब्दस्य व्यवस्थार्थत्वात् अमादिर्यस्य स अमादिः सुबन्तासर्वापि विभक्तिः तत्रामादौ जातावेकवचनमिदम् । इह च पूर्वेऽव्यय इत्यतः पूर्वइत्यनुवर्तते । तत्र विभक्तिमात्रस्य पूर्वत्वासंभवात् प्रत्ययग्रहणपरिभाषया वाऽमाद्यन्तमिहामादिशब्देन गृह्यते इत्याह । द्वितीयाद्यन्तइत्यादि । नाम्नामन्वय इति शेषः । समासश्चान्वये नाम्नामिति हि परिभाषैकदेशस्थाऽपि मध्यदीपिकान्यायेनाऽत्राप्युपतिष्ठते इति पश्यति ग्रामं प्राप्तो ग्राममित्यादौ न समासः । ग्रामं प्राप्तइत्यादिषु वाक्येषु सर्वत्राप्यनेन तत्पुरुषे कृते समासप्रत्यययोरित्यमादि लुकि पुनर्नामत्वात् स्यादिषु कृतायामेवं प्रक्रियायां ग्रामप्राप्त इत्यादीनि सर्वविभक्त्युदाहरणानि स्युरित्यर्थः । मासेन पूर्वइत्यादौ तु सहादित्वात् पूर्वादियोगे तृतीयायामनेनैवसमासे मासपूर्व इत्यादिज्ञेयम् । तीर्थध्वाङ्क्ष इव तीर्थध्वाङ्क्षइत्यादौ निन्दार्थविशेषेऽप्यनेनैवतत्पुरुषो ज्ञेयः । इह समासश्चेत्यतश्चोनुवर्तते सच निपातत्वात् विकल्पार्थोपि तेन पक्षे ग्रामं प्राप्तः दात्रेण च्छिन्नमित्यादौ वाक्यमपि भवति । अयं च द्वन्द्वादावपि विकल्पो ज्ञेयः । कचिदिति । अमादावित्यत्र पूर्वइत्यनुवृत्ते द्वि-

हेतुः ॥ आम्रवणम् त्रिनयनः । पानस्य वा *११६ ॥ सुरापाणम् सुरापानम् । नञि * ३१३॥ नञि पूर्वपदे सति तत्पुरुषसंज्ञकः समासो भवति ॥ ना * ३२२ ॥ समासे सति नञोऽकारादेशो भवति । अब्राह्मणः ॥ अम्स्वरे * ३२३ ॥ समासे सति नञोऽनादेशो भवति स्वरे परे । नाकादिवर्जम् । अ

मीयाद्यन्तस्याऽवश्यं पूर्वप्रयोगे प्राप्ते परप्रयोगार्थमिदं क्वचिदिति प्रयोगमनुमत्वेत्यर्थः । भूतपूर्वइति । पूर्वस्मिन्काले भूत इति विग्रहेऽमादाविति तत्पुरुषे पूर्वशब्दस्य सप्तम्यन्तस्यापि परनिपातः एवं दन्तानां राजा राजदन्तः वनस्याग्रे अग्रेवणमेत्यादि ज्ञेयम् । इहामाद्यन्तपदमन्यत्रापि पूर्वप्रयोगार्हपदस्योपलक्षणमिति मन्वानो बहुव्रीहिमुदाहरति । आहिताग्निरिति । अत्राहितोग्निरनेनेति बहुव्रीहौ आहितशब्दस्य विशेषणत्वात् । बहुव्रीहौ विशेषणसप्तम्यन्तयोरिति पूर्वनिपातार्हस्य परनिपातेऽग्न्याहित इति भवति स च क्वचिदित्याहिताग्निरित्यपि स्यादित्यर्थः । समास इति । णत्वस्य हेतुर्निमित्तं षुर्नोणोऽनन्ते अवकुप्वन्तरेपीत्याभ्यां णत्वं निमित्ते सति प्रापयतीत्यर्थः । अन्तर्वर्तिन्या विभक्त्याभिन्नपदत्वंतुसदर्थाश्रयणान्न णत्वं विहन्तीति भावः । भिन्नपदत्वेणत्वाभावस्त्ववयवान्तरेपीत्यत्रप्रतिपादितएव । शरवणमित्यादिशराणां वनमाम्राणां वनमिति तत्पुरुषे षष्ठ्या लुकि पुनर्विभक्तावैकपद्येऽवकुप्विति णत्वम् त्रिनयन इति । त्रीणि नयनान्यस्येति बहुव्रीहिणा पदैक्येपि क्वाचित्कत्वान्नेह णत्वम् । क्वचिच्छब्दार्थं विवृणोति । पानस्येति । णत्वमितिशेषः । सुरापाणमिति । सुरायाः पानमिति तत्पुरुषात्पदैक्येपि पाक्षिकं णत्वम् । एवं माषान् वपत इति माषवापिणौ माषवापिनावित्यादि । एतच्च सर्वमवकुप्वन्तरेऽपीत्यपिशब्दाल्लभ्यते स हि निपातत्वादनेकार्थ इति । नञि ञकारो ना इत्यत्र विशेषणार्थः इह पूर्वेऽव्यय इत्यतः पूर्व इति नञो विशेषणमनुवर्तते अमादावित्यतस्तत्पुरुष इति चेति मत्वाह । नञिपूर्वेत्यादि । समासश्चान्वय इत्यनुवृत्तेरन्वये सतीति शेषः । नञ्समासोयमुत्तरपदार्थप्रधानस्तत्पुरुषत्वात् पूर्वपदार्थप्राधान्येत्वव्ययीभावः स्यात् । अमक्षिकमिति । अन्यपदार्थप्राधान्येपि बहुव्रीहिः स्यात् । अब्राह्मणको देश इति । ना । न अ इतिच्छेदः । अत्र न इति नकाराकारयोर्लुप्तषष्ठीद्विवचनान्तो निर्देशः ततश्च नकाराकारयोः स्थानेऽयमादेशः स्यात् अन्यथा त्वकार-

१ पूर्वस्मिन् प्रतिपदोक्तोपि तत्पुरुषो नैवाश्रीयते अविघ्नमविघ्न इत्यादौ समासद्वयेऽपि आदेशदर्शनात् ।

श्वादन्योऽनश्वः धर्म्मविरुद्धोऽधर्म्मः । ग्रहणस्याऽभावोऽग्रहणम् । तदन्यतद्विरुद्धतद्भावा नञर्थाः । चार्थे द्वन्द्वः ॥ ३७ ॥ समुच्चयाऽन्वाचयेतरेतरयोगसमाहाराश्चार्थाः तत्रेश्वरं

स्याकारे प्रयोजनाभावादन्त्याभावे अन्त्यसदेशस्येति नकारमात्रस्याकारे सवर्णदीर्घे च आकारः । श्रूयतेऽत्रप्रमाणं ना इति निर्देशः अन्यथा नञोऽनुवृत्तेरादेशमेव निर्दिशेत् धनपतिरित्यादौ धनावयवस्य नस्यानर्थक्यादर्थवद्ग्रहणपरिभाषया नात्वं यामनपुत्र इत्यादौ च नप्रत्ययस्यार्थवत्त्वेपि नञीत्यनुवृत्तेर्नात्वम् अतएव च नभ्राजत इति नभ्राट् न क्रामतीति नक्रं नैकधा नात्राकमस्तीति नाकमित्यादिषु नाकारोऽनादेशश्च भवति । निषेधार्थनकारस्य समासत्वेन नञोऽभावात् सानुबन्धकस्य ग्रहणे निरनुबन्धकस्य ग्रहणायोगाच्च स्त्रैणार्थ इत्यत्र नञ् प्रत्ययस्य ञित्वं वृद्धावुपक्षीणप्रयोजनत्वादकिञ्चित्करं णिदेव चार्यं प्रत्ययः।शेषा निपात्या इति। निपातनावा पूर्वेव्यय इत्यतः पूर्वे इत्यनुवृत्तेर्वा यत्र पूर्वपदं नञ् तत्राऽकारा ऽनादेशविधेः स्त्रैणार्थ इत्यत्राप्रसङ्गः पुंवद्वेत्यतो वानुवृत्तेर्वा अत्र पक्षे तत एव नभ्राडित्यादिसिद्धेर्नञो ञित्त्वं विस्पष्टार्थम् । अब्राह्मण इति । ब्राह्मणसदृशः क्षत्रिय इत्यर्थः । पर्युदासे हि नञ्विशिष्टेनोत्तरपदेन सादृश्यं लक्ष्यते । नञिवयुक्तमन्यसदृशार्थे तथा ह्यर्थगतिरिति अन् । नाकादिवर्जमिति । नञोऽकारोऽनादेशश्च स्यादिति शेषः । एतच्चानन्तरमेवोपपादितम् । अश्वादन्य इत्यादि । प्रसज्यपक्षेऽत्र मिथ्याज्ञाननिवृत्त्या । नञ्विशिष्टेन परपदेनाश्वत्वविरुद्धत्वाभावविशेषा लक्ष्यन्ते । तत्रानश्वइत्यादिपूत्तरपदार्थप्राधान्यात्रिष्वपि नञीति तत्पुरुषेष्वत्वे नञोऽनादेशः नस्य च ङ्णो ह्रस्वादिति द्वित्वस्याभावस्तत्रैवोपपादितः उत्तरयोर्ना इत्यदादेशः । नन्वग्रहणमित्यत्राभावस्य पूर्वपदार्थस्यैव प्राधान्यादव्ययीभावो युक्तः सत्यं, यदाऽभावमात्रमुच्यते तदाऽव्ययीभावः यदा त्वभावविशेष उच्यते ग्रहणस्याभावविशेषो ग्रहणाभाव इति तदा तत्पुरुष एवेति सर्वमालोच्याह तदन्येत्यादि । तथोक्तं विचारचिन्तामणौ—नञ् नलोपे द्वे अविप्रोऽयशोऽनभिरभाषणम् । सदृग्विरुद्धान्याभावा नञर्था एष्वनुक्रमात् । समासे तूत्तरपदप्राधान्यं मासजातवत् नञर्थमिलितं तद्धि सादृश्यादीनि लक्षयेदिति । इति तत्पुरुषः ॥ चार्थे ॥ चशब्दस्यार्थमाह समुच्चयेति । तत्र समुच्चयस्योदाहरणलक्षणे आह तच्चे

गुरुं च भजस्वेति प्रत्येकमेकक्रियासंबन्धे समुच्चये बटो भिक्षामट गाञ्चानयेति क्रमेण क्रियाद्वयसंबन्धेऽन्वाचये समासो नास्ति परस्परसंबन्धाभावात् । इतरेतरयोगे समाहारे चार्थे द्वन्द्वः समासो भवति ॥ द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपातो वक्तव्यः ॥ पटुश्च गुप्तश्च पटुगुप्तौ । उक्तार्थानामप्रयोगः । अग्निश्च

श्वरमित्यादि । तत्र तेषु चतुर्षु चार्थेषु मध्ये ईश्वरं गुरुं च भजस्वेति समुच्चये गुर्वीश्वरयोरन्योन्यमसंबन्धात्समासो न भवतीति संबन्धः । किंलक्षणे समुच्चये । प्रत्येकमिति । एकमेकं प्रतीतिप्रत्येकं वीप्सायामव्ययीभावः बहूनामपि पदार्थानां प्रत्येकं कर्मभेदाद्भिद्यमानयैकयैव क्रियया सहसंबन्धोभवतीत्यर्थः । बटोभिक्षामिति । अत्राऽन्वाचये । गोभिक्षयोः परस्परमसंबन्धान्न समास इत्यर्थः । किं लक्षणेऽन्वाचये । क्रमेणेति । द्वयेत्युपलक्षणं यस्य यया क्रियया सामर्थ्यं तस्य तयासंबन्धोभवतीत्यर्थः । अयं भावः । अन्वाचये ह्येकस्य प्राधान्यात्तदनुरोधेनाऽन्यदन्वाचीयते । यथाऽत्रादर्शनादनानयन्नपि गामटत्येव भिक्षामनटंस्तु भिक्षां न गामानयति अटन्नपि नाऽन्विष्य गामानयतीति तत्राप्रधानस्यैव चार्थे वृत्तेः प्रधानस्य तत्रावृत्तेरुभयोः क्रमेण क्रियासंबन्धादपि नाऽन्योन्यं सामर्थ्यमिति न गोभिक्षयोर्द्वन्द्व इत्यर्थः । इतरेतरेति । परस्परं संबन्धादिति शेषः । तत्रान्योन्यापेक्षाणामवयवभेदानुगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सतीतरेतरयोगो भवति । उद्भूतावयवभेदत्वाच्चाऽत्रद्विवचनबहुवचने भवतः । समाहारस्तु तादृशानामेवाऽवयवभेदतिरोधानसंभिन्नरूपेणाऽन्वये सति भवति संहतिप्राधान्याच्चाऽत्रैकवचनम् इहतु पटुश्चासौ खञ्जश्चेति समानाधिकरणयोरप्येकत्र धर्मिण्यनेकधर्मसमुच्चयार्थे प्राप्तो द्वन्द्वः परत्वात्कर्मधारयेण बाध्यत इत्युदन्तस्य पटोरपूर्वनिपातनियमात् खञ्जपटुरित्यपि स्यादित्यर्थः । असामानाधिकरण्येतु द्वन्द्व एव स्यात् । पटुखञ्जावागताविति वाक्यवदत्र समासेपि पूर्वप्रयोगानियमप्राप्तौ विशेषमाह द्वन्द्वेल्पस्वरेति । इकारश्चोकारश्चेकारोकारौ तावन्तौ येषां तानि प्रधानानि च प्रधानेकारोकारान्तानि अल्पस्वराणि च तानि चाल्पस्वरप्रधानेकारोकारान्तानि । अथ वाऽल्पस्वरं च प्रधानं चेकारोकारान्तं चेति द्वन्द्वे प्रधानस्याऽल्पस्वरत्वात् पूर्वत्वे प्राप्तेऽल्प-

मारुतश्च अग्निमारुतौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । धवश्च खदिरश्च धवखदिरौ ॥ देवताद्वन्द्वे पूर्वपदस्य दीर्घो वक्तव्यः ॥ * ॥ अग्नीषोमौ ॥ अग्न्यादेः सोमादीनां षत्वं वक्तव्यम् ॥ * ॥ इतरेतरयोगे द्विवचनम् ॥ एकवद्भावो वा समाहारे वक्तव्यः ॥ * ॥ शशाश्च कुशाश्च

स्वरस्य पूर्वनिपातएषामन्योन्यं द्वन्द्वेऽल्पस्वरस्य पूर्वत्वं यथा स्यादिति ज्ञापनार्थः । वागग्नी तेषां पदानां पदान्तरेण द्वन्द्वे समासे पूर्वनिपातः स्यादिति वक्तव्यमित्यर्थः । पटुश्चेति । पटुगुप्ताविति समासस्यार्थावबोधकमिदं वाक्यं तत्र च गुप्तार्थप्रतीतिदशायां पटुशब्दार्थाप्रतीतेर्नद्विवचनं भवति समासे तु द्वन्द्वस्य युगपदधिकरणवचनं तत्रैव द्वन्द्वो भवति केनपुनर्द्वयोरर्थयोर्युगपद्वचनम् । एकैकेन पदेनैतदुक्तं भवति यावता पदानां द्वन्द्वो यदि तावतामन्योन्यार्थाभिधानं युगपद्भवति एवं द्वन्द्वो भवतीति तत्र द्वन्द्वेनोक्तार्थत्वाच्चशब्दो न प्रयुज्यत इत्याह उक्तार्थानामिति । ततः समासप्रत्यययोरिति विभक्तिलुकाऽदन्तत्वात् पटोः पूर्वनिपाते पुनर्नामत्वादौ । एवमग्निमारुतावित्यत्राग्नेः तथा भोक्तृभोग्यावित्यत्र प्राधान्याद्भोक्तुः । धवखदिरावित्यत्राऽल्पस्वरत्वाद्धवस्य । देवताद्वन्द्वइति । देवतावाचिनां योद्वन्द्वस्तत्र यत्पूर्वपदं तस्य वा दीर्घः स्यादिति वक्तव्यार्थः । वाशब्दस्याऽत्र व्यवस्थार्थत्वादग्निमारुतादौ न दीर्घः । अग्नीषोमाविति । अग्निश्चसोमश्चेति चार्थे द्वन्द्वेऽग्नेरिदन्तत्वात् प्राङ्निपातेऽनेनदीर्घः सहादित्वान्निपातितो वा दीर्घोऽनेन प्रपञ्च्यते । अग्न्यादेरिति । भिन्नपदत्वादकृतसकारत्वाच्च किलादिति न प्राप्नोतीत्यारम्भः । अग्न्यादिभ्यः परेषां सोमादीनां सकारस्य निमित्ते सति षत्वं स्यादिति वक्तव्यार्थः । सहादीति । वा विहितस्यैव षत्वस्याऽयं प्रपञ्चः । अतएवस्त्रीपितृष्वस्रादेरिति अनेन चाऽग्नेरिवर्णात्परस्य सोमशब्दस्य सस्य षत्वमित्यर्थः आदिना अग्निष्टोममातृष्वस्रादयो ज्ञेयाः । इतरेतरयोगइति । पटुगुप्तादिषु सर्वत्रेतरेतरयोगद्वन्द्वेन समाहारे अत एव प्रकृत्यर्थस्य द्वित्वाद्द्विवचनं समाहारे त्वेकवचनमपि स्यादित्याह एकवद्भाव इति । तथाचमहाभाष्ये काशिकायां चोक्तं सर्वो द्वन्द्वो विभाषयैकवद्भवतीति । शशकुशेत्यादि । समाहृता इति शेषः । अत्रचार्थ इति समाहारे द्वन्द्वे एकवद्भावपक्षे एकत्वे द्विगुद्वन्द्वाविति नपुंस-

पलाशाश्च शशकुशपलाशाः । शशकुशपलाशम् ॥ अन्यादीनां विभक्तिलोपे सगागमो वक्तव्यः ॥ * ॥ अन्योन्यम् । परस्परम् ॥ एकत्वे द्विगुद्वन्द्वौ ॥ * २५७॥ एकत्वे वर्तमानौ द्विगुद्वन्द्वौ नपुंसकलिङ्गौ भवतः ॥ समाहारेऽत्त

त्वात् सेरम् अन्यत्र जसि दीर्घविसर्गौ इतरेतरयोगे तु शशकुशपलाशा इत्येव अत्र वाशब्दस्य व्यवस्थार्थत्वात् पाणिपादमित्यादौ प्राण्यङ्गादीनां नित्यमेकवद्भावः । अत एव मुखनासिकाभ्यामिति प्रकारान्तरेण निरवाहि । दशदन्तोष्ठा इत्यादौ तु द्रव्यपरिमाणेन भवति । आम्रपलाशमाम्रपलाशावित्यादौ वृक्षादीनां विकल्प इति ज्ञेयम् । दधिपयसी इत्यादौ तु इतरेतरयोगद्वन्द्व एवेति नास्त्येकवद्भावप्रसङ्ग इति विवेकः । अन्यादीनामिति । देवताद्वन्द्व इत्यतः पूर्वपदस्येत्यनुवर्तते एषां समासे समासप्रत्यययोरिति स्यादिलुकि पूर्वपदस्य सगागमो वक्तव्य इत्यर्थः । अन्योन्यमिति । अत्र अन्यश्च अन्यश्च तयोः समाहार इति द्वन्द्वे सिलुकि पूर्वस्याऽनेन सक्रियस्य तस्य विसर्गे उत्वे ओत्वे अलोपे च द्वन्द्वैकत्वे क्लीबत्वात् सेरम् । परस्परमिति । अत्र । सकि विसर्गसत्वे कुप्वोरिति तु न भवति तत्र वाशब्दस्य व्यवस्थार्थत्वात् । अन्योन्यां परस्परामित्यपि सहादित्वाज्ज्ञेयं तदेवह्यनेन प्रपञ्च्यते । एकत्व इति । अत्र च सनपुंसकमित्यतो नपुंसकमित्यनुवर्तते एकत्वइति च द्विगुद्वन्द्वयोर्विशेषणमित्यभिप्रेत्याह एकत्वे वर्तमानावित्यादि । समाहारार्थे वर्तमानादित्यर्थः । तत्रैव तथात्वात् द्विगुद्वन्द्वाविति एकसंख्यः एकत्वे किं पटुगुप्तौ इति द्वन्द्वः । समाहारे समाहारस्य समूहरूपत्वात् तस्य च भेदनिबन्धनत्वात् भेदस्य च संख्ययैव वाच्यत्वात् संख्यापूर्वपद एवायं द्विगुर्भवति अन्यत्र प्रयोगाभावाद्वा अत एव संख्यापूर्वो द्विगुरितिकाचित्कोऽपपाठः पूर्वशालाप्रियः पौर्वशाल इत्यादौ तु समासान्तरेण निर्वाहः स्वरस्तु नास्माकं दोषाय इहासन्देहार्थं द्विगुस्तत ईबिति निर्देश्य यथास्थितनिर्देशादकारप्रश्लेष इति मत्वाह अकारान्तादीबिति । तथोदाहरति । दशग्रामीति । दशानां ग्रामाणां समाहार इति व्युत्पत्त्या सूत्रे समाहरणं समाहार इति भावसाधनः समाहारशब्दोऽस्तीति सूचयति । ननु पृथग्देशस्थानामेकत्र समीकरणं समासार्थः स च दशानां ग्रामाणां न संभवतीति चेन्न । एकत्र क्रियायां समन्वयादन्यदेशानामपि बुद्ध्याराशीकरणस्य संभवात् अत्र द्विगौ विभक्तिलो-

ईप् द्विगुः * ३११ ॥ समाहारेऽर्थे द्विगुः समासो भवति । ततोऽकारान्तादीप्प्रत्ययो भवति । दशानां ग्रामाणां समाहारो दशग्रामी । पञ्चाग्नयः समाहृता इति पञ्चाग्नि । पञ्चगु । त्रिफलेतिरूढितः । बहुव्रीहिरन्यार्थे * ३१८ ॥ अन्यपदार्थे

पेऽदन्तत्वादीपियस्यलोपइत्यलोपे समासत्वात्स्यादौ हसेपइतिसिलोपः ननुचात्र सत्यपीपिनपुंसकत्वाऽनपायात्तदाश्रयाह्रस्वलुङ्नुमादयःस्युःस्त्रीत्वाभावाच्च तदाश्रयाआडाम्‌धिह्रस्वानस्युःनैवम् । नपुंसकह्रस्वस्तावद्विधिसामर्थ्यान्नभवति अन्यथालाघवायह्रस्वमेव विदध्यात्किञ्चैवमपीपिपकारोच्चारणमप्यनर्थकंप्रसज्येत तस्मादी ईबइति विभज्य ईर्भवति सचेत्रूपेणार्थेनचेर्तुल्यो यथा ईप्स्त्रियां भवति एवमीः प्रत्ययेपि स्त्रियां स्यादित्यर्थः । अथवा आबतः स्त्रियामित्यतः स्त्रियां ग्रहणमनुवर्तते तच्चपूर्वविधिनैव संबध्यते न समासविधिना नानिष्टार्थशास्त्रप्रवृत्तिरिति एकत्वे द्विगुद्वन्द्वाविति ज्ञापकाद्वातश्चाकारान्तात् द्विगोरीप् ईबन्तश्च स्त्रियां भवतीति नोक्तदोष इति दशग्राम्यादेर्नदीवत्प्रक्रिया सिद्धा । पञ्चाग्नय इति । समाहृता व्युत्पत्तिमात्रं दर्शितं न पुनः समाहारशब्दस्य कर्मसाधनत्वं तत्त्वेहि सामाह्रियमाणाः पञ्चाग्नयः समासार्थ इति पञ्चादिभिः सामानाधिकरण्याद्द्विवचनबहुवचने प्रसज्येते अतः पञ्चानामग्नीनां समाहार इति तात्त्विको विग्रहः । पञ्चाग्नीति । अत्रद्विगौ विभक्तिलुकि अन्तर्वर्तिन्या विभक्त्या पदत्वान्नलोपशिसवर्णदीर्घे च । एकत्वे द्विग्विति क्लीबत्वात् स्यमोर्लुक् यथात्र नलोपेपि दीर्घः स्यात्तथालोपशि पुनरित्यत्र प्रत्यपादि । शेषं वारिवत् । पञ्चगुइति । इदंलेखकैर्भ्रान्त्यालिखितं यतोत्र टाडका इति नित्ये टप्रत्यये पञ्चगवमितिसाधु स्यात् । त्रिफलेतीति । ततश्चावयवव्युत्पत्तेरभावात् स्त्रीत्वेपोर्भावाभावौ नाशङ्क्यौ । ननु पञ्चानां पात्राणां समाहारःपञ्चपात्रं त्रिभुवनमित्यादौ सति द्विगौ ईप्प्राप्नोति नैवम् । अत्र समासश्चेत्यतश्चोनुवर्तते सच निपातत्वात् क्वचिदीवभावं सूचयति एवंच तिसृणांखट्वानां समाहारः इत्यत्रद्विगौ विभक्तिलुकि तन्निमित्ते तिसृभावेपि कृते एकत्वे इति क्लीबत्वात् ह्रस्वे अदन्तत्वात् पाक्षिक ईप् तथा त्रितक्षं त्रितक्षीत्यादौ नान्तानामपि नलोपशि पाक्षिक ईप् एकापूपीत्यत्र कश्चित् कृपण एकमप्यपूपं ददनेकमन्वानः श्रद्धाति-

प्रधाने बहुव्रीहिसंज्ञकः समासो भवति । बहुधनः । अस्तिधनः । तस्य प्रधानस्यैकदेशो विशेषणतया यत्र ज्ञायते स तद्गुणसंविज्ञानः लम्बकर्णः ॥ बहुव्रीहौ विशेषणसप्तम्यन्तयोः पूर्वनिपातो वक्तव्यः ॥ भाललोचनः । प्रजामेधयोरसु ॥ ❀ ॥ सुप्रजाः । दुःप्रजाः । दुर्मेधाः ॥

ग्रयादपूपमहत्त्वाद्वा एकस्मिन् क्रियमाणमनेकस्मिन्नपि करोतीत्यारोपितबहुत्वाश्रये समाहारे द्विगुः । इतिद्विगुः । बहुव्रीहिसमासश्चान्वये नाम्नामित्यतःपदपरं नाम्नामित्यनुवर्तते अन्यशब्देनापि वृत्तिपदव्यतिरिक्तंसान्निध्यात् पदमेव शिष्यते न वाक्यमिति तत्राह अन्यपदेति । अन्यपदार्थप्रधानपदानां समासो भवति स च बहुव्रीहिसंज्ञक इत्यर्थः । ननुचार्थग्रहणमेव क्रियतां किमन्यग्रहणेन नच स्वपदार्थे प्रसङ्गः समासान्तरेण बाधितत्वात् नीलोत्पलमिति । नचैवमनवकाशो बहुव्रीहिरितिवाच्यम् । कण्ठेकालइत्यादौ वैयधिकरण्ये सावकाशत्वात् । एवं तर्हि नीलोत्पलः स इत्यादौ समानाधिकरणे स्वपदार्थं इव मा कर्मधारयेण बहुव्रीहिर्बाधीत्यन्यग्रहणम् अर्थग्रहणं तु कृत्स्नेपि चार्थे यथा स्यात् प्राधान्याद्विभक्त्यर्थे माभूत् इहार्थपदेन प्रकृत्यर्थोभिधीयते इत्यन्यपदार्थग्रहणेन विभक्त्यर्थ एव गृह्यते इति स एव प्रधानम् । तथा च वक्ष्यति गुणः प्रकृत्यर्थोन्यत्र स्यादिति एवं कृत्वा सह प्रकृत्यर्थेन विभक्त्यर्थे बहुव्रीहिणाभिधीयमाने नकश्चिद्दोषः । न चैवं बहुव्रीहिणोक्तार्थत्वाद्वन्द्वे च शब्दस्येव बहुधनोग्राम इत्यादौ ग्रामादिपदस्यानुप्रयोगो न प्राप्नोतीतिवाच्यं, विभक्त्यर्थे प्रकृत्यर्थसामान्यस्य बहुव्रीहिणाभिधानात् तद्विशेषमभिविवित्सतस्तद्वाचिग्रामादिशब्दप्रयोगोपपत्तेः । बहु धनं यस्येति । अत्रानेन बहुव्रीहौ विभक्तिलुकि पुनर्नामत्वात्स्यादौविसर्गादिप्रक्रियायां कृतायां बहुधन इत्यादि देववत् स्यादित्यर्थः । ग्रामादिरत्रान्यपदार्थः । अस्तिधनइति । अत्राऽस्तीति । तिबन्तप्रतिरूपकमव्ययपदं शिष्टंप्राग्वत् । अत्रामादावित्यनुवृत्तेर्द्वितीयाद्यर्थे बहुव्रीहिर्भवति न प्रथमार्थे वृष्टे देवेगत इति तथोक्तं रामचन्द्राचार्यैः । अप्रथमाविभक्त्यर्थेऽव्ययमिष्यत इति अनभिधानाद्वा अतएव च पञ्चभिर्भुक्तमस्येत्यादौ वैयधिकरण्येपि न अन्यथा पञ्चभुक्तवन्तोस्येत्यत्रापि प्राप्नुयात् । तस्येति । इदञ्च सर्वादेः स्मडित्यत्र सुविशदम् प्रत्ययादिलम्बकरणइति लम्बौ क-

धर्म्मादन् ॥ ॥ सुधर्म्मा । रूपवद्भार्य्यः ॥ अन्यार्थे २०४। स्त्रीलिङ्गस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति ॥ पुंव-

र्णौ यस्येत्यर्थः । बहुव्रीहाविति सुगमम् । अनेनबह्वस्ति लम्बानां विशेषणानां प्राक्प्रयोग इतिभावः । भाले लोचनं यस्य स भाललोचनः । प्रजामेधयोरिति । पञ्चम्यर्थे षष्ठीयं प्रजामेधाभ्यां बहुव्रीहावसुप्रत्ययो भवतीति वक्तव्यमित्यर्थः । उकारोत्र मुखसुखार्थः सुप्रजा इत्यादि शोभना प्रजा यस्य दुष्टा प्रजा यस्य दुष्टा मेधा यस्येति विग्रहः । अत्र बहुव्रीहावसौप्रत्यये यस्य लोप इत्यालोपे अत्वसोः साविति दीर्घे सुवचश्शब्दवत्प्रक्रिया एवमप्रजाः अल्पमेधसइत्याद्यप्युदाहार्यम् । धर्मादन्निति । अस्मात् केवलाद्बहुव्रीहावन्प्रत्ययः स्यादिति वक्तव्यार्थः । सुधर्मेति । सुष्ठु धर्मो यस्येति विगृह्यान्प्रत्ययेऽल्लोपे यज्वन्शब्दवद्रूपाणि रूपवतीति । प्रशस्तं रूपं यस्याः सेति प्रशस्तार्थे वतुः ष्ट्रित्रित इतीप् । अत्र रूपवतीभार्याशब्दयोर्बहु-व्रीहौ स्यादिलुकि उत्तरसूत्राभ्यां ह्रस्वपुंवद्भावयोः कृतयोरन्तर्वर्तिन्या विभक्त्या परत्वाच्चपा अबे इति दत्वे च रूपवद्भार्य इति स्यादित्यर्थः अन्या । अत्र त्रिचतुरोः स्त्रियामित्यतस्त्रियामित्यनुवर्तते ह्रस्वो वेत्यतो ह्रस्वश्च स च ह्रस्वो विधीयमानो ऽर्थाद्दीर्घस्थानिनमाक्षिपति सच दीर्घः स्त्रीप्रत्यय एव गृह्यते स्त्रियामित्यर्थः विहित-विशेषणत्वात् स्त्रियां विहितो यो दीर्घ इति सच स्त्रीप्रत्यय एव स्त्रियामित्या-देशापेक्षया स्थानषष्ठी भवति स्त्रीति वाग्रहणानुवृत्तेः स्त्रीप्रत्यय एव गृह्यते निपा-तानामनेकार्थत्वात् न स्त्रीशब्दःनापि स्त्र्यर्थः प्रत्ययग्रहणे तदन्तग्रहणं तेन स्त्रीप्रत्य-यान्तस्येत्यर्थः । एतदेवाह स्त्रीलिङ्गस्येति। स्त्रियंलिङ्गयतीतिस्त्रीलिङ्गः स्त्रीप्रत्ययान्तः शब्दस्तस्येत्यर्थः । अन्यार्थे वर्तमानस्येति । गुणीभूतस्येतियावत् । हरीतक्याः फलानिहरीतक्यइत्यादौतुहरीतक्यादीनामत्र फलमेवमुख्यार्थ इतिनास्तिगौणार्थता । तथाहिहरीतक्याः फलानीत्यर्थेणितो वेत्यणोऽणिस्वादवृद्धौ यस्येतिलोपः शब्दश-क्तिस्वाभाव्यात् स्त्रीत्वे न पुनरित्यलोपः शेषानिपात्याः कत्यादय इति निपातनात्याद्-लादीनामप्यगौणार्थत्वम् । पुंवदिति । समासे सतीति इदमधिकाराल्लभ्यते समा-नाधिकरण इति तु कर्मधारयसूत्रात्तुल्यार्थ इत्यनुवृत्तेर्लभ्यते तुल्यार्थत्वं नाम भिन्न-प्रवृतिनिमित्तानामेकार्थपातित्वं तदेवहि सामानाधिकरण्यम् अत्र पुंवद्भाववि-धिना सामर्थ्यात्स्त्रीस्थान्याक्षिप्यत इतिव्याख्याने नपुंसकस्यापि स्थानित्वं दु-

**द्वा ॥ * ३२२ ॥ समासे सति समानाधिकरणे पूर्वस्य स्त्रीलिङ्गस्य पुंवद्वा भवति । पुंवद्भावादीपो निवृत्तिः वाग्रहणात्कल्याणीप्रिय इत्यादौ न भवति ॥ गोः * २०५ गोशब्दस्यान्यार्थे वर्तमानस्य ह्रस्वो भवति । पञ्चगुः ॥ सं-**

वीरमिति ग्रामणि ब्राह्मणकुलंदृष्टिरस्य ग्रामणिदृष्टिरित्यत्रापि पुंवद्भावेन नपुंसका-द्ध्रस्वो निवर्तेत तस्माद्वावतः स्त्रियामित्यतो मण्डूकप्लुत्या स्त्रियामित्यनुवर्तमानसर्थात् स्थानषष्ठ्यन्तं स्यात्तत्रापि स्त्र्यर्थस्य पुमर्थेतिदिश्यमाने कालिंमन्यास्त्रीत्यत्रात्मानं कालींमन्यतइति विगृह्य मन्यतेरेनां खशिति खशि खितीति नुमि दीर्घस्य ह्रस्वोऽ-र्थस्य तु पुंवत्त्वमिति व्याश्रयत्वादिष्यमाणो ह्रस्वः पुंवत्त्वं बाधित्वा न प्रवर्ततेति दोषात् । स्त्रीवाचकशब्दस्य वाचकशब्दस्येवरूपं स्यादिति । द्वितीयंपक्षमाश्रित्याह स्त्रीलिङ्गस्येति । स्त्रियं लिङ्गयतीतिस्त्रीलिङ्गः स्त्रीवाचकशब्द इत्यर्थः । तस्य पुंवद्वा-चकशब्दस्येव रूपं स्यादित्यर्थः । नन्वस्मिन्नपि पक्षे सारसा नाम शकुनयः तेषां लक्ष्मणाः स्त्रियः तत एता लक्ष्मणाश्च ता वृन्दारिकाश्चेति समासे स्त्रीवाचकस्य लक्ष्मणाशब्दस्यानेन पुंवत्त्वेऽर्थतः सादृश्यात् पुंवाचके सारसशब्देऽतिदिश्यमाने एताः सारसवृन्दारिका इति स्यात् एता लक्ष्मणा वृन्दारिका इति चेष्यत इति चेन्मैवं वाशब्दस्य व्यवस्थितविकल्पार्थत्वादविषये प्रतिषेधात् तथाच वक्ष्यति वाग्रहणात्क-ल्याणीप्रिय इत्यादौ न भवतीति । यद्येवमाद्येपि पक्षे अयमेवास्तु परिहारः ओमिति ब्रूमः तदेव पक्षद्वयेपि वाग्रहणाद्दोषाभावो द्रष्टव्यः पुंवद्भावादिति । पुंवाचकशब्दा-तिदेशादीपो निवृत्तिरभाव इत्यर्थः । गोः । अत्रान्यार्थइत्यतोऽन्यार्थ इत्यनुवर्त्तत इत्याह गोशब्दस्याऽन्यार्थे वर्तमानस्येति । गुणीभूतस्वार्थस्येर्थः । पञ्चगुरिति । अत्र बहुव्रीहावनेन ह्रस्वे ह्रस्वादेशइत्योकारस्य उकारो भानुवत्प्रक्रिया । ननुचगोः प्रियोऽस्य गोप्रिय इत्यत्रापि ह्रस्वः प्राप्नोति न यतो बहुव्रीहौ वृत्तेर्गुणाभावेपि पूर्वपदस्य स्वार्थानपेतत्वान्नान्यार्थवृत्तिर्गोशब्द इति । एवमपि गामतिक्रान्तोऽतिगव इत्यत्रप्रादिसमासे टाडका इति टप्रसङ्गः । नच वाच्यं वोव्यस्वरइत्युकारस्याप्यव् भविष्यतीति तत्र तद्धित इत्यनुवृत्तेः । एवं तर्हि ह्रस्वोवेत्यतो निपातो वःशब्दोत्रानुवर्तत इति गोशब्दान्तस्य नाम्नो ह्रस्वविधानाददोषः तत एव वानौकादिवन्निषेधान अ-

ख्यासुव्याघ्रादिपूर्वस्य पादशब्दस्यालोपो वक्तव्यः * सहस्रपात् । सुपात् । व्याघ्रपात् ॥ शसादौ स्वरे परे पदादेशश्च वक्तव्यः । * । द्विपदः ॥ कर्मधारयस्तुल्यार्थे * ३१९ कर्म्मधारयः पदद्वये तुल्यार्थे एकार्थनिष्ठे सति समासो भवति । नीलं च तदुत्पलं च नीलोत्पलम् । र-

न्यार्थे गोश्चेत्येकयोगे कार्ये गोरिति पृथग्योगस्याऽस्य ह्रस्वविधेरनित्यत्वज्ञापनार्थत्वाद्वा । संख्यास्विति । संख्या च सुश्च व्याघ्रादयश्च ते पूर्वेअस्मात्तस्य संख्यापूर्वस्य सुपूर्वस्य व्याघ्रादिपूर्वस्य च पादशब्दस्य योऽकारस्तस्य लोपो बहुव्रीहौ वक्तव्य इत्यर्थः । सहस्रपादिति सहस्रंपादा अस्येति बहुव्रीहिः संख्यापूर्वस्योदाहरणमिदम् । सुपादिति । सुपूर्वस्य शोभनौ पादौ यस्येत्यर्थः । व्याघ्रपादिति । व्याघ्रादिपूर्वस्य व्याघ्रः पादावस्य नच प्राणीप्राण्यन्तरस्याङ्गं संभवतीति सामर्थ्यात् यथाप्रसिद्धमङ्गसादृश्यमेवं ज्ञेयं तेन व्याघ्रस्य पादाविव पादावस्येत्यर्थः क्वचिदेवं विग्रहस्तु बालावबोधाय । तथोक्तं पदमञ्जर्य्याम् अत्रोष्ट्रो मुखमस्येति विग्रहः नच प्राणीप्राण्यन्तरस्य मुखमुपपद्यते इति सामर्थ्यात्सादृश्यावगतिः मुखेन च मुखस्य सादृश्यं प्रसिद्धमिति उष्ट्रमुखमिव मुखमस्येत्ययमर्थो भवतीति आदिना हयादीत्यादि । संख्यादिपूर्वस्येति किं हस्तिपादः । शसादाविति । संख्यादिपूर्वस्यपादशब्दस्येति शेषः । द्विपदइति । द्वौ पादावस्येति बहुव्रीहौ शसिपादस्यानेन पदादेशः स च गुरुत्वात् गुरुः शिद्वेति सर्वादेशः एवं टादौ स्वरेपि ज्ञेयम् । अन्यत्र पञ्चसु हसादौ च संख्यास्वित्यलोपः इति बहुव्रीहिः । कर्म । तुल्य एवार्थस्तुल्यार्थः तत्र सामानाधिकरण्ये भिन्नप्रवृत्तिनिमित्तानामेकार्थवृत्ताविति यावत् । अतएवाह । पदद्वयइत्यादि । व्यधिकरणे सप्तम्यौपदद्वये कर्मधारयः समासो भवति तुल्यार्थे पदद्वये वाच्ये सति समानाधिकरणे वा एकार्थेति । एकस्मिन्नर्थे निष्ठा वृत्तिर्यस्य तत्तस्मिन्नितिपदद्वयविशेषणं ततश्च विशेषणविशेष्यभावे सतीत्यर्थः । तत्रैव हि एकस्मिन्नर्थे वृत्तिः अतएव तक्षकः सर्प इत्यादौ न समासः भिन्नप्रवृत्तिनिमित्तानामेकार्थवृत्तित्वाभावात् । नहि तक्षकः सर्पत्वं व्यभिचरति शिंशपावृक्ष इत्यादौ तु शिंशपादिशब्दानां वृक्षफलयोर्वृत्तेरस्ति व्यभिचारः नीलंचतदीति विग्रहेणैकार्थत्वं दर्शयति । अत्र समासे विभक्तिलोपेओत्वेस्याद्युत्पत्तौ

क्तालता । पुंस्कोकिलः ॥ पुंसः खपे संयोगान्ताल्लोपो वक्तव्यः । नाम्नश्च कृता समासः ॐ ३२९ ॥ प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन सह समासो भवति । प्रवादः । कुम्भकारः ॥ अलुक् ॐ २५२ ॥ क्वचित् क्वचित्समासे कृते

च नीलोत्पलमित्यादि कुलवत्स्यादित्यर्थः । ननु चाविशेषादुत्पलस्याऽपिप्राग्निपातःस्यात् उत्पलनीलमितिनद्रव्यस्योत्पलादेः क्रियासिद्धौ साक्षादुपयोगात्संबन्धो युक्त इति परत्वं गुणस्य तु नीलादेर्द्रव्यद्वारेणेति द्रव्यात्पूर्वत्वम् एवं क्रियाया अपि पाचकब्राह्मण इति गुणयोः क्रिययोश्चान्योन्यमुपनिपाते अनियमएवखञ्जकुब्जः कुब्जखञ्जः पाचकपाठकः पाठकपाचकःखञ्जपाठकःपाठकखञ्जइति । रक्तलतेति । अत्र कर्मधारये गुणत्वाद्रक्ताशब्दस्य पूर्वत्वेपुंवद्वेति पुंवत्त्वम् । पुंस्कोकिल इति । अत्र कर्मधारये सेर्लुकि संयोगान्तस्येति सलोपे प्राप्ते विशेषमाह पुंसः खपे इति प्राप्तत्वात् संयोगान्तालोप इत्यर्थः । तुल्यार्थे किं पटुगुप्तौ । कृता । अत्र प्रादिरुपसर्ग इत्यतः प्रादिग्रहणमनुवर्तमानमर्थात् समासइत्यपेक्षया षष्ठ्यन्ते संपद्यत इत्याह । प्रादेरुपसर्गस्येति । नाम्नश्चेति । एतच्च । नाम्नश्चेत्युत्तरसूत्राल्लभ्यते तस्य चायमर्थः नाम्नश्च कृता समासो भवति कुम्भकारः इदमेवचाविशेषाद्वृत्तिकृता सह व्याख्यानमुदाहृतं च कृतेति । प्रत्ययग्रहणात्तदन्तग्रहणमित्याह । कृदन्तेनेति । समासो भवतीति । अविशिष्टसंज्ञ इत्यर्थः । तथोक्तं भट्टरामकलशैः कृता समासः तस्योपसर्गस्य कृता कृदन्तेन सह समासो भवतीति । यद्येवं कथं स च षड्विध इत्युक्तं विशिष्टसंज्ञापेक्षं तदित्यदोषः क्वचिन्मूले कृदन्तेन सह समासस्तत्पुरुषसंज्ञो भवतीत्यपपाठः तत्पुरुषाननुवृत्तेः । प्रवाद इति । प्रकृष्टोवाद इत्यर्थः प्रकृष्टार्थो हि प्रशब्दः ऐकपद्यमत्र समासप्रयोजनम् । कुम्भकारइति । कुम्भंकरोतीति समासः ततो विभक्तेर्लुगैकपद्यं च समासाधिकारे पुनः समासग्रहणं विकल्पनिवृत्त्यर्थं पूर्वसमासे विकल्पज्ञानार्थं च तथा नाम्नश्च कृतेत्येकयोगे कार्ये पृथग्योगकरणं कृतोऽन्यत्रापि समासप्रतिपत्त्यर्थमनुव्यचलत् समासत्वादैकपद्यं भवति । समासप्रत्यययोरित्यत्र स्याद्यधिकारादिह तिपो न लुक् तथा प्रगत आचार्यः प्राचार्यः अतिक्रान्तो मालामतिमालइत्यादौ प्रादीनां गताद्यर्थे प्रथमादिभिः समासः तथा कृदुत्पत्तेः प्रागपि

तद्धितेऽपि विभक्तेरलुग्भवति । कृच्छ्रान्मुक्तः । स्तोकान्मुक्तः । अप्सुयोनिः । उरसिलोमा । कण्ठेकालः । हृदिस्पृक् । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरइत्यादि ॥ टाडकाः ॥ ३२१ ॥ टअडक इत्येते प्रत्यया भवन्ति ॥ नो वा ॥ ३४३ ॥ नान्तस्य टेर्लोपो भवति यकारे स्वरे च परे । वाग्रहणात्क्वचिन्न भवत्युपधायालोपश्च । मध्याह्नः ।

समासो भवति । प्रपच्य समासत्वात् क्यबत्र भवति । अन्यथा सति समासे क्यप् जाते च क्यपि समास इतीतरेतराश्रयप्रसङ्गः तथाऽविहितलक्षणः सर्वोऽपि समासोऽत्रोदाहर्तव्यः । अलु । अत्र समासप्रत्यययोरित्यनुवृत्तेस्तत्प्रतिषेधाच्च समासे प्रत्यये परे चायमलुग्विधीयत इति मत्वाह । क्वचित्समासे कृते तद्धितेपीति । ननु चैवं क्वचिदित्येव सूत्रे स एवार्थ इति किं पुनरलुग्ग्रहणेन उच्यते । नञ उत्तरपदेन संबन्धादुत्तरपदे परतोऽयं समासेऽलुग् भवति नान्यत्रेति ज्ञापकार्थं पुनरलुग्ग्रहणम् । तेन स्तोकान्निर्गतो निस्तोक इत्यत्र पञ्चम्या अलुङ्न उत्तरपदपरत्वाभावात् प्रत्यये तु परे आमुष्यायणइत्यादौ अनुत्तरपदेपि भवति प्रत्ययग्रहणानुवृत्तिसामर्थ्यात् अत एवोपगोरपि षष्ठ्यालुकं स्वयं विधास्यति । कृच्छ्रान्मुक्तइत्यादि । उभयत्राप्यमादाविति तत्पुरुषे पञ्चम्या अलुक् अप्सुयोनिः उरसिलोमा कण्ठेकाल इति । त्रिष्वपि बहुव्रीहौ सप्तम्या अलुक् हृदिस्पृगिति । हृदिस्पृशतीति नाम्नश्चेति समासे सप्तम्याः वाचोयुक्तिः दिशोदण्डः पश्यतोहरइति तत्पुरुषे षष्ठ्या अलुक् । इत्यादीति । आदिना खेशयः खशय इत्यादि सर्वोप्यलुक् नित्यः पाक्षिको वात्रोदाहर्तव्य इति भावः । टाड । समासेसतीति सर्वसमासान्ते ऽविशेषेणोक्तत्वात् षड्विधेपीत्यर्थः इह टश्च अश्च डश्च कश्चेति द्वन्द्वनिर्दिष्टाश्चत्वारः प्रत्यया इत्याह टअडक इत्येत इति भवन्तीति यथाप्रयोगं स्युरित्यर्थः तत्र ट ईबर्थः डष्टिलोपार्थः । नो । इह नकारमात्रस्य प्रयोगाभावान्नान्तं गृह्यत इत्याह नान्तस्येति । शब्दस्येति शेषः । टेर्लोप इति । डिति टेर्यस्य लोप इत्यतोनुवर्तमान इत्यर्थः । यकारे स्वरे चेति । वोऽयस्वर इत्यतोनुवर्तते । वा ग्रहणादिति । निपातानामनेकार्थत्वादिति भावः । तथा चाग्रे मूल एव वक्ष्यति राज्यं राजन्यं नो वेति टिलोप इति । उपधालोपश्चेति । वा ग्रहणादेव अथवा नः अवेतिच्छेदः तत्र अवेति

**कविराजः । टकारोऽनुबन्ध ईबर्थः । कविराजी । राज्ञां पूः राजपुरम् । वाङ्मनसम । दक्षिणापथः । अहो-**

योगान्तरं वाशब्दश्चोभयोर्योगयोः शेषः । तत्राद्ययोगार्थो मूले एवोक्तः द्वितीये तु अ इति लुप्तषष्ठीकं पदं तेन मान्तस्य टेरकारस्य वा लोपो भवति यकारे स्वरे च परे इति । तस्यार्थः अयमलोपोपि वाग्रहणात् कचिन्न राजन्यं प्रयोगाच्च व्यवस्था ज्ञेया । अध्याह्न इति । अह्नो मध्यमित्यमादाविति तत्पुरुषे कचिदमाद्यन्तस्येत्यहन्शब्दस्य परत्वे टाडका इति टप्रत्यये अनेनोपधालोपे च कृते एवं स्यादित्यर्थः । पुंस्त्वमत्र लोकाज्ज्ञेयम् । नन्वत्र समासाश्चेति नामसंज्ञा न स्यात् टाडकप्रत्ययानां समासबाह्यत्वात् । न चाविभक्तीति स्यात् इति वाच्यं, नान्तावधेः समासत्वात् पृथक्संज्ञाप्रसङ्गेन पदान्तकार्यप्रसंगात् । किञ्च टाडकानां प्रकृतेरविशिष्टार्थत्वादर्थवत्त्वमपि पृथग् नास्ति । एवं तर्हि यदयं परोक्ष इत्याह तज्ज्ञापयति । टाडकाः समासावयवा इति परमक्ष्ण इति पञ्चमीतत्पुरुषे कचिदमाद्यन्तस्येत्यक्ष्णः परत्वे सहादेरिति परस्य परस्भावे टाडका इति टेः परोक्षशब्दादविभक्तौ नायं निर्देश उपपद्यते टाडकानां तु समासावयवत्वे तदन्तस्यैव समासाश्चेति नामसंज्ञेति नायं दोषः । कविराज इति । षष्ठीतत्पुरुषः अत्र टप्रत्यये नो वेति टिलोपो दर्शितः । टकार इति । टप्रत्ययटकारः कार्यायेदितीत्संज्ञ इत्यर्थः । कार्यमाह ईबर्थ इति । स्त्रियत इति शेषः । कविराजीति । अत्र नो वेति टिलोपे स्त्रियत इतीपि यस्येत्यलोपः । राज्ञां पूरिति । अनेन राजपुरमित्यत्र रेफान्तपुरशब्दादप्रत्ययो दर्शितः क्लीबत्वं तु लोकात् । तथोक्तं भाष्ये लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति । वाङ्मनसमिति । समाहारद्वन्द्वादप्रत्ययः । दक्षिणापथ इति । सप्तम्यन्ताद्दक्षिणशब्दादापं विधाय ततस्तत्पुरुषादप्रत्यये नोविति टिलोपः अन्यथा पुंवद्वेति सर्वादेर्वृत्तिमात्रप्रसक्तस्य पुंवत्त्वस्य दुर्वारत्वात तद्विधौ वाग्रहणाद्वा न पुंवत्त्वम् । अहोरात्र इति समाहारद्वन्द्वादप्रत्यये यस्यलोप इति लोपः । द्वौ च त्रयश्चेति । अनेन द्वित्रा इति द्वन्द्वं दर्शयति न चैवं पञ्च प्रतीयेरन् । युक्तं चैतत् । बहुवचनस्याऽप्येवमुपपत्तेः न द्वित्रा आनीयन्तामित्युक्ते पृथग्द्वयोस्त्रयाणामानेष्यमाणानामानयनाप्रसङ्गात् । एवं तर्हि विकल्पार्थोऽयं चशब्दः निपातानामनेकार्थत्वात् । न च वाच्यमेवं लक्षणाभावात् समास एव न स्यात् नाम्नश्च कृतेति तद्विधानात् विभक्तिलुगादे-

रात्रः । द्वित्राः पञ्चषाः बहुराजा नगरी । अत्र नेप् । बहुकर्तृकः कूपः॥ सहादिसादिः ॥ ३२५॥ समासे सति सहादीनां सादिर्भवति । सपुत्रः ॥ सहसन्तिरसाम्सध्रिसमितिरयः ॥ सध्र्यङ् । सम्यङ् । तिर्यङ् ॥ ईषर्थे काकवकत् । कोष्णम् ।

श्च विशिष्टसमासानपेक्षत्वात् । एवं तर्हि द्वित्वस्याऽप्यवगतौ द्विवचनमपि स्यादिति दोषः । तस्मात्संशयार्थश्चशब्दः । नाम्नश्चेत्येव समासः संशयश्चानियतसंख्याविमर्शी विमर्शज्ञानं चोभयपक्षावलम्बीति मिश्रितेषु द्वित्रिपदस्य कृतेः पञ्चैव प्रतीयन्त इति बहुवचनमेव भवति । द्वित्रा इति आनयनादिकार्यं तु द्वयोस्त्रयाणां वा यथारुचि भवति वाक्यवत् द्वित्रिशब्दाड्डुप्रत्यये डिति टेरिति टिलोपः अत्राकारेऽपि प्रत्यये यस्य लोप इत्यनेनापि सिद्धं मन्वानो द्वितीयमुदाहरति । पञ्चषा इति । पञ्च च षट् चेति नाम्नश्चेति समासे डः । बहुराजेति । बहुव्रीहौ डे टिलोपः अथटाड्डस्य भेदार्थमाह । अत्रेति । टित्त्वनिमित्ताभावादीब्नेति भावः । बहुकर्तृके इति । बहुव्रीहौ कः । सहा । समासे सतीति । उपलक्षणमेतत् तद्धितेऽपीत्यर्थः । अतएव षोढेत्युदाहरिष्यति । सहादीति लुप्तषष्ठीकं पदं सादीति च जसन्तं तत्रैकतो बहुवचनानुपपत्तेरनेकादेशाइत्याह सहादीनां सादिरिति यथाप्रयोगमिति शेषः सपुत्रइति । अमादाविति तत्पुरुषे । क्वचिदमाद्यन्तस्य पुत्रस्य परत्वेऽनेन सहस्य सहादित्यस्यैव प्रपञ्चमाह सहसमित्यादि । एतेषामञ्चतौपरेसहादित्यनेन सध्र्यादयआदेशाःस्युरित्यर्थः । सध्र्यङित्यादित्रिष्वपि नाम्नश्चेति समासे सध्र्यादिषु इयं स्वर इति यत्वे स्यादिषु प्रत्यङ्वत्प्रक्रिया तिर्यचस्तु शसादौ तिरश्चादय इति विशेषः काकवेति । कुशब्दस्योष्णे परे ईषदर्थे सहादीत्यनेन कादय आदेशाः स्युरित्यर्थः । कोष्णमित्यादि । ईषदुष्णमिति नाम्नश्चेति समासः । कदन्नमिति । कुत्सितमन्नमित्यर्थः । प्राग्वत्समासे सहादित्नेनकोः कत् । एवं कुत्सितोरथः कद्रथ इत्याद्यपि ज्ञेयम् । कापुरुष इति । कोरत्र कादेशः सहादीत्यत्र पुंवद्वेत्यतो वानुवृत्तेः क्वचिन्नेति मत्वाह पुरुष इति । षोडशेति । षट् च दशचेति द्वन्द्वे सहादीत्यस्य षस्योत्वे दस्य डत्वम् । ननु चैतत् सैषादिति सूत्रे उक्तं षोडशादौ विकारः स्यादिति । सत्यं तत्र तु वेदमधिकृत्योक्तम् । इह पुनर्लोकेपि साधुत्वं प्रतिपाद्यते अथवा तत्र ज्ञापकं मूलमुपन्यस्तमिह तु सूत्रमितिभेदः । षोडन्नि-

**कवोष्णम् । कदुष्णम् । कदन्नम् । कापुरुषः । षोडश षोडन् । षोढा । बृहस्पतिः । महेश्वरः । द्यावाभूमी । आकृतिगणोयम् । समानाधिकरणे मध्यमपदलोपो वक्तव्यः । शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥ आदेश्च द्वन्द्वे ॥ ३२५ ॥ पितरौ । श्वशुरौ । पुत्रौ ॥ ऋतां द्वन्द्वे पूर्वपदस्याऽऽत्वं वा ॥ मातापित-**

ति । षड्दन्ता अस्येति बहुव्रीहौ सहादीति दन्तस्य दत्रादेशे षस्योत्वे दस्य डत्वे ऋदित्वाद्न्नितोनुमित्यादिका भवच्छब्दवत्प्रक्रिया । षोढेति । षड्भिः प्रकारैरित्यर्थे संख्याया इति तद्धिते धाप्रत्यये षस्योत्वे धस्य ढत्वं वानुवृत्तेः कचिन्नषड्धा । बृहस्पतिरिति बृहतां पतिरिति तत्पुरुषे देवतायां पत्युः सुडागमो बृहतस्तलोपः एवं चौरे वाच्ये तस्कर इत्यत्रापि सुद्तलोपौ । महेश्वर इति महांश्चासावीश्वरश्चेति कर्मधारये महतो महादेशः । एवं महत्याघासो महाघास इत्यादौ महतीशब्दस्याऽपि । द्यावाभूमिरिति । द्यौश्च भूमिश्चेति द्वन्द्वे दिवो द्यावादेशः । ननु किमियन्त एव सहादयो नेत्याह । आकृतिगणोयमिति । आकृत्या गणः आकृतिगणः एवमादिप्रयोगाकारेणाऽयं सहादिः सादिश्च आकृतिगणो भवति नैतावद्भिरेवेत्यर्थः । तेनान्येऽप्यविहितलक्षणाः प्रयोगाः । अतः साधवः इतिभावः । इदमेव स्पष्टयति । समानाधिकरण इति मध्यमपदलोपोऽदर्शनं सहादिति पूर्वोत्तरपदयोः पूर्वपदादेशविधानादिति भावः । अथवा लोप एव वक्तव्य इत्यर्थः । शाकप्रियः पार्थिवइति । शाकं प्रियमस्येतिबहुव्रीहिगर्भः कर्मधारयोऽयमिति सामानाधिकरण्येन दर्शयति शाकपार्थिवइति । अत्र सहादीतिशाकप्रियशब्दयोः शाकादेशः प्रियशब्दस्य शाकपार्थिवयोर्मध्यस्य वा लोपः । देवपूजकइति । देवानां पूजक इति तत्पुरुषगर्भः कर्मधारयोऽयम् । देवब्राह्मणइति । देवपूजकयोरत्र देवादेशः पूजकपदलोपो वा आदेश्चेति । द्वन्द्वेसमासे आदेःपरस्य च पदस्य सहादीतिपरपदादेशविधानादादेः पदस्य लोपो प्रयोगो वा व्याख्येय इत्यर्थः । यथाश्रुतं त्रेति केचित् । पितराविति । अत्र द्वन्द्वे तेभ्योमातागरीयसी । तथा 'पितुर्दशगुणं माता गौरवेणाऽतिरिच्यत' इतिमातुः प्राधान्याद्द्वन्द्वेऽल्पस्वरेतिपूर्वत्वे सहादीतिमातृपितृ एतयोः पित्रादेशो लोपो वा मातृशब्दस्य । एवं श्वशुरौ पुत्रा-

रौ ॥ द्वन्द्वे सर्वादीत्वं वा ॥ वर्णाश्रमेतरे । वर्णाश्रमेतराः ॥ वैयधिकरणे बहुव्रीहौ मध्यमपदलोपः ॥ कुमुदस्य गन्ध इव गन्धो यस्य स कुमुदगन्धिः । हंसगमना ॥ दिक्संख्ये संज्ञायाम् ३२० ॥ अविग्रहो नित्यसमासोऽन्यस्त्वस्वपदविग्रहोऽपि । दक्षिणाग्निः सप्तग्रामाः ।

वित्यत्राऽपि श्वश्रूदुहित्रोरप्रयोगः एवं देवदत्तश्च स च तौ यश्च सच तावित्याद्यपि द्रष्टव्यम् । सहादीत्यत्र वानुवृत्तेः क्वचिदादेशाभावः श्वश्रूश्वशुरौ अत्र पक्षे ऋतां क्वचिदात्वमपि निपात्यत इत्याह । ऋतामिति । विध्यन्तरं चेदम् । ऋकारान्तानां द्वन्द्वे पूर्वपदस्य आत्वं वा वक्तव्यमित्यर्थः । मातापितराविति । आत्वमत्र षष्ठीनिर्दिष्टत्वादृकारस्य भवति वाशब्दो मातृपितृशब्दयोः सहादीति कृतयोः मातरपितरादेशयोरात्वनिरासार्थः मातरपितरौ द्वन्द्व इति अत्र वाशब्दो निपातत्वाज्जसीत्वमेव विकल्पयति अथवा सर्वादीत्वमिति पाठः ईत्वं जसीत्वमेव सर्वादीनां वा आदित्वं प्रथमकार्यत्वमिति मध्यमपदलोपी समासः सर्वशब्द एव वा गणोपलक्षक इति सर्वादिभ्यः आदित्वमकारान्तेभ्य इत्वमिशब्दस्य रूपत्वमिति शब्दरूपापेक्षयाईशब्दान्नपुंसकह्रस्वान्ताद्भावप्रत्ययः । ततश्च जसीत्वमेव वाच्यमित्यर्थः । तथोदाहरति । वर्णेति । वर्णानां प्राधान्यात् पूर्वत्वमल्पस्वरत्वाद्वा जसीत्वेऽत्रैत्वपक्षे शिष्टं च देववत् ज्ञेयं सर्वादिकार्याभावस्तु सर्वादेः स्मडित्यत्रैवोपपादितः । वैयधिकरण्य इति । व्यधिकरणस्य भावो वैयधिकरण्यम् अत्र बहुव्रीहिर्भवति असमानाधिकरणत्वान्न प्राप्नोतीत्यारम्भः । अस्मिंश्च बहुव्रीहौ मध्यमपदस्य लोपः स्यादिति वाच्यमित्यर्थः । कुमुदस्येति । अत्रानेन बहुव्रीहिराद्यगन्धस्य लोपः सहादीतीदन्तादेशः एवं हंसगमनेत्यत्रापिमध्यमगमनशब्दलोपः इदमेव बालावबोधार्थेवोक्तं तत्त्वतस्तु कुमुदं गन्धो यस्य हंसोगमनमस्या इत्येवविग्रहे बहुव्रीहिरन्यार्थे इत्येव बहुव्रीहिः न तु कुमुदं द्रव्यान्तरस्य गन्धः हंसश्च गमनं संभवतीति सामर्थ्यात् उपमानोपमेयभावप्रतीतिः । दिक्संख्ये इति । दिक् च संख्या च संज्ञायामेव समस्येते नान्यत्रेति वक्तव्यं नित्यसमासश्चायं नहि वाक्येन संज्ञावगम्यते इत्यभिप्रेत्यसमासं निरूपयति । अविग्रह इति । नास्ति विग्रहो वाक्यं यत्र स नित्यसमास इत्यर्थः । एवमुपकुम्भादिष्वव्याप्तिं निरस्यति । अन्य इति ।

इति समासप्रक्रिया ॥ ❀ ॥ अथ तद्धितो निरूप्यते ॥ अपत्येऽण् ❀ २६५ ॥ नाम्नोऽपत्येऽर्थेऽण्प्रत्ययो भवति उपगोरपत्यमिति वाक्ये समासप्रत्यययोरिति षष्ठीलोपे उपगुअणिति स्थिते णकारो वृद्ध्यर्थः ॥ आदिस्वरस्य ञ्णिति वृद्धिः ❀ २८५॥ स्वराणां मध्ये य आदिस्वरस्तस्य वृद्धिर्भवति णिति ञिति च तद्धिते परतः । उकारस्यौकारो वृद्धिः

अव्ययीभावादिःस्वपदैर्वृत्तिपदैर्विग्रहःस्वपदविग्रहस्तदभाववानपि नित्यसमासइत्यर्थः । दक्षिणाग्निरिति । अग्निविशेषस्य संज्ञेयम् । सप्तग्रामा इति । देशविशेषस्य अनेनात्र नित्यसमासः पूर्वसूत्रमित्यादौत्वदिक्शब्दत्वात्समासः । इतीति । समाप्तोयं समासाधिकार इत्यर्थः । श्रीजाना० जाख्यासर्वसमाससातिममलासिद्धान्तरत्नावली ॥ इति समासाधिकारः समाप्तः ॥

अथेति । वक्ष्यमाणप्रत्ययराशिस्तद्धितसंज्ञः स्यात् । स च निरूप्यते इत्यर्थः । अथवा पूर्वाचार्यसंज्ञेयं स च तद्धितो द्विविधः प्रकृत्यर्थभिन्नः स्वार्थिकश्च । तत्राद्यं निरूपयति अपत्ये नाम्न इति अधिकारोपेतादित्यर्थः । उपगोरपत्यमिति । औपगव इत्यस्य व्युत्पादके इत्यर्थः । समासेति । उपगोरपत्यमिति जन्यजनकभावसंबन्धाज्ज्ञाताया उपगोरिति षष्ठ्या अणिप्रत्यये लोप इत्यर्थः । उपगुअणीति । अनेनोक्तार्थत्वादपशब्दस्याप्रयोगो दर्शितः । णकार इति । अण इति शेषः ततश्चेत्संज्ञकत्वात् लोप्यत इति भावः । आदि । इहादिस्वरो निर्धार्यमाणः स्थाने सति हि परस्मिन्यतोनकोपिपूर्वः स आदिरुच्यत इति । निर्धारणं च सजातीयेष्वेव न विजातीयेष्विति मत्वाह स्वराणां मध्य इति । नाम्न इति शेषः । शितीति । ञ्चण्च ञ्णौ ताविताै यस्य तस्मिन्निति द्वन्द्वान्तस्येच्छब्दस्य प्रत्येकं संबन्ध इत्याह । ञितिणितीति । तद्धितइति । एतच्च प्रकरणाल्लभ्यते पारिशेष्याद्वा । तथाहि चकार पपाच दायक इत्यादौ धातोराख्याते कृति च शिति प्रत्यये प्राप्ताप्यादिवृद्धिर्धातोर्नामिनः अत उपधाया आतो युगित्यन्त्योपधावृद्धिभ्यां युका च बाध्यते परत्वात् नाप्राप्तायामादिवृद्धावारभ्यमाणत्वाच्च । ननुयत्रान्त्योपधावृद्धी न प्राप्नुतः जुगोपेत्यादौ तत्रादिवृद्धिः प्रसज्यते नच गुणो बाधकः शिति प्राप्तायामञ्णितिचाप्राप्ताया श्चादिवृद्धावारभ्यमाण-

१ इह सूत्रे कर्मधारयएव न्याय्यः षष्ठीतत्पुरुषस्यानाश्रयणात् तदनाश्रयणं तु पाणिनीयानुसारेण न निर्द्धारणे षष्ठीति ।

**वोऽव्यस्वरे ॥** ❀ २७९ ॥ **उकारस्यौकारस्य चाव् भवति त-**
त्वात् परत्वमप्येकाश्रये एकनिमित्ते वा सति बाध्यबाधकभावस्य प्रयोजकम् । इह तु वृद्धिगुणयोराद्युपधाश्रयत्वेन द्व्याश्रयत्वेणित्त्वपित्त्वभेदाच्च निमित्तभेदोपि । सत्यम् एवमपि प्रत्ययः प्रधाननिमित्तमेकमेवेति न दोषः । नचाऽन्यो ञ्णित्प्रत्ययो यत्र वृद्धिः प्राप्नोति तस्मात्पारिशेष्यात्तद्धित एव निमित्तमिति साधूक्तं ञिति णिति च तद्धिते परतइति । ननु इञादेस्तद्धितस्य ञकारस्थाने णकारमनुबन्धं कृत्वा सूत्रे णितीत्येव क्रियतां किंञकारग्रहणेन नापि ञित्त्वस्य प्रयोजनान्तरमस्ति स्वरस्तु नाऽत्र दोषाय । नचोत्तरार्थं ञकारग्रहणं कारयति पाचयति पाययति कारः पाकः पायः इत्यादौ ञिति घञादौ धातोर्नामिनः अत उपधाया अतो युगिगितिवृद्धियुक्तौ यथा स्यातामित्यपि न वाच्यम् । तत्रापि णिद्घणाद्युपदेशेन णितीत्येव सिद्धेः नचाऽप्य-णूकृतस्य भण ईवित्यादिकार्यस्य घणि प्रसङ्गः एकानुबन्धग्रहणेऽद्व्यनुबन्धकस्याग्रहणा-द्घञन्तस्य स्त्रियामप्रवृत्तेश्च प्रदेशेष्वपिञेरित्यादौ णेरित्यादेरेव निर्देशोस्तु एवं तर्ही-दमेव ञकारग्रहणं सामान्यज्ञापकतयानुबन्धकार्याणामनियमं ज्ञापयति तेन मा भवानटीदित्यत्र सेर्णित्वेप्यटेरुपधावृद्धिर्न अतएवचनोक्तमनित्यमिति वक्ष्यमाणमु-पपद्यते इहादिस्वरस्य ञ्णितीति शिति विभक्तव्यं तत्रच आ आदिस्वरस्येत्याकारा-न्तरं कृतं दीर्घं निर्दिश्यते अनेन चादिस्वरस्य शिति क्वचिदाकारादेशो विधीयते इति देविकायां भवं दाविकं श्रेयसि भवं श्रायसमित्यादि सिद्ध्यति । योगविभा-गस्य चेष्टसिद्ध्यर्थत्वान्नातिप्रसङ्गः । ततो वृद्धिरिति द्वितीये योगेप्यस्यानुवृत्तेर्मूलो-क्तोऽर्थः सिद्ध्यति । उकारस्येति । सावर्ण्यादौरऔवृद्धिरिति वृद्धिसंज्ञात्वाच्चेति भावः । वो । उ ओ अव् यस्वर इति च्छेदः तत्र वो इत्युकारौकारयोर्ग्रहणे न वका-रौकारयोर्व्याख्यानाद्विशेषप्रतिपत्तिरिति मत्वाह उकारस्यौकारस्येति । ननु वमात्र-मेवादेशः स्यादकारसत्त्वे प्रमाणाभावात् नच वाच्यमुकारस्य उवमित्येव सिद्धे वकारे पुनस्तद्विधानवैयर्थ्यमेव प्रमाणमिति वायव्यमित्यादौ यकारार्थत्वात् । नापि क्वचित्स्व यकार इति सिद्धिः तस्य ओअवित्यत्र गव्यूतिरित्यत्रादेशाविषयत्वप्रति-पादनात् असन्देहार्थं तर्हि वकारद्वयेन वोव्यस्वर इति निर्देशाभावप्रमाणमित्येवमा-देश इत्यभिप्रेत्याह । अव्भवतीति । ननु वोयस्वर इति सूत्रं कृत्वोवर्णस्यौकार एव विधीयतामवादेशस्य तु ओअवित्येव सिद्धत्वात् यकारोप्योदौतोर्यप्रत्ययःस्वरवदि-

**द्धिते यकारे स्वरे च परे । औपगवः । वासिष्ठः । गौतमः ॥ ऋउराणि ॥ षाण्मातुरः । द्वैमातुरः ॥ अत इञनृषेः * २६६॥**

ति वक्ष्यमाणत्वात् स्यादिति । व्यर्थं पुनरिदमव्विधानं चेत् न मापूर्वेणाऽवादेशेन क्वचिदोकारोविहन्यत इतीति ज्ञापनार्थत्वात् । तेन विष्णो इतीत्यादौ धिनिमित्तौ-कारान्तस्य वैदिके इतिशब्दे परे प्रकृति भावोपि सिध्यति । एवमप्योकारग्रहणं व्यर्थं प्राग्वत्तस्यावादेशसिद्धेः सत्यं यप्रत्ययस्यतु स्वरवत्त्वमसार्वत्रिकमिति ज्ञापना-र्थत्वान्न दोषः । तेन आऊयते इत्यत्राव् न अनेन तर्हि स्यादेति चेन्न यकोयकारे स्यात्तद्धितत्वात्तदेव मत्वाह । तद्धिते यकारइति प्रकरणादिति शेषः । असार्वत्रि-कमपियकारस्य स्वरवत्त्वमिष्टे विषये स्यादिति वाय्व्यमित्यादौ स्वर इत्येवोकार-स्यापि सिद्धेयकारग्रहणं स्वरे क्वचिदवाऽप्रवृत्तिं गमयतीति स्वायंभुव इत्युव् सिध्य-ति । औपगवइति । यथोक्तप्रक्रियायामेवं स्यादित्यर्थः । वासिष्ठ इति । वसिष्ठस्या-पत्यंगोतमस्यापत्यमित्यपत्येऽणि षष्ठीलोप आदिवृद्धौ यस्यलोपे इत्यलोपे नामत्वा-त्सेर्विसर्ग इत्यर्थः । अदन्तत्वात्त्रयाणामपि देववत्प्रक्रिया । षाण्मातुरइति । षट्-षता मातरश्चषण्मातरः तासामपत्यमित्यण्यादिवृद्धिः संख्यासंभद्रपूर्वस्य अपत्याण-न्तस्य मातुरशब्दस्य सहादिगणे पाठादकारस्य उर् तत एव च षस्य णत्वमेवं षाण्मातुरः भाद्रमातुरः इत्यपि तदिदमुच्यते । ऋउरणीति वक्तव्ये त्वस्मिन् सौ-मात्रः सौकर्त्रः इत्यादावप्युरस्यात् । अत इहातइति किम् अतसातत्यगमन इत्यस्य क्विबंतस्य ग्रहणं पृषदादीनामतो वा अशब्दस्य वा अकरान्तानां वा नाद्यः अनृषेरिति प्रतिषेधात् नहि ऋषिवाचकमदिति धातुरूपमास्ति, नापि द्वितीयः उक्तादेवहेतोः नह्यदित्यन्ताः ऋषिशब्दाः भूयांसः सन्ति अन्तरङ्गत्वाच्च शब्दप्रतीतेर्हि वर्णप्रतीतिरन्तरङ्गा वर्णप्रतीतिपूर्वकत्वाच्छब्दप्रतीतेः न च तृतीयः तत एव हेतोः नहि अइति कश्चिदृषिवाचीशब्दोस्तिततस्तुर्यमेव पक्षमभि-प्रेत्य व्याचष्टे अकारान्तान्नाम्न इति । अत एवानृषेरिति स्वरूपेणाग्रहणं मत्वाह । अनृषिशब्दादिति । न ऋषिं शब्दयत इत्यर्थः । अणोपवादोयं गौतमः वासिष्ठः । इत्यत्र त्वनृषेरिति प्रतिषेधादणुदाहृतः । कथं तर्हि शिवस्यापत्यं शैवः वासुदेवः प्रदीयतां दाशरथाय मैथिलीति । उच्यते इहात इति योगविभागः क्रियते । तत्र चाणनुवर्तते । ततश्चायमर्थः । अतः अकारान्तादणप्रत्ययो भवतीति एतच्च शिवा-

आकारान्तान्नाम्नोऽनृषिशब्दादपत्येर्थे इञ् प्रत्ययो भवति । दैवदत्तिः श्रैधरिः ॥ ण्यायनणेयणीयागर्गनडात्रि स्त्रीपितृष्वस्रादेः ॥ २७६ ॥ गर्गादेर्नडादेरत्र्यादेःस्त्रीलिङ्गा-

दिषु अणो बाधकस्येञो बाधनार्थम् । तत इञनृषेरिति द्वितीययोगेत इत्यस्यानुवृत्ते-र्मूलोक्तार्थः सिध्यति । यद्येवमनृषेरिति व्यर्थं वासिष्ठादिष्वपि अत इत्येवाणा इञो बाधसिद्धेः न योगविभागार्थत्वात् अनृषेश्चेञ् भवतीति । अनदन्तार्थमिदं तेन बाहो रपत्यं बाहविरित्यादि सिध्यति प्रयोगाच्च व्यवस्था योगविभागस्येष्टार्थत्वात् । दवदत्तिरित्यादिदेवदत्तस्यापत्यं श्रीधरस्यापत्यमितीञि आदिवृद्धौ यस्येत्यलोपे नाम वात् स्यादिषु हरिवत्प्रक्रिया ज्ञेया । अतः किम् । औपगवः । अनृषेः किं बाहविः । ण्याय इह च एण च य एण् चेतिद्वावेयणौएक शेषेण निर्दिष्टाविति पञ्चप्रत्ययाः प्रकृतयोप्यादिशब्दस्य प्रत्येकं संबन्धात् गर्गादि नडाद्यत्र्यादिस्त्रीपितृष्वस्रादिभेदा-त्पञ्चैवेति साम्यात्संख्यातानुदेशः अत्रिश्च स्त्रीचात्रिस्त्रियाविति पृथग्द्वन्द्वाश्रयणाद्वा स्त्रीति च न स्वरूपं गृह्यते तस्यात्र्यादिपाठादेव सिद्धे नापि रुयर्थः दौहित्र इत्यादावपि प्र-संगात् । अतः स्त्रीप्रत्यया एव गृह्यंते तेषां चात्र्यादिषु गौरवान्न कृतः आदिशब्दश्चासंभ-वात् । स्त्रीग्रहणेन न संबध्यते इति सर्वमेतदभिप्रेत्याह। गर्गादेरित्यादि । स्त्रीलिङ्गादिति। स्त्रियं लिङ्गयतीति स्त्रीलिङ्गः स्त्रीप्रत्ययस्तदन्ताच्छब्दादित्यर्थः । द्वावप्येयणावेकेनैव एयण् शब्देनोपात्तौ ज्ञेयौ । अन्यथा हि चत्वारः प्रत्ययाः पञ्चप्रकृतय इति वैषम्या-देकैकस्याः प्रकृतेश्चत्वारोपि प्रसज्येरन् ॥ द्वितीयोवा पक्ष आश्रयणीयः । अपत्येर्थे इति । अपत्यसामान्येर्थे इत्यर्थः । गार्ग्यः वात्स्य इति । गर्गस्यापत्यं वत्सस्यापत्य-मिति ण्येणित्वादादिवृद्धौ यस्य लोपः आदिना माधव्यो ब्राह्मणः काप्यः आङ्गिरस्य इत्यादयः । नाडायनः चारायण इति । नडस्यापत्यं चरस्यापत्यमित्यायनणि णित्त्वा-दादिवृद्धिः । द्वितीये अवकुप्विति णत्वम् आदिना वाकायनादयो ज्ञेयाः । ण्यान्तोप्यत्र गर्गादिगणे पठ्यत इति गार्ग्यादेरपत्येगर्गादेश्चतुर्थादौ गार्ग्यायणादयो ज्ञेया एवमिञन्तानामपि पाठाद्दाक्षायणादयोपि।आत्रेय इति । अत्रेरनन्तरापत्यं कपेरनन्त-रापत्यम् एयण् वृद्धिर्यस्येति लोपः इहात्र्यादिगणे भूशब्दोवगन्तव्यः पठ्यते इनन्तादे-शान्ताश्च कल्याण्यादय इति भ्रौवेयः काल्याणिनेय इत्यादि सिध्यति एवमन्यत्रापि यथा

त्पितृष्वस्रादेश्च ण्य आयनण् एयण् णीय इत्येते प्रत्यया भवन्त्यपत्येऽर्थे । गार्ग्यः । वात्स्यः । नाडायनः । चारायणः । आहेयः । माहेयः । गाङ्गेयः । पैतृष्वस्रीयः । लुग्बहुत्वे क्वचित् ॥ अपत्येऽर्थे उत्पन्नस्य प्रत्ययस्य बहुत्वे क्वचिद-

प्रयोगं तत्तद्गणकार्यं ज्ञेयम् । माहेय इति । मह्यागङ्गायाश्चापत्येत्रस्त्रीप्रत्ययान्तत्वादेय-णियस्येतीबापोर्लोपः । एवंवैनतेयादयोपिज्ञेयाः । स्त्रीप्रत्ययान्तत्वाभावाद्दरदोपत्यं-दारदः पैतृष्वस्रीयइति । पितृष्वसुरपत्येत्रणियेणित्त्वाद्वृद्धौकरम् एवंमातृष्वस्रीयो-पि । एतयोरन्यायादावपिकृतेऋलोपयोः पाठसामर्थ्यात्पैतृष्वसेयोमातृष्वसेयइति-एयण्यपिसिध्यति । आदिनाआत्रीयादयःभ्रातृव्यइतितुवुगन्तस्य भ्रातुर्गर्गादिपाठात् सिध्यति । यद्यप्यत्राऽपत्यसामान्येण्यादयोविधीयन्ते तथापिकृत्तद्धितानामभिधानल-क्षणत्वात्सिंहावलोकितन्यायेनणितोवेति । निपातस्य वाशब्दस्याऽत्रापि संबन्धाद्वा । गर्गादेर्नडादेश्च गोत्रापत्येण्यायनणौ भवत इति अनन्तरापत्ये पूर्वेणेञ्सिध्यतीति गर्गस्यानन्तरापत्यं गार्गिर्नडस्यानन्तरापत्यं नाडिरित्यादि स्यादित्यर्थः । प्राक्प्रत्यय-निर्देशो वैचित्र्यार्थः । लुग्वा । इहापत्यार्थे णादयश्चानुवर्तन्ते । तत्र यद्यणादयो बहुत्वेन विधीयेरन् अणादीनां बहुत्व इति अणादिकृते बहुत्वेर्थेइत्यर्थः । तदायद्यपि प्रिय आत्रेयो येषांते प्रियात्रेयाः कश्यपस्यापत्यं काश्यपः तस्य प्रतिकृतयः काश्यपाः इत्यादौ बहुव्रीहिकृते प्रतिकृतिकृते च नास्ति लुक् प्रसङ्गः तथाप्यनिर्दिष्टस्थानिको लुक् न प्रकृतेरणादीनां जसादेर्वा प्राप्नोति दृश्यते चाणादीनामेव तस्मादपत्यार्थो बहुत्वेन संबध्यते अपत्यार्थस्य बहुत्वे सत्युत्पन्नानामणादीनां लुगिति एवमपिगार्ग्यश्च वात्स्यश्च वाज्यश्च गर्गावत्सवजा इत्यादौ द्वन्द्वे लुक् न स्यात् अपत्यार्थस्यैकत्वेअणा-द्युत्पत्तेः । किञ्च युगपदधिकरणवचने द्वन्द्वइत्युच्यमानेपि दोषः । तथाहि अधिकरणं वृत्तिपदार्थः अधिकरणे युगपद्वचनं युगपदधिकरणवचनं तत्र द्वन्द्वो भवति । अयं भावः यावतां पदानां द्वन्द्वो यदि तावतामन्योन्यार्थाभिधानं युगपदेकेन पदेन भवति एवं द्वन्द्वो भवति एवं च यद्यप्येकैकस्य वृत्तिपदस्य द्वन्द्वे बह्वर्थत्वं तथाप्युत्पत्तिदशायां तद्धित एकस्मिन्नेवार्थे त्पन्न इति त्यज्यतामयं पक्षः आद्ये तु पक्षे प्रत्ययग्रहणे तदन्तग्रहणात्तदन्तकृते बहुत्वे प्रकृतत्वादणादीनां विधीयमानो लुगत्रापि भवतीत्याद्य एव पक्षः प्रमाणमित्यपि

**ष्यनृषिविषये लुग्भवति । गर्गाः अत्रयः विदेहाः ॥ देवतेदमर्थे ॥ * २६८ ॥ देवतार्थे इदमर्थे चोक्ताः प्रत्यया भवन्ति । ऐन्द्रं हविः । सौम्यम् । देवदत्तार्थमिदं दैवदत्तं वस्त्रम् ॥ क्वचिद्द्वयोः ॥ * २८९ ॥ क्वचित्पूर्वोत्तरपदाद्योर्वृद्धिर्भवति ।**

न वाच्यं गार्ग्यदेवदत्तयज्ञदत्त इत्यादावपि पूर्ववल्लुक्प्रसङ्गात् । नैषदोषः सर्वं वाक्यं सावधारणं भवतीत्यणाद्यंतेनैव कृते बहुत्वेर्थे इति व्याख्यानात्तेन चैवं भार्गश्च वात्स्यश्चाग्रायणश्च भृगुवत्साग्रायणा इत्यत्रापि लुग्नस्यादिति वाच्यम् । आयनणोऽप्यणादित्वात् । नचैवं तस्याऽपि लुक्प्रसङ्गः क्वचिद्ग्रहणात् । अत एव च गार्ग्यकाश्यपगालवानामा अत्रेर्न स्त्रिय इत्यादावपि लुक् न भवतीति स्थितमाद्यमेव पक्षमाश्रित्याह अपत्येर्थेइत्यादि । प्रत्ययस्येतिवाच्यवाचकसंबन्धे षष्ठीप्रत्ययस्यैव वाच्ये बहुत्वेर्थे सतीत्यर्थः । क्वचिदिति बहुलमित्यर्थः । अतएवाबहुत्वेपि क्वचिल्लुक् दृश्यते केरलस्य क्षत्रियस्यापत्यं केरलः शकः अणो लुक् तथा स्त्रियामपि शूरसेनीत्यादि ऋचीत्यादिसामान्येन विधानादिति भावः । गर्गा इति । गर्गस्यापत्यानिण्यस्य लुक् । अत्रय इति अत्रेरपत्यानीत्येयणः विदेहा इति । विदेहस्यापत्यानीत्यणः । बहुत्वे किं गार्ग्यः । देव । यागसंप्रदानं देवता । देवताच इदं च देवदतेदं स एवार्थो देवतेदमर्थः तत्र अर्थशब्दश्चात्र प्रत्येकंसंबध्यते इत्याह । देवतार्थे इदमर्थे चेति । क्ताइति । अणादय इत्यर्थः । अर्थग्रहणं स्वरूपग्रहभ्रमनिरासार्थे इद मउत्तरार्थं च ऐन्द्रमिति । इन्द्रो देवता अस्येत्यत्र देवतार्थे अणि वृद्धिर्यस्य लोपश्च । सौम्यमिति सोमो देवतास्येतिण्ये प्राग्वत् देवतार्थमिति । देवदत्तस्येदमित्यर्थः । इदमर्थेऽत्राणि वृद्ध्यलोपौ । क्वचित् । इहादिस्वरस्य ञिति वृद्धिरित्यनुवर्त्तते नाम्न इतिच तत्र द्वयोरित्योत आदिस्वरविशेषणं नह्येकस्मिन्नामनि द्वावादिस्वरौ भवतः यदि तृतीयमपेक्ष्यस्यातां द्वितीयस्तत्र समुदायापेक्षया नादिरिति नाम्नो विशेषणं नाम चात्र पदमित्युक्तं ततश्च ञ्णिति तद्धिते परे द्वयोर्नाम्नोरादिस्वरस्य वृद्धिः स्यादित्यर्थः । यत्र चैकतद्धिते द्वेनामनी तत्रावश्यमेकं पूर्वमपरं चोत्तरमिति सर्वमेतदालोच्याह पूर्वोत्तरपदाद्योरिति । पूर्वोत्तरपदयोरादी पूर्वोत्तरपदादी तयोः स्वरयोरित्यर्थः । आग्निमारुतं कर्मेति । अग्निश्च मरुच्चाग्निमरुतौ तौ देवते अस्येति देवतार्थेऽण् अग्निमरुतोराद्यकारयोर्वृद्धिराकादौ

आग्निमारुतं कर्म, सौहार्दम ॥ अत्र भावेऽण् वक्तव्यः ❀ ॥ णितो वा ❀ २७० ॥ उक्ताः प्रत्यया विषयान्तरे णितो वा भवन्ति । अजगुस्तस्येदं धनुः आजगवमजगवम् वा । कुमुदं गन्धे यस्य तस्यापत्यं स्त्री कौमुदगन्ध्या । श्वाशुर्यो ग्रामः । वैष्णवम् । गव्यम् । कुल्यम् । त्वदीयम् । मदीयम् । चतुरश्चलोपो वक्तव्यः । तुर्यः । तुरीयः ॥ अन्यस्य

ननु देयपुरोडाशादेः स्वामिनीदेवता कर्म च न देयं तत्र कथं कर्मणि प्रत्ययः उपचारात् ऐन्द्रो मन्त्र इति । सौहार्दमिति । सुहृद इदमितीदमर्थे सुहृदोभावः इति भावार्थे वाणिसोरौकारो वृद्धिः हृदश्चार् । अत्र भाव इति सौहार्दमित्यत्र वक्तव्य इति णितो वेति व्याख्येय इत्यर्थः । क्वचिदिति किं सोमेन्द्रं हविः अत एव क्वचिद्ग्रहणाद्यथाप्रयोगं सर्वापि वृद्धिर्विवेक्तव्या । णित उक्ताः प्रत्यया अणिञ्ण्यादयः यद्यनेन योगेनोक्तार्थे एव णित्वं वा विधीयते तदा देवतेदमर्थे णितो वेत्येक एव योगः क्रियेत । अतोर्थान्तरे प्रत्ययविधानार्थमपि पृथग्योग इत्यभिप्रेत्याह । विषयान्तर इति । अन्यो विषयो विषयान्तरमर्थान्तरमिति यावत् । अथवा देवतेदमर्थे इत्यतोर्थग्रहणानुवृत्तेर्विशिष्टेर्थे विधिर्लभ्यते वृत्तेश्चायमर्थः । अणादयः प्रत्यया अर्थान्तरे भवन्ति ते च वा बहुलं णितो भवन्ति तेनोपगोर्जीवतश्चतुर्थापत्यम् । औपगविरिति । उपगोर्जीवतश्चतुर्थापत्ये इञ् भवति । तथा अङ्गानां देशानां राजा आङ्गः वाङ्गः सौह्मःनैषधः नैषध्य इत्यादि तथा लुग्बहुत्वे क्वचिदित्यप्यत्रानुवर्तते तेनात्रापि प्रत्ययकृतबहुत्वे क्वचिल्लुग्भवति अङ्गाः वङ्गाः सुह्मा इत्यादि तथा चक्षुषा गृह्यते चाक्षुषं रूपं भिक्षाणां समूहो भैक्षं कैदार्यं ब्राह्मण्यं बिल्वाः सन्त्यस्मिन्देशे बैल्वो देशः संकाशेन निर्वृत्तंसांकाश्यं नगरं शिवानां निवासो देशः शैवः सुतङ्गमस्यादूरं भवो ग्रामः सौतङ्गमिः पञ्चाला जनपद इत्यादौ तु पञ्चालादयः शब्दा विनैव क्षत्रियसंबन्धजनपदे रूढयावर्तन्ते इति नार्थोत्र वद्धितेन नन्तरां सुपानतमां प्रकृतिवल्लिङ्गवचनेन तथा चाह भगवान् पाणिनिः तदशिष्यं संज्ञाप्रमाणत्वात् लुब्योगाप्रख्यानात् योगप्रमाणे च तदभावे दर्शनं स्यादिति एवं व्रणानगरमित्यादावपि वेद्यं वृक्षयोगं विनापि वरणादीनां नगरे रूढिः तथा

दक् ॥ अन्यदीयम् । अर्द्धजरतीयम् । कारकात्क्रियायुक्ते ॥ * २७१ ॥ कारकादप्येते प्रत्यया भवन्ति क्रियायुक्ते कर्तरि कर्मणि चाभिधेये । कुङ्कुमेन रक्तं वस्त्रं कौङ्कुमम् । मथुराया आगतः माथुरः । ग्रामे भवः ग्राम्यः । धुर्यः । धौरेयः ॥ केनेयेकाः * २७२ ॥ क ईन इय इक इत्येते प्रत्यया भवन्ति भवाद्यर्थेषु णित्त्वञ्चैषां वैकल्पिकम् । क-

वामदेवेन दृष्टं साम वामदेव्यं वस्त्रेण परिवृतो वास्त्रो रथ इत्यादौ तेषु तेष्वर्थेष्वणादयस्तद्धिता अनेन विधेयाः विस्तरभयान्नोदाहृताः । अजगुरिति बहुव्रीहौ गोरिति ह्रस्वे उकारःतस्येदंधनुरिति धनुश्चेद्विवक्ष्यत इत्यर्थः । धनुःशब्दोपादानेन णितो वेत्यस्य विषयोर्थविशेषो दर्शितः । अजगवमिति । अजगुशब्दाद्धनुष्यर्थेत्राणि वृद्धौ वोव्येत्युकारःस्यात् अणित्त्वाभावान्नवृद्धिरिति विशेषः । ईश्वरधनुषश्चसंज्ञेयंतथोक्तममरेण पिनाकोजगवंधनुरितितस्यापत्यं स्त्रीति कुमुदगन्धेरियं स्त्रीचेद्विवक्ष्यत इत्यर्थः । अत्रापि स्त्रीति वदताविशेषविषयोदर्शितः कौमुदगन्ध्येति । ण्यपत्येर्थेत्र वाच्ये ण्ये प्रत्यये वृद्धौ यस्येति लोपे आबत इत्यापि गङ्गावत्प्रक्रिया स्यादिति भावः । नित्यमत्रवृद्धिमुदाहरता सूत्रे वाशब्दस्य व्यवस्थितार्थत्वं दर्शितम् अतएव श्वशुर्यं इत्यत्र गर्गादेरपिश्वशुरादिहण्योवृद्ध्यभावश्चोदाहृतः गर्गादिनेति वा यथास्वमुक्तानामपि प्रत्ययानां णितोवेति श्वशुणित्वं बहुलं विदधातीति प्रदर्शनार्थमतएव श्वशुरस्यापत्यमित्यपि विग्रहः । विष्णोरिदमिति । आराध्याराधकभावेनेतिशेषः । ततश्च विष्णुभक्तिरस्येत्यर्थः । इदमर्थेपि वा विहितस्यापि णित्त्वं वा स्यादिति प्रदर्शनार्थमेवं विग्रहोदर्शितः । अत एव रथस्येदं रथ्यमित्यादौ वृद्ध्यभावःगव्यमितिगोर्विकारोवयवोवेति ण्ये णित्त्वाद्वृद्धौ वोव्यस्वर इत्यव् । कुल्यमिति । कुले भवमित्यर्थे ण्यः अणित्वाद्वृद्धिरलोपः । त्वदीयमिति । तवेदमिति णीयः अणित्त्वादवृद्धिर्विभक्तेर्लुक्यप्येकत्वार्थस्य सत्त्वात् त्वन्मदेकत्व इति त्वदादेशः । मदीयमिति । प्राग्वत् । चतुर इति । चस्य लोपश्चलोपः सहादित्वाद्व्याख्येय इति भावः । तुर्यः तुरीयइति चतुर्णां पूरण इत्यर्थे चतुरशब्दाण्णेणीये चाणित्वाद्वृद्धौ सादीति तुरादेशः अन्यस्येति । एतदपि सहादित्वात् ज्ञेयम् । अत एवान्यदाशीरित्यादावपि भवति

र्णाटकः । कार्णाटकः ग्रामादागतस्तत्र जातो वा ग्रामीणः । सध्रीचीनः । समीचीनः । तिरश्चीनः ॥ यलोपश्च । कन्याया जातः कानीनः । पुष्येण युक्ता रात्रिः पौषी । क्षत्रियः । क्षात्रः । शुक्रियम् । इन्द्रियम् । आक्षिकः । शाब्दिकः । वैदिकी ॥ अमादेरद्यादेस्त्यतनौ ॐ ॥ अमात्यः कुत्रत्यः । कुतस्त्यः । तत्रत्यः । ततस्त्यः अद्यतनः । ह्य-

अन्यदीयमिति । अन्यस्येदं जातं भवमागतं चेति णीयेणिस्त्वादवृद्धौ सहादीत्यन्यद्वादेशः स इव चदगिति प्रपञ्च्यते । अर्धजरतीयमिति । प्रागवद्वृद्धिः इदमेव च वाग्रहणसिंहावलोकितन्यायेन पूर्वसूत्रैरपि संबध्यमानममादीनपि विकल्पयतीति तद्धिताभावे उपरगोरपत्यमुपगवपत्यमिति भवत्समासोपि अमादावित्यत्र विकल्पानुवृत्तेः पाक्षिक इति तत्राप्येवमुदाहार्यम् । कार अक करोतीति कारकमिति वुन्तस्य कारकशब्दस्य ग्रहणे कारकशब्दार्थः । कर्तैवेति कर्तुरेव प्रत्ययः स्यात् वररुचिना कृतो ग्रन्थो वाररुच इत्यादि इहहि न स्यात् कुङ्कुमेन रक्तंवस्त्रं कौङ्कुममिति नहि करणादीनि कारकादीनिशब्दस्य वाच्यकर्तृशब्दस्यवास्वतन्त्रत्वात् तथा च सति कर्तुः क्रियायुक्त इत्येव सूत्रं कार्यं स्यात् लाघवमप्येवं सूत्रस्य भवति । अतोज्ञायतेकारकशब्दोऽयमव्युत्पन्न एव संज्ञाशब्दो निमित्तपर्यायः क्रियाहेतावेव प्रसिद्धो गृह्यते तथोक्तंकारकं नियतक्रियमिति तच्चार्थात् कर्त्रादिषड्विधं । तदुक्तं कर्ता कर्म च करणं संप्रदानं तथैव च । अपादानाधिकरणे इत्याहुः कारकाणि षडिति । तस्मात् क्रियानाम यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रयक्रमरूपत्वात् सा क्रियेत्यभिधीयत इति लक्षितया क्रियया युक्ते तस्मिन्निति कर्तृसामर्थ्यात् कर्तरिकर्मणि चेत्यर्थः । भावस्तु क्रियैव न तु क्रियायुक्तः । अथवा कार्षयोक्तादविस्यतो मण्डूकप्लुत्यानुवृत्तयोः कर्तृकर्मणोर्विशेषणमेतदिति मत्वाह क्रियायुक्ते कर्तरि कर्मणि चेति । कुङ्कुमेनेति । अत्र कुङ्कुमात्करणकारकाद्रक्तक्रियायुक्ते वस्त्रेकर्मणिवाच्येऽणिस्त्वाद्वालोपः । ननु चैवं देवदत्तेन रक्तंवस्त्रमित्यादौ कर्तृकारकादपि तद्धितः प्राप्नोति न च कर्तृकर्मणोर्निमित्तभावेन साक्षादुक्तेन प्रत्ययोत्पत्तिं प्रतिकारकत्वानुमितस्यकार्यित्वस्य माठरकौण्डिन्यन्यायेन बाधान्न भवतीति वाच्यम् । इन्द्रेण कृतो ग्रन्थ ऐन्द्रः धुरं वहतीति धुर्य इत्यादौ क-

स्तनः । सदातनः । सनातनः ॥ स्वार्थेपि * २७३ ॥ उक्ताः प्रत्ययाः स्वार्थेपि भवन्ति । देवदत्त एव देवत्तकः । चातुर्वर्ण्यम् । चौरः ॥ अणीनयोर्युष्मदस्मदोस्तवकादिः ॥ तावकम् । मामकम् । तावकीनम् । मामकीनम् यौ-

र्तृभ्यामपि दृश्यमानत्वात् । एवं तर्हि प्रयोगाभाव एवात्र परिहारः व्याकरणस्य प्रयोगमूलत्वात् । मथुरायाआगतइति । अपादानकारकादत्राऽगमनक्रियायुक्ते कर्त्तर्यभिधेयेणप्रत्यये वृद्धावलोपे च माथुरा इति स्यादित्यर्थः । ग्रामेभवइति । भवतीति भव इति क्रियायुक्ते कर्त्तरि अधिकरणात् ग्रामात् ण्ये लोपः एवंधुर्यइत्यादौ कर्मणि धुरो ण्यः अत्रापि णितोवेत्यनुवृत्तेर्न वृद्धिः दीर्घाभावश्चात्र य्वोर्विहस इत्यत्र प्रतिपादितः । धौरेयइति । प्राग्वदेयणि वृद्धिरेव छन्दोऽधीते छान्दसः नैरुक्त इत्यादयो ज्ञेयाः । युक्त इतिकिं मथुराया आगमनमकेन । इहकश्च ईनश्च इयश्च इकश्चेतिव्याख्यानात् प्रयोगाद्वा इमे चत्वार एव प्रत्यया इति मत्वाह कईनइयइकइति । भावाद्यर्थेष्विति । आदिना जातागतग्रहणप्रयोजनादयो ज्ञेयाः । णित्त्वं चैषां वैकल्पिकमिति । एतच्च सर्वं णितो वेत्यनुवृत्तेर्लभ्यते कार्णाटकः कर्णाटकइति । अत्र कर्णाटशब्दाद्भवार्थेकःतस्य णित्त्वात्पाक्षिकी वृद्धिः । ननुचात्रकारकात्क्रियायुक्तेकेनेयेकाश्चेत्येकयोगेऽप्यणादयः कादयश्च तेनैव सेत्स्यंतीति किमनेनयोगान्तरेण । उच्यते अकारकार्थमक्रियायुक्तकर्तृकर्मार्थश्चेदं वचनं निष्कस्य विकारो नैष्किकः शतस्य विकारः शतिकः औष्ट्रिकः उमीर्णयोरौमकमौर्णकमित्यादि औममौर्णमितितु णितो वेत्यणा सिध्यति अविशेषात् । कारकादपि प्रवर्तते इतिमत्वा कारकस्योदाहरणानि दर्शितानि । नह्यत्र कारकादित्यनुवर्तते । ग्रामीणइतिईने अलोपे अवकुप्विति णः । सध्रीचीनइति । सध्रीचि भवादिः ईने अचेर्दीर्घश्चेत्यलोपदीर्घौ एवंसमीचीन इत्यादि।यलो पश्चेति । कानीनइत्यादीनां सहादित्वादिति भावः । कानीनइति । कन्यायां जात इत्यर्थे कन्याया ईनः णित्त्वादादिवृद्धिः । सहादीति यकारनाशः । पौषीति । पुष्येण युक्ता रात्रिरित्यर्थे कारकादिति युक्तक्रियायुक्ते कर्मणि रात्रौ पुष्यात् कर्तुरणि वृद्धौ सहादीति यलोपः पूर्वसूत्रोदाहरणमेतच्च लोपप्रसङ्गादिहोक्तम्।क्षत्रिय इति।जातिविशेष इत्यर्थः । अत्र णितो वेत्यतो निपातस्य वाशब्दस्यानुवृत्तेः क्षत्राज्जातो विषयः अणि-

ष्माकः । आस्माकः । यौष्माकीणः आस्माकीनः । वत् तुल्ये ॥ ॐ २७४ ॥ सादृश्यार्थे वत्प्रत्ययो भवति । चन्द्रवन्मुखम् । घटवत् । पटवत् ॥ भावेतत्वयणः ॥ ॐ २७५ ॥ शब्दस्य प्रवृत्तिनिमित्तंभावस्तस्मिन्भावे तत्वयण्इत्येतेप्रत्य-

त्वाद्वृद्धिः जातेरन्यत्र तु क्षत्राद्वैश्यायां शूद्रायां जातइति णितोवेत्यणेव स्यादित्याह क्षात्र इति । शुक्रियमिमि । शुक्रो देवता अस्येति देवतार्थे शुक्रादियः अणित्वादवृद्धिः । इन्द्रियमिति । इन्द्रस्यात्मनोलिङ्गमनुमापकमित्यर्थः । अत्रेन्द्रादिये प्राग्वदवृद्धिः । आक्षिक इति । अक्षैर्दीव्यतीत्यर्थः । अक्षादिके वृद्धिः । शाब्दिक इति । शब्दं करोतीत्यर्थे प्राग्वत् एवं वैदिकी इत्यत्रापि वेदे भवेत्यर्थः । नद्यादीत्वादीप् तथा शक्तिः प्रहरणमस्येत्यत्रशक्तिशब्दादिकेवृद्धौ संज्ञापूर्वकस्य विधेरनित्यत्वादिलोपाभावे सवर्णे दीर्घः सहादीति वा दीर्घः शाक्तीकः । एवं याष्टीकोपि इन्द्रमहः प्रयोजनमस्येति ऐन्द्रमहिकं माहिकम् । त्यतनाविति । अमाद्यादेरिति । अमाचाऽद्यं च अमाद्यौ तावादी यस्य स अमाद्यामाद्यादिस्तस्मादमादेरद्यादेर्भवाद्यर्थे यथासंख्यं त्यतनौ प्रत्ययौ वक्तव्यावित्यर्थः । अमात्यइति । अमा भव इत्यर्थः । अमेत्यव्ययं सहार्थे । अमा सहसमीपेचेत्यमरः । कुत्रत्य इत्यादीति कुत्र भवः कुत आगतस्तत्रभवः तत आगत इत्यर्थः अमादेरत्रत्यः । अद्यतनइत्यादीति । अद्यागतः ह्योगतेऽह्निजातः सदाभव इत्यर्थः । अद्यादेरत्र तनः स्वार्थे स्वार्थः प्रकृत्यर्थ एव । उक्ताः प्रत्ययाइति अणादयः कादयश्चेत्यर्थः । अत्र णितो वेत्यनुवृत्तेस्तेऽपि णितो वा स्युर्बहुलं भवन्तीतिशेषः । अतएव विनय एव वैनयिक इत्यादौ णित्वाद् वृद्धिः । चातुर्वर्ण्यमिति ण्यं णित्वाद्वृद्धिः । चौरइति । अणिप्राग्वत् अपिग्रहणं किं न चापत्याद्यर्थे बाधः तत्राविधिसामर्थ्यात् योगविभागात् । योगविभागार्थे तर्ह्यपिग्रहणं स्वार्थ इत्येको योग–उक्त एवतस्यार्थः । अपीति द्वितीयो योगः तत्र कादयोनुवर्तन्ते मण्डूकप्लुत्या अपत्याद्यर्थाश्च तेनकादयोपत्यदेवतेदमर्थेष्वपि सिध्यंति अत एवक्षत्रियइत्यपत्यार्थस्योदाहरणं दर्शितम् । शुक्रियमिति देवतार्थस्यैव तथा कटस्येयं काटकमितीदमर्थेपिकः । कुलस्यापत्यं कुलीन इत्यपत्यार्थ ईनः रेवत्या अपत्यं रैवतिकः इतीकः इत्यादिप्रयोगाद्व्यवस्था । अणीनयोरिति । अणि ईने च परे परतः युष्मद एकत्वे तवक आदेशः द्वित्वब-

या भवन्ति । ब्राह्मणस्य भावो ब्राह्मणता तान्तस्य नित्यस्त्रीलिङ्गत्वादाप् ॥ समाहारे तागुणश्च * ॥ त्रेता । जनता ब्राह्मणत्वम् । सौमनस्यम् । सौभाग्यम् वैदुष्यम् ॥ कर्मण्यपि यण्त्व्यः ॥ राजन्यम् । राज्यम् । नोवेतिटिलो-

द्वत्वयोर्युष्माक एवमस्मदोपि ममकोऽस्माकश्च सहादित्वादिति शेषः । तत्र च पठ्यते यौष्माकः आस्माकःयौष्माकीणः आस्माकीनः एकत्वे तावको मामकः तावकीनः मामकीन इति तथाच श्रीपाणिनेः सूत्रं तस्मिन्नणि च युस्माकास्माकौ तवकममकावेकवचन इति तावकमिति । तवेदमित्यणि युष्मदः तवको वृद्धिश्च एवं मामकमित्यस्मदः ममको वृद्धिश्च एवं तावकीनं मामकीनमिति ईने । यौष्माकमिति युवयोः युष्माकं वायमित्यणि युष्मदो युष्माकेवृद्धिरेवमावयोरस्माकं वायमस्माक इत्यस्मदोऽस्माके तथा यौष्माकीणः अस्माकीनइतीन ईनस्याद्ये चावकुप्विति णत्वम् । वत्तु । त्यइतिप्रत्ययार्थस्यविशेषणमित्याह सादृश्येर्थे वप्रत्ययइति । प्रत्ययइति । प्रत्ययान्तेनचाविशेषात्क्रियाद्रव्यगुणसादृश्यं प्रतीयत इत्यर्थः । एवं च गवा तुल्यो गवयः पुत्रेण तुल्यः स्थूल इत्यादौ द्रव्यगुणसादृश्योऽनभिधानान्न यत्र त्वभिधानमस्ति कुत्र तत्रापि स्यादेव यथा मथुरायामिव मथुरावत् तुल्ये प्राकारो देवदत्तस्येव देवदत्तवत् यज्ञदत्तस्यस्थौल्यमिति । तथोदाहरति । चन्द्रवन्मुखमिति शोभनमितिवाक्यशेषः । चन्द्रेण तुल्यं चन्द्रवन्मुखंचन्द्रशोभनतुल्यं शोभनरतिशोभनक्रिया चन्द्रमुखयोस्तौल्यमिति प्राधान्यात् चन्द्राद्वत् प्रत्ययः तस्य च चादिषु पाठात् तदव्ययमित्यव्ययत्वात् अव्ययादविभक्तेर्लुगिति स्यादेर्लुकिविभक्त्यन्तत्वात्पदत्वं घटवदिति । घटस्येव घटवत् उदरं देवदत्तस्येति शेषः द्रव्यसाम्यान्न भटा इति प्राग्वत्प्रक्रिया एवं पटवदित्यत्रापि पटे इवपटवत् तनुत्वं पत्रेइतिशेषः गुणसादृश्येत्र तदा इति प्राग्वत् । भावे । भावशब्दस्याभिप्रायादित्यर्थत्वात्कोत्रार्थोभिप्रेत इतिशङ्कामपाकरोति।शब्दस्येत्यादि । भवतेः करणे अत्रघञ् भतोऽनेनशब्दप्रत्ययाविति गोत्वादिना हि विशेषिते गवादौ गोरित्यादिशब्दः प्रवर्तते गौर्गौरित्यादीरभिलाकारश्च प्रत्ययो भवति अतः ओयं गोत्वादिर्गवादेः शब्दस्य प्रवृत्तिनिमित्तमिह भावशब्देनोच्यत इत्यर्थः स च भावोऽनेकविधः जातिगुणसंबन्धस्वरूपादिभेदेन एतच्च सुविशदमाहभाष्यादे-

यः ॥ लोहितादेरिमन् डिञ्च * ॥ लोहितिमा । अणिमा ॥ ऋरइमनि * २८० प्रथिमा । बहोर्लोपोभूच बहोः * २७८। भूमा ॥ अस्त्यर्थे मतुः * २७६ ॥ नाम्नोऽस्त्यर्थे मतुः प्रत्ययो भवति अस्याऽस्मिन्वाऽस्तीत्यर्थे । उकारो नुमीब्विधानार्थः । गोमान् । श्रीमान् । गोमती । श्रीमती ॥ अ-

रवगन्तव्यं विस्तरभयादिहनोक्तम् । ब्राह्मणस्य भावइति । यदा ब्राह्मणशब्दो जातिमात्रवाची तदा यो ब्राह्मणशब्दः स एवार्थ इति शब्दस्वरूपमेव तत्र प्रवृत्तिनिमित्तमिति तत्र प्रत्ययः यदा तु जातिविशिष्टद्रव्यवाची तदा जातिविशेष इत्यर्थः । ब्राह्मणतेति । तप्रत्ययः । तान्तस्येति । तप्रत्ययान्तशब्दशक्तिस्वाभाव्यान्नित्यास्त्रियमेवाहेति स्त्रीत्वाददन्तत्वादावतः स्त्रियामित्याप्स्यादित्यर्थः । समाहार इति । समूहेर्थे तप्रत्ययो गुणश्च यथाप्रयोगं वक्तव्य इत्यर्थः । आपो नित्यत्वात्तेतिनिर्देशः । त्रेतेति । त्रयाणां समूह इत्यर्थः । तत आप् इकारस्य एकारो गुणः जनतेति । जनानां समूह इत्यर्थः । ब्राह्मणत्वमिति । ब्राह्मणस्य भाव इति त्वः एवं ब्राह्मण्यमिति यण्यलोपः । सौमनस्यमिति । सुमनसो भावः सुभगस्य भाव इत्युभयत्र यण् आदिवृद्धिः । वैदुष्यमिति । विदुषोभाव इति यण् वसोर्व उरिति वस्योत्वे विदेर्वसुरिति कृतस्य सस्य क्तिलादितिषः । नानात्वमित्यादौ तु नानादयः शब्दाः असद्भूतादावर्थेवर्तन्त इत्यसहभावादौ भावप्रत्ययः । कर्मण्यपीति । अपिशब्दाद्भावेपि । राजन्यं राज्यमिति राज्ञः कर्म भावोपीत्यथ याणि पक्षे टिलोप इत्याह नोवेतीति । यकारपरत्वादितिभावः । लोहितादेरिति । एभ्यो भावेर्थे इमन् प्रत्ययो डिञ्च वाच्य इत्यर्थः । लोहितिमेति । लोहितस्य भाव इतीमन् डिति टेरित्यलोपे सौ नोपधाया इति दीर्घे सिनलोपे च राजवत्प्रक्रिया । अणिमेति । अणोर्भाव इतीमनि डित्त्वादुलोपः । ऋर इति । पृथुमृदुभृशकृशदृढपरिवृढानामिमन्नन्तानां कृतरेफाणां सहादिषु पाठादेषामृकारस्येमनिर इत्यर्थः । अत एव कृष्णस्य भावः कृष्णिमेत्यादौ रो न । अथवाऽवक्तव्यमेतत् प्रयोगाभावाच्च कृष्णिमेत्यादौ रो न । प्रथिमेति । पृथोर्भाव इतीमनि टिलोपे ऋकारस्य रः । बहोर्भावइतीति । भूमेत्यस्यार्थबोधके ईदृशे वाक्ये सतीत्यर्थः । बहोरिति । भूमेत्यस्य सहादिषु पाठाद्बहोः परस्य इमन इकारस्य लोपो बहोश्च भू इत्यादेशः स्यादित्यर्थः । भूमेति । उक्तप्रक्रियायां कृतायां भूमानौ भूमानः इत्यादीनि राजवद्रूपाणि स्युरित्यर्थं

इकौ च मत्वर्थे ॥ वैजयन्तः । मायिकः ॥ मान्तोपधाद्व-त्विनौ ॥ २७७ मकारान्तान्मकारोपधादकारान्तादका-रोपधाच्च वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे । भगवान् । धनी । दृषद्वती भूमिः । किम्वान् । लक्ष्मीवान् । शमी ॥ तडित्वा-दिभ्यश्च ॥ तडित्वान् । एतत्किं यत्तदेभ्यः परिमाणे व-

अस्त्यर्थे । कर्तृविशिष्टः संप्रतिसत्तेति भूतभविष्यत्सत्तायां न तत्रापि कर्तुरेव प्राधान्यात् । कार्ययोग इति अस्तेः प्रयोगे कर्तुर्मतुः स्यादित्यर्थः । अनभिधाना-दन्यस्मान्न । अस्त्यर्थ इति । वाप्रकृत्यर्थविशेषणं तत्सामर्थ्यात् प्रथमान्तात्प्रत्ययः । अथवा अनिटो नामिवत् इत्यत्र नामिवदिति निर्देशात् ज्ञापकात् प्रथमान्तात् षष्ठ्यर्थे सप्तम्यर्थे वा प्रत्यय इत्यभिप्रेत्याह । नाम्न इत्यादि एवं च गावोस्य सन्त्यनन्तरा इत्यादौ प्रसक्तो मतुः सापेक्षत्वेनानन्वयान्न यथा चित्रा गावोस्य सन्तीति वाक्ये प्रत्येकं न तद्धितोपि सामर्थ्ये सत्येवभवतीति समाससूत्रयुक्तमेव चित्रगुरित्यादौ च बहुव्रीहिणोक्तार्थत्वान्न । उकारइति । मतोरिति शेषः । अर्थशब्दः प्रयोजन-वाची तत्र गोमानित्यादौ त्रितोनुमिति नुमो गोमतीत्यादौ च ष्ट्रित इतीपो विधानं चास्य प्रयोजनमित्यर्थः गोमानिति गावोस्य सन्तीति गोमतुः उदित्वाद्वृतो नुम् अत्वसोरिति दीर्घः सिलोपः संयोगान्तलोपः भवतुशब्दवत्प्रक्रिया । एवं श्रीमा-निति देश इति शेषः । श्रीरस्मिन्नस्तीत्यर्थः । प्रक्रिया तु प्रागवत् । गोमती श्रीमतीति गावः सन्त्यस्याः श्रीरस्यामिति मतौ उदित्त्वात् ष्ट्रित इतीपि रूपाणि नदीवत् । अइकाविति । अश्चइकश्चतौमत्वर्थे अस्यास्मिन्वास्तीत्यर्थे वक्तव्याविति शेषः । वैजयन्तइति । वैजयन्तीपताका सास्यास्तीत्यर्थे अः ईलोपः । मायिक इति । माया अस्यास्तीतिके आलोपः । मान्तो । इह मूच अश्चमौ अन्तश्चोपधाचान्तोपधे मावन्तोपधे यस्यासौ मान्तोपधस्तस्मान्मान्तोपधात् वतुच वत्विनौ इति मयोरन्तो-पधयोर्वत्विनोश्च साम्येपि संख्यातानुदेशोनभवतिनामिवत् इति नोनलोपेनमो पधादपिवती निर्देशात् । असंदेहार्थमातोपधावतिनाविति निर्देशाभावाद्वा इ-त्यभिप्रेत्याह मकारान्तादित्यादि । अस्त्यर्थ इति । अस्यास्मिन्वास्तीत्यर्थ इत्यर्थः । तथा क्रमेणोदाहरति । भगवानिति भगोस्यास्तीत्यकारान्ताद्वतुः । भगः श्रीका-ममाहात्म्यवीर्ययत्नार्ककीर्तिष्वित्यमरः । धनीति । धनमस्यास्तीत्यदन्तादत्रेनि ततो नामत्वात्सावीनांशौ साविति दीर्घे सिलोपे नलोपे च दण्डिन्वत्प्रक्रिया ।

**तुः ❀ ॥ यत्तदोरा: ॥ यावान् तावान् ॥ किमः किर्यश्च ॥ कियान् ॥ आइश्चैतदोवा ॥ एतावान् । इयान् ॥ तुन्दादेरिलः ❀ । तुन्दिलः । औन्नत्ये दन्तादुरः ❀ । दन्तुरः । श्रद्धादेर्लुः ❀ ॥ श्रद्धालुः ॥ अस्मायामेधास्रग्भ्योऽस्त्यर्थेविन्वक्तव्यः ❀ ॥ तपस्वी । मायावी । मेधावी । स्रग्वी ॥ वाचोग्मिन् ❀ ॥ वाग्मी ॥ आलाटौकुत्सितभाषिणि ❀ ॥ वा-**

दृषद्वतीति । दृषदः सन्त्यस्यामित्यकारोपधाद्वतौ भूमेः स्त्रीत्वादीपि नदीवत् । इनिस्तु हसान्तादनभिधानान्न यथा पवमानित्यादावदन्तादपि वतुः यत्रत्वभिधानमस्ति तत्र स्यादेव चमीकमीवमीचेति । कंवानिति । मान्तत्वाद्वतुः । लक्ष्मीवानितिमुपधत्वात् शमीति । शमोस्मिन्नस्तीति अदन्तत्वान्मुपधत्वाद्वा विनिः तडिदित्यादि । अस्त्यर्थेवतिवनौ वक्तव्याविति शेषः । मान्तोपधत्वाभावात् पूर्वेण न प्राप्नुत इत्यारम्भः । तडित्वानिति । तडिदत्रास्तीति वतुः तकारस्यात्र चपा अबं इति दत्वं तु सहादेरिति तान्तत्वविधिसामर्थ्यान्न इन्नुदाहरणं तु व्रीहयः सन्त्यस्यासौ व्रीही शालयोऽस्यसन्तिशालीति ज्ञेयम् । एतादित्यादि । वक्तव्य इति शेषः परिसमन्तान्मानं परिमाणम् । उक्तं च ॥ परिमाणं तु सर्वतः । यत्तदोरिति । एतयोर्वतौ प्रत्यये परे आत्वं सहादित्वादित्यर्थः । यावान् तावानिति । यत्परिमाणमस्य तत्परिमाणमस्येति वतौ यत्तदोरिति षष्ठीनिर्दिष्टत्वादकारस्यात्वे सवर्णोदीर्घः । किम इति । किमः किरादेशो वतोर्वस्य सहादित्वाद्यश्च स्यादित्यर्थः कियानिति । किं परिमाणमस्येति वतौ किमः सर्वस्य क्यादेशे वस्य यत्वम् । आइशिति । एतद आत्वं वा स्यात् सामर्थ्यात्तदभावे इशादेशे तत्रैव चकाराद्वतोर्वस्य यत्वं च सहादित्वात् स्यादित्यर्थः । एतावानित्यात्वइयानिति । एतदः सर्वस्येशोदेशे वस्य यत्वम् एतत्परिमाणमस्येत्यर्थः । तुंदादेरिति । मत्वर्थे वाच्य इति शेषः । तुन्दिलइति । तुन्दमस्यास्तीतीले अलोपः आदिना उदरिलादयः । औन्नत्यइति । उन्नतस्य भावः औन्नत्यं तत्रार्थे दन्तादुरः प्रत्ययो वाच्य इत्यर्थः । दन्तुरइति । उन्नता दन्ता अस्येत्युरे अलोपः । श्रद्धादेरिति । मत्वर्थे लुर्वाच्य इति शेषः । श्रद्धालुरिति । श्रद्धास्यास्तीत्यर्थः । आदिना तन्द्रालुप्रभृतयः । अस्मायेति । तपसीति । तपोस्यास्तीत्यर्थः सकारस्यात्र पदान्तत्वेपि विसर्गत्वाभावस्तु सहादेरिति सान्तत्वविधिसामर्थ्यान्न भवति । स्रग्वीति । स्रगस्यास्तीत्यर्थः । पदत्वाच्चोः

च्चालः । वाचाटः ॥ ईषदपरिसमाप्तौ कल्पदेश्यदेशीयाः * ॥ ईषदपरिसमाप्तः सर्वज्ञः सर्वज्ञकल्पः । पटुदेश्यः पटुदेशीयः ॥ प्रशंसायां रूपः * ॥ प्रशस्तो वैयाकरणो वैयाकरणरूपः ॥ कुत्सायां पाशः * ॥ कुत्सितो वैयाकरणो वैयाकरणपाशः देवपाशः ॥ भूतपूर्वे चरट् * ॥ दृष्टचरः । दृष्टचरी ॥ प्राचुर्यविकारप्राधान्यादिषु मयट् * ॥ अन्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतमयश्चन्द्रः ॥ तदधीतेवेदवेत्यत्राण् वक्तव्यः * ॥ व्याकरणमधीते वेद वा वैयाकरणः । शोभनोश्वः स्वश्वः तं वेत्ति सौ-

कुत्वम् । वाचइति । मत्वर्थेवाच्य इति शेषः । वाग्मीति । वागस्यास्तीतिवाग्मी वाग्मिनौ चस्य कुत्वे कस्य चपा अबे इति गः स्यात् ग्मिना सहोच्चारणे गकारद्वयश्रवणं भवतीत्यर्थः । आलाटाविति । कुत्सितभाषिण्यर्थे वाच्ये सति आलाटौ प्रत्ययौ वक्तव्याविति शेषः । वाचालइति । बहुकुत्सिता वागस्यास्तीत्यर्थे आले पदान्ताश्रितं कुत्वं जवश्चानित्यत्वात्सहादित्वान्न एवं वाचाटोपि । ईषदिति । ईषदपरिसमाप्तिः किञ्चिन्न्यूनता तस्यान्ते ते वाच्या इत्यर्थः । प्रशंसायामिति । प्रशंसा स्तुतिः तत्रायं वाच्य इत्यर्थः । भूतपूर्वइति । पूर्वकालं भूतः भूतपूर्वइति तत्पुरुषे क्वचिदमाद्यन्तस्येति पूर्वशब्दस्य परनिपातः अथवा भूतः पूर्वमिति नाम्नश्चेति योगविभागात्समासः भूतशब्दोऽविद्यमानवाची तत्र चरट् प्रत्ययो वाच्य इत्यर्थः । टकारः ष्ट्रित्तइतीबर्थः । दृष्टचरी । प्राचुर्येति । प्रचुरस्य भावः प्राचुर्यं प्रकृतेरवस्थान्तरं विकारः प्रधानस्य भावः प्राधान्यम् आदिना तद्भावयववादयः वक्तव्यमेतत् ट ईबर्थः । अन्नमयइति । अन्नं प्रचुरं यस्मिन्यज्ञ इत्यर्थः । मृन्मयइति । मृदो विकार इत्यर्थः । स्त्रीमयइति । स्त्रीप्रधानमस्येत्यर्थः । जाल्मोऽधमः । अमृतमयइति । अमृतस्वरूप इत्यर्थः । एवं दूर्वाया अवयवो दूर्वामयं गोः पुरीषं गोमयमित्यादि । तदधीतइति । तदित्यनेनाध्येतव्यसामान्यं च द्वितीयान्तं प्रकृतित्वेन निर्दिश्यते अधीते वेद वेत्यर्थनिर्देशः । वैयाकरणइति । स्वश्व इति । कर्मधारयः । तमिति । स्वश्वं सौवश्वइति व्याकरणस्वश्वशब्दाभ्यामनेनाणिवक्ष्यमाणप्रक्रियायां कृतायामेवं स्यादित्यर्थः ॥

१ वैयाकरणइत्यस्य व्याकरणमधीतेइतिकथंविग्रहोवृत्तिसमानार्थकस्यैवविग्रहत्वात् तत्प्रतिवाक्यंतु आख्यातंतद्धितकृतो इत्यनेन भूषणेप्रपंचितम् तद्धितार्थस्य क्रियात्वाभावेऽपि अलौकिके द्वितीयांतात्प्रत्ययविधानसामर्थ्यादेवद्वितीया ॥

वश्वः ॥ न सन्धिय्वोर्युट्च * २८७ ॥ सन्धिजौ य्वौ तयोः सन्धिजयोर्यकारवकारयोः संबन्धिनः स्वरस्य वृद्धिर्न भवति किन्तु तयोर्युडागमो भवतीडुडित्येतावागमौ भवतः वर्णविश्लेषं कृत्वा यकारात्पूर्वमिकारः वकारात्पूर्वमुकारः पश्चादादिस्वरस्यञ्णितिवृद्धिः ॥ इतोजातार्थे *॥

न सन्धिः । इह सन्धेर्य्वौसन्धिययवाविति षष्ठीतत्पुरुषोयं ततश्च सन्धिजनितौ य्वावित्यर्थ इत्यभिप्रेत्याह सन्धिजौ य्वौ सन्धिय्वाविति । इयं स्वरे उवमिति विहितौ यकारवकारावित्यर्थः । तयोरित्यादि अनेन य्वोरितीकारोकारयोर्ग्रहणं संधिविशेषणत्वान्न भवतीति दर्शयति । संबन्धिनइति । यन्निमित्तौ यकारवकारौ तस्येत्यर्थः। स्वरस्येति । आदिस्वरस्येत्यनुवृत्तेरादिति शेषः वृद्धिर्न भवतीति । आदिस्वरस्येति प्राप्तेतिशेषः । नन्वत्र य्वोर्युडेव विधीयतां किं वृद्धिनिषेधेन न च युडागमात्पूर्वं वृद्धिःस्यादिति वाच्यं युटः परत्वात् कृताकृतप्रसङ्गित्वेन नित्यत्वाच्च नच वृद्धिरपि नित्या शब्दान्तरप्राप्तेःकृते युटि तस्यैव प्राप्नोत्यकृतेऽन्यस्य शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवतीति एवं तर्हि य्वाभ्यां यवाभ्यां परस्य प्राप्ता वृद्धिः प्रतिषिध्यते तयोरेव युडागमो यथा स्यादन्ययोर्मा भूदिति वृद्धिर्निषिध्यते तेन दधिप्रियोऽश्वो दध्यश्वः तस्यापत्यं दाध्याश्विः माध्वश्विरित्यत्र मध्यमो य्वोर्युट् न भवतीति चेन्नैवम् इहादिस्वरस्येत्यनुवर्तते स्वरस्येति संबंधषष्ठीयं तेनादिस्वरस्यादेशयोर्य्वोर्युडित्यर्थाद्दाध्यश्विरित्यादौ नास्ति प्रसङ्गः किञ्च सन्धिग्रहणमप्येवं न कर्तव्यं भवति आदिस्वरस्यादेशौ हि य्वौ सन्धिजावेवेति न च वाच्यं स्थान्यादेशभावसंबन्धषष्ठ्येवदुर्ज्ञानेति व्याख्यानतो विशेषप्रतिपत्तेः एवं तर्हि वृद्धिनिषेधो मध्यवृद्धिविधेरपि ज्ञापनार्थः तेन पूर्वन्त्र्यलिन्दे भवः पूर्वत्रैयालिन्दः पूर्ववर्षासु भवं पूर्ववार्षिकमित्यादि सिद्धं सन्धिग्रहणं याष्टीक इत्यादिनिवृत्त्यर्थम् । अथेह कस्मान्न भवति एतीति पश्यतः छत्रापाताः भवत्ययमपीकारयोर्यकार उच्यते संधिशब्देनेयं स्वरे भवमिति स्वरसन्धिरुच्यते अयं च न तथा अथवा युड्ति चकारोऽधिकविधानार्थः तेनात्रसान्धिजस्यापि न भवति अत एव च द्व अशीतिभृतो द्व्यशीतिक इत्यादि सिद्धं तथा स्ययकृतस्यापत्यं स्यैयकृतः इत्यादावसन्धिजयोरपि य्वोर्युड्न भवति द्वारे नियुक्तो दौवारिकः स्यात् । तयोरिति

लज्जितः ॥ तरतमेयस्विष्ठाः प्रकर्षे ॥ २७८ ॥ अतिशयेऽर्थे तरतमेयस्विष्ठेत्येते प्रत्यया भवन्ति । अतिशयेन कृष्णः कृष्णतरः कृष्णतमः शुक्लतरः शुक्लतमः ॥ ईयस्विष्ठौ

यवयोरित्यर्थः युडित्यत्र च इश्च उश्च यू तयोष्टयुडिति द्वन्द्वाकारः प्रत्येकं सः इति मत्वाह । इट् उदेत्येतावागमाविति । यथासंख्यमिति शेषः । ननु टित्त्वाद्युटाप्वोः प्रागवटस्य भाव्यापि व्याकरणस्वश्च यकारवकारसंयुक्तयोः कथं तयोः प्रागसौ स्यादित्याशंक्याह । वर्णेति । विश्लेषो विभागः पार्थक्यमिति यावत् । पश्चादिति। तरत्वात् शब्दान्तरत्वाच्चेति भावः । इय इति । प्रत्ययो वक्तव्य इति शेषः । लज्जित इति । लज्जा जातास्येत्यर्थे इतेयस्यलोपः । तरतमे । प्रकर्षातिशयः नन्वत्र प्रकर्षः किं प्रकृत्यर्थो प्रत्ययार्थो वा प्रत्ययार्थविशेषणं वा प्रकृत्यर्थविशेषणं वा नाद्यः अतिशयार्थेभ्योऽतिशयप्रकर्षादिभ्यः एव प्रत्ययोत्पत्तेः नापि द्वितीयः आढ्यस्यातिशयः आढ्यतममित्येव प्रयोगप्रसङ्गात् आढ्यतमो देवदत्त इति सामानाधिकरण्यानुपपत्तेः न च तृतीयः कस्यापि प्रत्ययस्यार्थान्तरस्यानिर्देशात् नापि तुर्यः प्रत्ययद्योत्यः प्रकर्षः प्रकृत्यभिहितस्य प्रधानस्यार्थस्यैव विशेषणम् उक्तइति तस्मादन्त्य एव पक्षः श्रेष्ठ इति मत्वाह । अतिशयेर्थे इति । अतिशयोऽस्मिन्नस्तीत्यतिशयः अतिशयवानतिशयविशिष्ट इत्यर्थः । ततश्चातिशयविशिष्टेर्थे वर्तमानान्नाम्नःस्वार्थे एते प्रत्ययाःस्युरित्यर्थः । प्रकृत्यर्थविशेषांच स्वार्थिकानां द्योत्ये भवति अत एव कुमारितमेति तमप्रत्ययान्तात्प्रथमवयोवाचिन इतीप् न भवति कुमारशब्दस्य तु वयःप्रवृत्तिनिमित्तं तमप्रत्ययान्तस्य तु तद्वत्ता आश्रुस्तत्वमात्राभिव्यक्तयो भवंति कुमारतमइति पुंस्त्वंतु ह्रस्वा कुटी कुटीरःशमीरइतिवज्ज्ञेयं कृष्णतरइति । यद्यपि सामान्येन प्रत्यया विधीयन्ते तथापि प्रयोगाद्यर्थे विभज्ये चोपपदे तरेयसूतमेष्ठाविति ज्ञेयं तत्रागुणवचनादेवेष्ठेयसू इति वा ततश्च द्वाविमौ कृष्णौ अयमनयोः प्रकर्षेण कृष्ण इत्यर्थः ननु कस्यार्थस्यात्र प्रकर्षः सन्तिहि तत्र द्रव्ये बहवो गुणाः सत्यं तथापि यत्वगुणस्य भावाद्द्रव्ये शब्दनिवेशः शतेस्तत्प्रकर्षाश्रयः सप्रत्ययः तथा शुक्लादिभ्यो गुणप्रकर्षे जातिशब्दे वस्तुजातेः सर्वत्रैकरूपत्वेन प्रकर्षाभावात्तत्सहचारितानां वाहदोदिधर्माणां प्रकर्षे प्रत्ययाः यथा गौरयं यः शकटं वहति गोतरोयं यः शकटं वहतितराम् अश्वोयं यश्चत्वारिंशो-

**डितौ वक्तव्यौ * ॥ उकारोनुमीबर्थः अतिशयेन लघुर्लघीयान् । पापीयान् । लघीयसी । पापीयसी । लघिष्ठः । पापिष्ठः ॥ गुर्वादेरिष्ठेमनेयस्सु गरादिष्ठचलोपश्च * ॥ अतिशयेन गुरुर्गरीयान् । गरिष्ठः । गरिमा । प्रेष्ठः । स्थविष्ठः ।**

जनानि गच्छति अश्वतरोयं योऽष्टौ योजनानि गच्छतीति एवं सर्वथा द्रव्यस्य धर्मद्वारकः प्रकर्षो न स्वतः यथा शुक्लगुणयोगात्पटस्य व्यपदेशः तथा प्रकर्षव्यपदेशोपि तत्प्रकर्षादेवेत्यर्थः । उक्तं च । द्रव्यस्याऽव्यपदेशस्य य उपादीयते गुणः । भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयत इति ॥ अव्यपदेशस्येति व्यपदेष्टुमशक्यस्येत्यर्थः । कृष्णतमइति । अयमेषामतिशयेन कृष्ण इत्यर्थः । एवं शुक्लतरः शुक्लतमोपि । ईयस्विष्ठाविति । डित्त्वस्य फलमाह डितीति । डितिटेरित्यनेनेति शेषः सूत्रकारस्य तु इदं वक्ष्यमाणं च तत्तत्कार्यं स्रहादित्वादेव सिद्ध्यतीत्याशयः । उकारइति । ईयसोरिति शेषः । उदित्त्वान्नितः ष्ट्न्रित इति नुमीपौ सिद्ध्यतः । अतिशयेनेति । अयमनयोरिति शेषः । लघीयानिति लघोरीयसोर्डित्त्वाट्टिलोपः उदित्वान्नित इति नुमि न्समहदिति दीर्घे हल्ङ्याप इति सिलोपे संयोगान्तलोपे पञ्चसु सिद्धवच्छब्दवत्प्रक्रिया अन्यत्र सुवचस्वत् । पापीयानिति अयमनयोरतिशयेन पापीत्यर्थः । टिलोपेऽत्र इनो लोपः शेषं प्राग्वत् लघीयसीति ष्ट्नितइतीप् । पापीयसीति । इयमनयोरतिशयेन पापिनीत्यर्थः । ईपोत्र पुंवद्वेति वाशब्दात्पुंवद्भावेन निवृत्तौ इनिष्टिलोपेनलोपः ईप् प्राग्वत् । लघिष्ठइति । अयमेषामतिशयेन लघुरित्यर्थः इष्ठेऽत्र टिलोपः एवं पापिष्ठोऽपि विभज्योपपदे उदीच्या दाक्षिणात्येभ्यः पटुतराः पटीयांस इति । गुर्वादेरिति । इतः परमासमाप्तेर्वक्तव्यानि । गुरु प्रिय स्थिर स्फिरोरुबहुलवृद्ध तृप्र दीर्घवृन्दारकस्थूल दूर युव दुःख क्षिप्र क्षुद्र इत्यादेर्गणस्य गरादिर्गर् प्रस्थस्फवर् बंहि वष् त्रप् द्राघ् वृन्द स्थव दवहस् क्षप्क्षोदइत्यादिरादेशः टेरलोपष्टचलोपोपि इष्ठइमन्नीयसु इत्येतेषु परतो वक्तव्य इत्यर्थः । इह गराद्यादेशानां च टिलोपो न भवतीत्यर्थः अत्र । व्याख्यानादिकारोपि ततः सन्धिर्निर्दिश्यते इश्च ईयसुश्चेति तेन गरीयसीरित्यादि सिद्ध्यति । अतिशयेन गुरुरिति । अयमनयोरिति शेषः ।

ज्यादीलोपः ॥ ज्यायान् । ज्येष्ठः । द्राघीयान् । द्राघिष्ठः । श्रेयान् । श्रेष्ठः ॥ बहोरिष्ठेयि ॥ भूयिष्ठः । भूयान् ॥ किमोव्ययादाख्यातात्त्र तरतमयोराम् वक्तव्यः ॥ कुतस्तराम्परमाणवः । कुतस्तमाम् तेषामारम्भकत्वम् । उच्चैस्तराम्

गरीयानिति गुरोरत्र गरादेशटिलोपाभावौ गरिष्ठइति । अयमेषां प्रकर्षेण गुरुरित्यर्थे इष्ठे प्राग्वत् गरिमेति । गुरोर्भाव इत्यर्थे लोहिताद्योरितीमनि प्राग्वत् प्रेष्ठेति । प्रियस्यात्र प्रष्ठयलोपाद्अइएइत्येत्वम् एवं प्रयोगात्प्रेमापि स्थविष्ठइति स्थूलस्यात्र स्थवृपस्य च लोहितादित्वाभावादिमनि नोदाहरणम् तवं स्थेष्ठः स्थेयानित्यादि ज्ञेयम् । ईकारस्य लोपो वक्तव्यः इति शेषोः ज्यायानिति । वृद्धस्यात्र ज्यादेशः ईयसीरीलोपः । ज्येष्ठइति । ज्यादेशेत्राइएत्येत्वं द्राघीयानिति । दीर्घस्यात्र द्राघादेशः । एवं द्राघिष्ठः द्राघिमापि श्रेयानिति प्रशस्यशब्दस्यात्रश्रादेश एवंश्रेष्ठोपि बहोरिति । इष्ठे परे बहोर्यिप्रत्ययो भवतीति वाच्यमित्यर्थः । भूयिष्ठइति । अयमेषामतिशयेन येन बहुरित्यर्थः अत्र बहुरिष्ठ इति स्थिते सर्वविधिभ्यो लोपविधिर्बलवानिति पूर्वं बहोर्लोप इति भूरादेश इलोपश्च पश्चादनेनापि एवं भूयानित्यपि वर्गम् इह प्रकर्षवतोपि पुनः प्रकर्षविवक्षाया आतिशायनि किन्तादपरः प्रकर्षे प्रत्ययो न भवतीति भाष्यं प्रेष्ठतमाय कर्मणे इति छान्दसः प्रयोगः युधिष्ठिरः श्रेष्ठतमः कुरूणामिति पुनरप्रयोज्यमेव वृत्तिकारस्तु साधु मन्यते यथाह यदाच प्रकर्षवता पुनः प्रकर्षो विवक्षते तदातिशायनिकान्तादपरः प्रत्ययो भवतीति । किमोव्ययादिति । किंशब्दाच्चादस्ति बाधन्ताचकारादेकारान्ताच्च यौ तरतमौ तरतमेयस्विष्ठा इति विहितौ व्याख्यानाद्यात एव ज्ञापकाद्विहितौ तयोः तरतमयोश्चेति पञ्चम्यर्थे षष्ठी ताभ्यामात्प्रत्ययो वक्तव्य इत्यर्थः । कुतस्तरामिति । अत्राव्ययत्वादेवाम् सिध्यतीति अधस्तनैः कुतस्थातरतमयोश्चेति पञ्चम्यर्थे षष्ठी ताभ्यामात् प्रत्ययो वक्तव्य इत्यर्थः । कुतःशब्दः किंशब्दस्थाने लेखकैर्भ्रान्त्यालिखित इति मन्यते किं स्तरामिति तु न्याय्यं किमत्र प्रश्ने इदं च किमिदं च किमिदमुपनयोरतिशयेन किमित्यर्थे तरतमेयेति किमःतरः ततोनेनाम् तदन्तस्य चादित्वेनाव्ययत्वादव्ययादिति विभक्तेर्लुक् प्रश्नसामान्यविवक्षायामिदमेकवचनं क्लीवत्वं च अत्राभि नुडभावस्तु नुडामइत्यत्रैव प्रत्ययादि स्तरमाह परमाणव इति । निरवयवः

गायति। पचतितराम्। पठतितमाम् ॥ परिमाणे दघ्नादयः ॐ॥ जानुदघ्नम् । शिरोद्वयसम् । पुरुषमात्रम् ॥ द्वयोर्बहूनां चैकस्य निर्द्धारणे किमादिभ्यो डतरडतमौ प्रत्ययौ वक्तव्यौ ॥ कतरो भवतोः काण्वः। कतमो भवतां तान्त्रिकः। भवतोर्यतरस्तार्किकः ततर उद्गृह्णातु ॥ संख्येयविशेषावधारणे द्वित्रिभ्यां तीयः ॐ ॥ द्वितीयः ॥ त्रेःसंप्रसारणम् ॐ ॥ तृतीयः ॥ षट्चतुरोस्थट् ॐ ॥ षष्ठः । चतुर्थः ॥ पञ्चादेर्म्मट् ॥ विंशतितमः । विंशः ॥ शतादेर्नित्यम् ॥

क्रियावान्परमाणुरिति सामान्यलक्षणम् । कुतस्तमामिति । अव्ययात्तमः तदन्तादाम् तत्वम् । तेषामिति । परमाणूनामित्यर्थः । आरंभकत्वं द्व्यणुकादिजनकत्वम् । उच्चैस्तरामिति । प्राग्वत् । पचतितरामित्याख्यातोदाहरणे एकारान्तस्योदाहरणं तु पूर्वाह्णेतरामित्यादि उच्चैस्तरस्तरुरित्यादौ द्रव्यप्रकर्षे त्वामप्रयोगान्न भवति । परिमाण इति । परिमाणशब्दोत्र प्रमाणोपलक्षकस्तत्रैव दघ्नादीनां प्रयोगात् परिमाणं हि सर्वतो मानं प्रमाणत्वादामः । उक्तं हि ऊर्ध्वमानमित्यादि । प्रमाणइति वा पाठः । मुनिरप्याह प्रमाणे द्वयसज्दघ्नज्मात्रचः इतिदघ्नादयःप्रयोगाद्दघ्नद्वयसमात्राः । वक्तव्यमिदम् । जानुदघ्नमित्यादि । जानुनी शिरः पुरुषश्च प्रमाणमस्येति विग्रहः द्वयोरित्यादि । किमादिभ्यइति । प्रयोगात्किं यत्तदेतेभ्य इत्यर्थः वक्तव्याविति । क्रमेणेति शेषः । ततश्च द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः बहूनामेकस्य निर्द्धारणे डतम इति भावः । तथोदाहरति कतर इत्यादि । किमोत्र डित्त्वाट्टिलोपः भवतोरिति । निर्द्धारणे षष्ठी । काण्वइति कण्वस्यापत्यम् इत्यण् । कतम इति । किमो डतमे टिलोपः । तांत्रिक इति । तत्र सिद्धान्तं वेदेत्यर्थे केनेयेका इतीके वृद्धिः तान्त्रिकत्वजातिमानं च पृच्छते जातिपरिप्रश्नादन्यत्र हि डतमो न भवति अनभिधानात् । यतर इति । यदोत्र डतरे टिलोप एव तरोपि संख्येयेति । संख्यायन्त इति संख्येयाः गणनीयाः तेषु विशेषावधारणं द्वितीयोऽयं तृतीय इति । तत्राऽयं वक्तव्य इत्यर्थः । द्वितीयइति । द्वयोः पूर्ण इत्यर्थः । त्रेरिति । प्रकरणात्तीये परे त्रिशब्दस्य सस्वररेफस्य ऋकार इत्यर्थः । यवराणां य्वृतो संप्रसारणसंज्ञा वक्ष्यन्ते यथा यवराणां य्वृतः संप्रसारणं कितीत्यत्र । तृतीयइति । त्रेरत्र तृतीये सस्वरस्य रेफस्य ऋकारः । षट्चतुरोरिति । संख्येयविशेषावधारणे षट्चतुर्भ्यां थट्प्रत्यय इत्यर्थः । षष्ठ इति । षण्णां पूरक इति थः ष्टुत्वम् । पञ्चादेरिति । उक्तेर्थे इति शेषः । प-

शततमः ॥ संख्यायां प्रकारे धा ❀ ॥ द्विधा । त्रिधा ॥ गुणोऽण्च् ❀ द्वेधा । त्रेधा । द्वैधम् । त्रैधम् ॥ क्रियाया आवृत्तौ कृत्वस् ❀ ॥ पञ्चकृत्वः । सप्तकृत्वः ॥ द्वित्रिभ्यां सु ❀ द्विरुक्तम् । त्रिरुक्तम् । बह्वादेश्शस् ❀ ॥ बहुशः । तयायडौ संख्यायाम ❀ द्वितयम् । त्रितयम् । द्वयम् । त्रयम् ॥ शेषा निपात्याः कत्यादयः ॥ ❀ इति तद्धितप्रक्रिया ❀ ॥

ञ्चमइति । पञ्चानां पूरणः मेत्र नलोपः एवं सप्तमोपि । एकादशादेरिति । उक्तेर्थे इत्यर्थः मस्यापवादः । एकादशइति । एकस्य द्वयष्टनोरा स्यात् त्रयस्त्रेः संख्यायां यथा बहुव्रीह्यावशीतौ न चत्वारिंशत्सु चोदित इति कश्चित्तद्दृश्यते एकादशानां पूरण इति डे डित्त्वाट्टिलोपः । विंशत्यादेरिति । संख्येयविशेषा । वधारणेर्थे इत्यर्थः । पक्षे डः तत्र डित्त्वाट्टिलोपे सहादित्वात्तिलोपे विंश इत्यादि स्यादित्यर्थः । शतादेरिति । शततमइति । आदिना सहस्रतमादयो ज्ञेया । संख्याया इति । प्रयोगवशात्क्रिया-प्रकारवृत्तिसंख्यायात्र वेद्या । षोढेति तु सहादिषूदाहृतम् । गुणइति । संख्येत्यतो द्वित्रिशब्दावनुवर्तेते । चकारोत्र बहुलार्थः ततश्च धाप्रत्ययेद्वित्र्योर्बहुलं गुणोऽणपि भवतीत्यर्थः । द्वेधेति । धाप्रत्ययेत्र गुण एकारः । एवं त्रेधापि । द्वैधमिति । अण्या-दिस्वरस्येत्यादिवृद्धिः क्लीबत्वात्सोरतोम् अणन्तस्य हि नास्त्यव्ययत्वम् । अतएव पथि द्वैधानि संश्रयन्त इति प्रयोगः । क्रियायाइति संख्याया इति वर्तते आवृत्ति-रिति कृत्वस्प्रकृतेर्विशेषणमिदम् । पञ्चकृत्वइति । पञ्चवारान् भुंक्ते इति शेषः । चादित्वादव्ययत्वम् । एवं षट्कृत्व इत्यादि । द्वित्रीति । क्रियाया आवृत्ताविति वर्तते द्विरुक्तमिति । द्वौ वाराविवित्यर्थे स्वन्तस्याव्ययत्वात्स्यादिलोपः एवं त्रिरित्यपि सुरिति योगविभागाच्चतुरित्यपि वेद्यम् बह्वादेरिति । आवृत्ताविति वर्तमानेपि प्रयोगवशाद्बा-हुल्यार्थादनावृत्तावपि भवति । बहुश इति । बहुददातीत्यर्थः । एवमल्पश इत्यादि अन्यत्र त्वावृत्तौ द्वौद्वावित्यर्थे शः । द्विशः एवं त्रिश इत्यादि इहाप्यव्ययत्वात्स्या-दिलोपः । तयायडाविति । संख्यार्थमिति पञ्चम्यर्थे सप्तमी । द्वयमिति । प्रयोगवशा-दवयवार्थे वेद्यः द्वाववयवावस्येत्यर्थः यस्यलोपे नापि सिद्धेऽयडो डित्त्वं विस्पष्टार्थम् । एवं त्रयम् उभयम् अन्यत्र त्वनभिधानान्नायट् । अथाचार्यो नातिविस्तरां प्रक्रियामृ-जुम् अहं कुर्वे इति स्वप्रतिज्ञां समर्थयमान उपसंहरति । शेषाइति । इहानुक्ताः कत्यादयस्तद्धितान्ताः प्रयोगा निपात्या इत्यर्थः । तथाहि का संख्या येषामित्यर्थे किमो डतिर्निपात्यते एवमन्येऽपि यथाप्रयोगं प्रकृतयः प्रत्ययाश्चोह्याः । ग्रन्थगौरव-भयाद्दिङ्मात्रमेतद्दर्शितमिति भावः । इतीति । समाप्तौ समाप्तेयं तद्धितप्रक्रियेत्यर्थः । श्रीजानार्दनि० व्याख्यातद्धितकाण्डसातिममला सिद्धान्तरत्नावली ॥ इतिनामाधि-कारः प्रथमः समाप्तः ॥ १ ॥ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

श्रीः ।

# सारस्वतं माधवविवरणोपेतम्

## तस्योत्तरार्द्धम् ।

॥ अथाख्यातप्रत्यया निरूप्यंते ॥ धातोः ॥१॥ वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ॥ भ्वादिः ॥ २ ॥ भूसत्तायामित्यादिर्गणः । भूशब्दोधातुसंज्ञो भवति । सचत्रिविधः । आत्मनेपदीपर-

पदसंज्ञायां स्यादिस्त्यादिश्चेति द्विधा विभक्तिरुक्ता तत्र स्यादिर्निरूताधुनातिबादिनिरूपयितुकाम आह । अथेति । स्याद्यंतशब्दाधिकारानंतरमित्यर्थः । आख्यायतेऽस्मिन्धातुप्रत्ययार्थः इत्याख्यातोधिकारविशेषः स निरूप्यत इत्यर्थः । तत्रधातुः क्रियावचनः । धातुप्रत्ययतद्वाच्यभूयस्त्वादहमल्पधीः । आख्यातान्महतो व्याख्यान्न हास्यः कृपयोत्तमैः ॥ धातोः ॥ १ ॥ ननु प्रकृतिर्द्विधा धातुर्नामच तत्रनाम्नः स्यादयोविहिता एवपरिशेषाद्धातोरेवतिबादिसिद्धेर्व्यर्थं पुनरिदंधातोरितिचेन्न औपवगः पचतिरूपमित्यादौ विभक्त्यंतस्यापि प्रकृतित्वात् तथाच लुक्सूत्रे प्रत्ययग्रहणमुपपद्यते तदेवं प्रकृत्यंतरव्यवच्छेदार्थमवश्यं धातुः प्रकृतिर्वक्तव्या । तदेवमत्वाह वक्ष्यमाण इतितिबादय इत्यर्थः किंचाधिकारार्थमपि धातोरिति वाच्यम् दिवादावडिति कार्य्यं धातोर्यथास्यात् धातूपसर्गसमुदायस्य माभूत् अतएव मूले तत्र धातोरिति व्याख्यातम् ॥ भ्वादिः ॥ २ ॥ आदिशब्दोयं व्यवस्थार्थः तेन भूइत्यादयः व्यवस्थाः शब्दाः गृह्यंते नावयवा इतिमत्वाह भूसत्तायामित्यादिर्गण इति नचैवमपि यदोविभक्तौ त्यदाद्यत्वेऽपि समानशब्दानां याइत्यादीनामक्रियार्थानामपि धातुत्वाद्याः पश्यसीत्यादौ लोपादि कार्यमाशंक्य धातुरितिमत्वाह पूर्वाचार्य्यसंज्ञाया इहाश्रयणस्य तदीयोपाधिपरिग्रहार्थत्वात् तेचक्रियावाचिनामेवसंज्ञां कृतवंत इत्य-

---

१ तत्रप्रकृत्यर्थस्यप्रत्ययार्थस्यचानन्वयात् तथाहि प्रकृत्यर्थोहि द्रव्यंकारकंच आख्यातार्थश्च कर्तृकर्मणीतयोर्ह्यन्वयोनास्तिकारकाणां क्रिययैवाऽन्वयनियमात् ।

स्मैपदी उभयपदीचेति ॥ आदनुदात्तङितः ॥ ३ ॥ अनुदात्तेतो ङितश्च धातोरादित्यात्मनेपदं भवति ॥ ञित्स्वरि-

त्रापिताद्दृशानामेवभवति धातुसंज्ञइति सधातुरित्यतोऽनुवृत्तस्य धातुग्रहणस्य संज्ञापरत्वात् इतिभावः सचधातुस्त्रिधाप्रकार इत्यर्थः । निरूपयति आत्मनेपदीत्यादि उभयपदी आत्मनेपदपरस्मैपदवान् ॥ आद ॥ ३ ॥ अत्रानुदात्तश्च[1] ङ्चेति द्वंद्वे निर्देशस्य सौत्रत्वादल्पस्वरस्यापि ङ शब्दस्य परनिपातः तावितौ यस्येति द्वंद्वांते श्रूयमाणइच्छब्दः प्रत्येकं संबध्यते धातोरित्यतोऽनुवृत्तस्य धातोरित्यस्य विशेषणं चैतदिति मत्वाह अनुदात्तेतोङितश्च धातोरिति अतएवच ङित्त्वेपि ङाङ्ताभ्यां नात्मनेपदम् अपुषत् अशिश्रियत् न चैवं यङंतादपि न स्यादिति वाच्यं ङित्वस्य यङि कृतार्थत्वेनासमुदायार्थत्वात् अवयवे हि चरितार्थं लिंगसमुदायस्याविशेषकं न भवति एवं तर्हिप्रायो विवक्षायां धातोरित्युक्तं ङाङोस्तु परस्मैपदप्रवृत्तित्वेन ङित्त्वेपि आत्मनेपदं न भवति सूत्रे चादिति नामैकदेशेनापि सर्वनाम लक्ष्यते भामा सत्यभामा भीमोभीमसेन इतियथातथेहादित्यात्मनेपदमिति आद्ग्रहणं चाब्रुवी-त्यत्रस्थं कर्तरिपंचेत्यत्र चाकृष्टमुत्तरत्र नानुवर्तते इति न्यायादिति पुनः कृतं परस्मैपदसंबद्धत्वाद्वा तस्य इह सएवायं नागः सहति कलभेभ्यः परिभवं न सहामि साहसमित्यादौ सहतेरनुदात्तत्वेप्यात्मनेपदं न भवति चाक्षिङ् इकारानुदात्तत्वेपि ङकारोपदेशस्यानुदात्तत्वनिमित्त आत्मनेपदानित्यत्वज्ञापनार्थत्वात् तथाच पदमंजरी सह्यनुदात्तेत्ववत्ते विचक्षण इत्यत्रानुदात्तेतश्च हलादेरिति युक्त्च् यथा स्यात् ङकारस्त्वनुदात्तेत्वनिबंधनस्यात्मनेपदस्यानित्यत्वज्ञापनार्थं इति अनुदात्तइतिपरस्मैपदमात्मनेपदं चविहितंतद्द्वयमप्युभे ग्रहणेनपरा मृश्यते तदाह उभे आत्मनेपदपरस्मैपदे इतिक्रमस्तु न भवति ञित आत्मने पदं ननु नव्यशास्त्रेऽनुदात्तेत्वस्य प्रयोजनांतरमस्ति विचक्षण इत्यस्य तु यत्नान्तरेण सिद्धत्वात् ततश्च सर्वेप्यनुदात्तेतोङित एव पठ्यंतां

---

१ अत्राहनानकरामः—कथमपिङकारस्य प्राक् निपातो न प्राप्तस्तद्विधायकशास्त्रे अल्पस्वरस्यघिसंज्ञकस्य प्राक् निपातो दर्शित अत अल्पस्वरस्यापिङस्यपरनिपात इति माघवीयोक्तिरसाध्वी । चिन्त्येयं टिप्पणी ।

तेत उभे ॥ ४ ॥ ञितःस्वरितेतश्च धातोरुभे आत्मनेपदपर-स्मैपदमेव भवतः । आत्मगामि चेत्फलमात्मनेपदं परगामि चेत्फलं परस्मैपदं प्रयोक्तव्यमन्वर्थात् ॥ परतोऽन्यत् ॥ ५ ॥ पूर्वोक्तनिमित्तविधुरादन्यस्माद्धातोः परस्मैपदं भवति ।

ततश्च ङित इत्येव सिद्धमात्मनेपदं मैवं गौरवापत्तिः तदेतच्छृगालस्य त्रस्तस्य व्याघ्रमुखे प्रवेशतुल्यं सूत्रे प्राग्विधेयनिर्देशो वैचित्र्यार्थः ॥ ञित्स्वरितेत ॥ ४ ॥ कर्तरिपंचस्वरितेतः परस्मैपदमिति सूत्रारंभसामर्थ्यात् अन्यथा हि ञितां ञस्थाने ङकारोपदेशेन ङित इत्येव सिद्धमात्मनेपदं स्वरितेतस्तु परतोन्यदित्येव परस्मैपदमपि सिद्धमिति किमस्यारंभेण क्रियाफलस्य च कर्तृगामित्वादिप्रयोगादनुमास्यते ननु संज्ञाहि नामतो लघीयसी इतितत्कथमेते महासंज्ञे इत्याशंक्य उभयपदप्रयोगव्यवस्थाप्रतिपादनद्वारेणाविःकरोति आत्मगामीति आत्मशब्देनात्रकर्तेत्युच्यते प्रत्ययवाच्यत्वात् फलशब्देनापि प्रधानभूतं स्वर्गादिफलमुच्यते तदुद्दिश्य क्रियारंभात् आद्याहि प्रवृत्तिरारंभस्तथोक्तं यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यंते पचादयः । तत्प्रधानं फलं तेषांनलाभादिप्रयोजनमिति अत एव यजंति याजका इत्यादौ दक्षिणादेः फलस्य कर्तृगामित्वेपि नात्मनेपदं प्रधानभूतस्यहि स्वर्गादेः फलस्य प्रत्ययवाच्ययजमानगामित्वात् तदेवप्रधानभूतस्वर्गादिफलं यदिकर्तृगामि प्रत्ययवाच्यगामि तदोभयपदिनो धातोरात्मनेपदं प्रयोक्तव्यं मैवं परगामिचेत्फलं तदापरस्मैपदं प्रयोक्तव्यमित्यर्थः कुत एतावल्लभ्यमित्याशंक्याहान्वर्थादिति । आत्मनेपदपरस्मैपदयोर्महासंज्ञयोरेवमन्वर्थसंज्ञाविज्ञानार्थत्वादितिभावः ॥ परतो ॥ ५ ॥ परशब्दोऽत्रान्यार्थः सन्ननुदात्ते ङित् निविशादि ञित् स्वरितेभ्य उक्तेभ्योऽन्यमाचष्टे अन्यशब्दोप्यात्मनेपदोभयपदाभ्यामुक्ताभ्यामन्यत् परस्मैपदमाहेत्यालोच्याह पूर्वोक्तेति । पूर्वमुक्तं यस्मिन्निमित्त अनुदात्तेत्वङित्वनिविशादित्वञित्स्वरितेत्वलक्षणं यद्यपि निमित्तिन उक्तास्तथाप्यभेदोपचारात् निमित्तमेवोक्तम् उच्यते तेनविधुरो रहितः तस्मादित्यर्थः एतादृशश्चतन्निमि-

१ फलशब्देन धातुवाच्ये फलेऽपितादृशस्यैव फलस्योपादानं स्यात् तथाच तंडुलं पचतीत्यादौ कर्मतानुपपत्तिदूषणंस्यात् फलंचविक्लित्त्यादि अत्रसूत्रे तादृशफलस्यांगीकारेपि धातुवाच्यं विक्लित्त्यादिरूपं स्पष्टमन्यत्र ।

:नवपम् ॥ ६ ॥ तिबादीनामष्टादशसंख्याकानामाद्यानि नववचनानि परस्मैपदसंज्ञानि भवंति ॥ पराण्यात ॥ ७ ॥ पराणि नववचनानि आत्मनेपदसंज्ञानि भवंति । वर्तमाने तिप् तस् अंति सिप् थस् थ मिप्

तेभ्योऽन्य एवेति मत्वाह अन्यस्माद्धातोरिति परस्मैपदपरिशेषलभ्यमित्यर्थः परतः किं ञित्स्वरितेदर्थां माभूत् नचोभयपदविधिना सिद्धम् । अस्यकर्तृगामि क्रियाफलार्थत्वात् नचात्मनेपदस्य तत्रबाधः व्रीहिवत्तस्यापि प्रवृत्तेः परतोऽन्यदीति किं नचोभयपदप्रसंगः योगांतरारंभात् अन्यथा ञित्स्वरितेद्ग्रहणमपास्य परत उभेइत्येवसिद्धत्वान्नाप्यात्मनेपदनिवृत्त्यर्थमन्यद्ग्रहणं ञित्स्वरितेतउभे इत्यतः परमादनुदात्तङित इतिसूत्रंकृत्वा तत्स्थमनुदात्त ङिद्ग्रहणमुत्क्षिप्याऽऽत्परत इत्येवात्मनेपदस्यासिद्धत्वात् । नचापि परत उभयपदमेव भावकर्मणोरप्यात्मनेपदमिति नियमनिवृत्त्यर्थमितिवाच्यं अत्रापि कर्तरिपंचेत्यतः कर्त्तरीत्यनुवृत्तेर्नियमस्यापि कर्तृविषयत्वात् । एवंतर्हि अन्यदिति योगविभागार्थमन्यद्ग्रहणं तत्रसामर्थ्यात्परतइति नानुवर्तते धातोरिति चानुवर्तते तेनायमर्थः अन्यद्धातोरन्यत्परस्मैपदं भवति अनुकरोति अत्राऽकर्तृगामिक्रियाफले गंधनादावर्थेपि निविशादेरितिप्राप्तात्मनेपदापवादः अभिक्षिपति स्वरितेतत्वात्कर्तृगामिफले ञित्स्वरितेत इत्यात्मनेपदापवादः एवंप्रवहति परिमृष्यति विरमति आरमति परिरमति उपरमति अनुदात्तेत्वादात्मनेपदापवादः इत्याद्यविहितलक्षणं परस्मैपदं यथाप्रयोगं सर्वत्रोदाहार्यं योगविभागस्य चेष्टसिद्धयर्थत्वान्नाति प्रसंगः ॥ नवपम् ॥६॥ अत्रतिप् यात् दिप् णबादय अनुवर्त्तते तत्रापि परेषांवचनानामात्मनेपदसंज्ञया विधास्यमानत्वात् पूर्वाणि नवात्रवचनानि गृह्यंत इतिमत्वाह तिबादीनामित्यादि ॥ पराण्यात् ॥ ७ ॥ नवेत्यनुवृत्तेराह नववचनानीति वर्तमानेतिप् प्रारब्धइति इहकालस्य नित्यत्वेनारंभायोगात् प्रारब्धोऽपरिसमाप्तश्च धात्वर्थो गृह्यते सयावता कालेनवर्तते सकालोऽपि वर्तमानः तस्मिन्नविशिष्टेषु कर्तृकर्मभावेषु वाच्येषु धातोस्तिबादयोभवंतीत्यर्थः । तैःसूत्रैरेकवाक्यतामापद्यानेन विधानादित्यर्थः । अपरिसमाप्तिश्च फलावसानागृह्यते तेनांतरालक्रियामुख्यक्रियायामत्राऽपरिसमाप्तायां नव्यवधायिका यथाभुंक्त इत्यत्र भुजिक्रियाया सहति जल्पति पिबत्यादयः भुंजतो ह्यंतरा हसति जल्पति पिबति । उक्तंच व्यवधानमिवोपैति विच्छिन्न इव दृश्यते । क्रियासमूहो

वस् मस् ते आते अंते से आथे ध्वे ए वहे महे । प्रारब्धोऽपरिसमाप्तश्च वर्त्तमानेऽभिधेये तिबादयः प्रत्यया भवंति । अस्य तिबादेः पाणिनीयानां लडितिसंज्ञा । नाम्नि च युष्मदिचास्मदिचभागैः ॥ ८ ॥ नामादिषूपपदेषुसत्सुत्रिभिर्भुंक्यादिरंतरालप्रवृत्तिभिः ॥ नचविच्छिन्नरूपोपि सोविरामान्निवर्तते । सर्वा एव क्रियान्येन संकीर्णैवोपलभ्यते ॥ तदंतरालदृष्टावा सर्वैवावयवक्रियेति । इह पर्वतादिस्थित्यादेः सर्वदाभावात् स्वतो भूतत्वाद्ययोगेऽपिकालत्रयवर्तिनां राज्ञां भूतादिभेदभिन्नपालनादिक्रियाभेदात् तस्थुः पर्वतानलनहुषादिकालेस्थास्यंति कल्किर्विष्णुकालेतिष्ठति इदानीन्तनकाले इति भूत्वादियोगः अस्येतिननु तैर्वर्तमाने लडितिलट् प्रत्ययं विधाय तिप्तस् झि इत्यादय आदेशा विहिता इति कुतोलटः संज्ञात्वं सत्यं संज्ञासादृश्यान्नसंज्ञेत्युक्तम् यथाहि संज्ञानुवादेषु संज्ञिन एवविधिनायोजयंति नस्वयं एवं लडपि तिबादिनैव एतच्चस्वशास्त्रस्य ततआर्जव प्रतिपादनार्थमुक्तम् ॥ नाम्नि च ॥ ॥ ८ ॥ इह नवपरस्मैपदानि पराण्यात्मनेपदानीति परस्मैपदात्मनेपदे द्वौराशी अनुवर्तेते भागैरितिच बहुवचनं नामादिसाहचर्यात्त्रित्वपर्यवसायिताभ्यां प्रत्येकं संबद्ध्यते ततश्चायमर्थः नाम्निसति परस्मैपदस्यतिप्तसंतीति

---

१ नाम्निच युष्मदि अत्रभागैरितिबहुवचनेन त्रिचतुरादयः पदार्था उच्यंते । बहुशब्देन त्रय एवोच्यंते नाधिकाः । बहूनामंत्रयस्वेत्युक्ते चतुरादिशब्दासन्निधानेत्रयएवनिमंत्र्यंते । किमत्रप्रमाणम् इतिचेच्छृणु। मीमांसायाम् एकादशेऽध्याये वसंतायकपिंजलानालभेतेति वैदिकेवाक्ये विचारेवसंताय वसंत इत्यर्थः छांदसम् । कपिंजलाःपक्षिविशेषास्तानालभेत हन्यात् तत्रकपिंजलानिति बहुत्वं तावत् गम्यते ते आदयःपरार्धाधिकाः कपिंजलास्त्रयो वा चत्वारो वा पंचचेति विकल्पेनालब्धव्यास्ततस्त्रयएवेतिसंशयः । तत्रैव पूर्वपक्षः । कपिंजलानिति बहुवचनेन द्वित्वातिरिक्तसंख्यासामान्यरूपेणाभिधायिता तद्विशेषाकांक्षायां सत्यां परार्धातिरिक्तसंख्याविशेषाभावात् आदिसंख्याविशेषा आक्षिप्यंते नच तत्र त्रयोपि चत्वारोपि पंच हंतव्या इतिसंख्यांतरमेवतत्रप्रतीयते न त्र्यादयःनच कपिंजलावच्छेदकावच्छिन्नाः कपिंजला हंतव्याइति वाच्यम् तथा प्रत्येकस्मिन्नेव यागे कृते जगति तलवर्तिनां सर्वेषां कपिंजलानां विनाशप्रसंगस्तस्माद्यथाप्राप्तानां त्रिचतुरादीनां तेषामेव विकल्पेनालंभ इति । उक्तंच जैमिनिनापूर्वपक्षसूत्रेण बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यादिति सिद्धांतस्तु घटानानयेतिवदुच्चरितस्य बहुवचनांतस्य शब्दस्य चतुरादिशब्दोपादानमंतरेण त्रित्वमात्रं वाच्यं तावतैव बहुत्वोपपत्तेः । अतिरिक्ताक्षेपेच प्रमाणाभावः । तस्मात्त्रय एवकपिंजलाहिंस्या उक्तंच जैमिनिना प्रथमंवानियम्येतकारणस्यादतिक्रमः स्यादिति सूत्रसिद्धांतः सूत्रेण अतएव बहुत्वं त्रित्वे पर्यवस्यतीतिलोकोक्तिः साधीयस्येवम् ।

भागैरेते प्रत्यया भवंति । नाम्नि प्रयुज्यमाने चशब्दादप्रयुज्यमानेपि प्रथमपुरुषो भवति । युष्मदि मध्यमः । अस्मद्युत्तमः ॥ कर्त्तरि पंच ॥ ९ ॥ परस्मैपदं कर्त्तरि भवति । चकारादात्मनेपदमपि तत्र भूइत्येतस्मात्परस्मैपदिनोऽव्विक

प्रथमोभागो धातोर्भवति युष्मदिसति सिप्थस्थेति मध्यमो भागः अस्मदिसति मिपवस्मसित्युत्तमो भागः एवमात्मनेपदेपि नाम्निसति ते आते अंते इति प्रथमो भागः युष्मदिसति से आथे ध्वे इति मध्यमो भागः अस्मदिसति ए वहे महे इत्युत्तमो भागो भवतीति एवंयादादिष्वपि योज्यं अयमेवभागः पुरुषशब्देन व्यवह्रियते । एतदेव सर्वमभिप्रेत्याह नामादिष्विति उपोच्चारितानि पदान्युपपदानि तेषु संनिहितेष्वित्यर्थः । एते प्रत्यया इति परस्मैपदात्मनेपदसंज्ञकाश्च शब्दादिति नाम्निचेति अर्थोपि चकारास्तत्तदर्थसद्भावे तत्तदभावेपि प्रथमादयो यथास्युरित्येवमर्थाइतिभावः सामानाधिकरण्यार्थोश्च तेन त्वयापच्यते इत्यादौमध्यमोन अनभिधानाद्वा अतएवातित्वंपचति अत्यहंपचतीत्यतिक्रांतप्रधाने समासे युष्मदस्मदोरसामानाधिकरण्यादनभिधानाद्वा मध्यमोत्तमौ नत्वत्कल्पः पचसि मत्कल्पः पचामीत्यत्र कालांतरदृष्टगुणरहितो युष्मदस्मदर्थ एवत्वत्कल्पादिनोच्यते इतितवमध्यमोत्तमौ तथात्वत्तरः पचसि मत्तरः पचामि परमत्वं पचसि परमाहं पचामीति कालांतरदृष्टगुणातिशयविशिष्टो युष्मदस्मदर्थ एवोच्यत इत्येव तथात्वं संपद्यते त्वद्भवति मद्भवतीति प्रथमो भवति प्रकृतेरेव विकाररूपेण संपत्तौ कर्तृत्वात् तथाचमंत्रे यदग्नेस्यामहंत्वमिति अहंत्वं स्यां त्वं चाहं स्यां इति प्रकृत्याश्रयः पुरुषो दृश्यते इह भवान् पचत्विति युष्मदर्थप्रतीतेः चशब्दादप्रयुज्यमानेऽपीतिमध्यमः प्राप्नोति नचात्र युष्मदर्थत्वादलिंगः संबोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिंगवान् नचसंबोधनैकविषय इति ॥ कर्त ॥ ९ ॥ आद्भुविकर्मणीत्यत्रस्थमाद्ग्रहणं चकारेणानुकृष्यते इत्याह चकारादिति ननुपंचेत्येवास्तु सूत्रेमाकारिकर्तृग्रहणं नचाद्भुवीत्यतो भावकर्मणी अनुवर्तेयातामितिवाच्यं योगांतरारंभादन्यथा सुविकर्मणीत्येव सिद्धत्वान्नचार्थांतरं संभवतीति परिशेषात् कर्तर्येवस्यादिति किं कर्तृग्रहणेन एवंतर्हि भावनिवृत्त्यर्थं कर्तृग्रहणं अन्यथाऽनिर्दिष्टार्थत्वात् भावएवस्यात् अपकर्तरीति ज्ञापकात् कर्तर्य्येवस्यादितिचेत् कर्तर्य्येव यथास्यात् कर्मकर्तरिमाभूदिति कर्तरिग्रहणं कुप्यति पादः स्वयमेव रज्यतिवस्त्रं स्वयमेवेति तु-

रणाद्धातोस्तिबादयो योज्यंते तत्रैकत्वविवक्षायां प्रथमपुरुषैकवचनं तिप्भूतिप्इतिस्थिते पकारः पित्कार्यार्थः । अप्कर्त्तरि ॥ १० ॥ धातोरप्प्रत्ययोभवतिकर्त्तरिविहितेषु त्यादिषुचतुर्षु दिप्पर्यंतेषुपरतः पकारो विकरणभेदज्ञापनार्थः ॥ गुणः ॥११॥ धातोरंतभूतस्यनामिनोगुणोभवतिपि-

परमतात्सिध्यति मन्मतेतु कुप्यते इज्यते इत्येव तत्रेति तेषुधातुषु इत्यस्माद्धातोरात्मनेपदनिमित्तहीनादब्विकरणात्तिब्दिपूणबादयो योज्यंत इत्यर्थः विकरणो गणज्ञापकः भू तिप् इतिस्थित इति भूइत्यस्य सत्तार्थस्य भ्वादिरिति धातुसंज्ञायां धातोरिति सर्वत्र त्यादिप्रत्ययप्रसंगेवक्तुर्विवक्षितपूर्विकाशब्दार्थप्रवृत्तिरिति वर्तमानार्थविवक्षायां वर्तमाने तिप्तसिति तिबादीनांपरतोऽन्यदितिपरस्मैपदे कर्त्तरिपंचेति कर्त्तरिप्राप्ते नामकर्तुरेकत्वविवक्षायां नाम्निचेति प्रथमपुरुषैकवचने जाते भूतिप्इतिस्थिते सति-उच्यतइत्यर्थः पकारइति पित्कार्यमपित्तादिरित्यत्र प्रतिषेधादिति ॥ अप् ॥ १० ॥ इह यक् चतुर्षु सूत्राच्चतुर्ष्वित्यनुवर्तते इत्याद्यास्तिबादयश्चत्वारो दिवाद्यंताः कर्त्तरीति विशेषिताः निमित्तमितिमत्वाह कर्त्तरिविहितेष्वित्यादि कर्तरीतिकिं नचभावकर्मणोर्यक् बाधक इतिवाच्यं सतीहकर्तृग्रहणे यकस्तद्विषयत्वात् पकारइति पकारोहि सति अब्विकरणास्त्यादयः अविकरणास्तुदादय इति अनयोर्भेदः सुबोधःस्यात् ननुभूयोप्यविकरणा एवसंतु किं पकारेण गणैक्याल्लाघवमप्येवं स्यात् नापित्त्वेन ङित्वाद्भवतीत्यादौ गुणाद्यभावप्रसंगात् तर्हिपकारो गुणाद्यर्थ इतिवाच्यं ननूच्यते एव-तथाहि विकरणभेदो ज्ञाप्यते तेन तद्विकरणभेदज्ञापनं गुणादिकार्यं तदर्थो ज्ञेयः पकारइत्यर्थः पकारेण हि सता गुणादिना कार्य्यभेदेन कार्यभेदोऽपि ज्ञाप्यते तेन तद्विकरणभेदज्ञापनंगुणः इतिभावः ॥ ११ ॥ इहधातोःप्रेरण इत्यतोऽनुवृत्तस्य धातोरित्यस्य षष्ठीनिर्दिष्टत्वात् षष्ठीनिर्दिष्टस्येत्यंतस्ययंगुणो नामिनोभवति तत्स्थानिनामेवारेदोनामिन इत्यनेन गुणसंज्ञाविधानादित्यभिप्रेत्याह धातोरित्यादि अंतंभूतोऽतभूतः अंतंप्राप्तइत्यर्थः भूरयंहि प्राप्त्यर्थः । धातोरितिकिम् अभिकाम्यइति । नन्वपि-

त्तिपरेऽवादेशश्च भवति द्वयर्थविवक्षायां तम् ॥ अपित्तादिर्ङि-त ॥ १२ ॥ पकारेतं तादिकं च विहाय अन्यः प्रत्ययोङित्सं-ज्ञोभवति ॥ क्ङित्यद्व्युसि ॥ १३ ॥ किति ङिति परे धातो-र्गुणोन भवति द्व्युसं वर्जयित्वा कृतद्विर्वचनादुसि परेतु गुणो भवति । ततोङित्त्वात्तसि गुणप्रतिषेधेप्यपप्रत्ययनिमित्तो

त्तादिरितिङित्वादेवात्र गुणो न स्यात् न तत्रापि धात्वधिकारात् धातुविहितानामेव प्रत्ययानां ङित्त्वविधानात् काम्योहि नाम्नोविहितः अतएव हेवारे इत्यत्रापि न गुण-निषेधः । क्ङित्यद्व्यसीति पर्युदासाद्वा धातुशब्देनाविहितत्वात् धातुविहितत्वे हेम्रा-मणे इत्यत्र निषेधो न भवति । आख्याताधिकाराद्वा आख्यातप्रत्यय एव गुणस्य विधिनिषेधौ भवत इतिलूभ्यामित्यत्र धातोरपि न गुणः ऋतित्वनुवृत्तेराप्राप्तिर्नो-शंक्या ग्लापयतीत्यादौ गुणाभावस्तु गुणसंज्ञा सूत्रएवोपपादितः अवादेशइति भौ इत्योकारस्यतु अवित्यनेनेति निषेधो भवति । उक्तप्रक्रियायामेवंस्यादित्यर्थः द्वित्वे-ति नामकर्त्तुरितिशेषः ॥ अपि ॥ १२ ॥ पइद्यस्य स पित् तआदिर्यस्यासौ तादिः ता तारौ तारसित्यादिः ननु तकारादिस्तादिः अपितस्तत एवङित्त्वसिद्धेः पितस्त्व-सामर्थ्यादेवास्याप्रवृत्तेः पिन्नतादिश्चपित्तादी ततोऽन्योपित्तादिरिति तदन्यार्थेन तत्रासमासः इत्यभिप्रेत्याह पकारेतमित्यादि अतएव प्रसज्यप्रतिषेधानञोयथेष्टं संबंध इतिङित् पिन्नभवति पिच्चङिन्नभवतीत्यर्थात् ब्रूतात्भवानीत्यत्र तातङित्स्था-निवद्भावप्राप्तपित्त्वनिषेधात् पिदाश्रयोऽवादावितीब्भवति जुहोत्वित्यत्र च ङिन्नभ-वतीत्यर्थात्तदाश्रयगुणनिषेधोनच्यवते इदानीमित्यादौ तु नित्यत्वादंतरंगत्वाच्च प्राग-कारलोपे तद्भावात् गुणस्यक्रमेण विधिनिषेधौ भवत इतिनदोषः क्ङित्यकङोर्द्वन्द्वे इत्छब्दस्य प्रत्येकं संबंधे निमित्तसप्तम्यंतं चैतदनूद्यमानस्य गुणस्यविशेषणमिति मत्वाह ॥ क्ङिति ॥ १३ ॥ किति ङिति परे निमित्तेसति धातोर्योगुणः प्राप्तः स नभवतीत्यर्थः । विधेयस्य हिनिषेधस्य विशेषणे व्यवहितस्योपधागुणस्यनिषेधोन स्यात् धातोरिति क्वचित् प्रमादपाठः चिनुत इत्यादावधातोरपिनिषेधात् गुण इतिसूत्रात गुणइत्यनुवर्तनेनेतिनानिट्सइत्यतोऽनुवर्तते इहानंतरत्वाद् गुण

गुणो भवति स्नोर्विसर्गः भवतः बह्वर्थविवक्षायां भव अंति इति स्थिते । अदे ॥१४॥ अकारस्य लोपो भवतिअकारेएकारे च परे । भवंति भवसि भवथःभवथ । व्मोरा ॥१५॥ अकारस्य वकारे मकारे च परे आत्वं भवति । भवामि भवावः भवामः । स राजा धार्मिको भवति त्वं साधुर्भवसि अहमा-

इत्यादिना प्रकरणेनप्राप्तस्य गुणस्यनिषेधात् नेनिक्त इत्यादौक्ङित्यपि निजांगुणइतिगुणःस्यादेव अद्वयुसीतिच द्वाभ्यांरूपाभ्याम् उस् युस् ततोनञ् समासः ततश्च द्विरुक्तादुसोऽन्यत्र निषेधइतिभावः इत्याह द्व्युसंवर्जयित्वेति तदेव स्पष्टयति कृतद्विरिति द्विशब्दस्य द्विरुक्ते रूढिरितिभावः उसिपरे इति ततश्चउसोऽद्वित्वनिमित्ताप्रतिपादनाच्चक्रुरिति गुणनिषेधः सिद्धो भवंतीति गुणइतिशेषः प्रतिषेधस्य प्रतिषेधे विध्युपस्थानादितिभावः तत इतिप्रागुत्पत्तेः प्राप्तस्यगुणस्य निषेध इत्यर्थः । अनुत्पत्तौहि तेनव्यवधानात्तस् निमित्तस्यगुणस्य प्रतिषेधस्याप्यप्राप्तेः क्ङितीतिनिमित्तसप्तम्यावाफलमनेनदर्शितम् अप्रत्ययेति गुणस्यानिमित्तत्वेपि अपः पित्त्वेनाङित्वात् प्रतिषेधाप्रसंगात् गुणनिमित्तत्वमितिभावः स्नोरिति तसः सस्येतिशेषः भवतइति प्रक्रियातूक्तैव बह्वर्थेतिनामकर्तुरितिशेषः ॥ अदे ॥ १४ ॥ अयंसवर्णे दीर्घत्वापवादः अतएवेति लुप्तसप्तमीकं निमित्तमिदम् इहलोपो ह्रस्वादित्यतोऽनुवर्तमानलोपापेक्षया अतइतिपंचम्यंतमप्यर्थात् षष्ठ्यंतं स्यादित्यालोच्याह अकारस्येत्यादि भवतीति अलोपः शेषंप्राग्वत् धातुप्रत्ययेषु यस्यलोप इत्यस्याप्रवृत्तिरनेनज्ञाप्यत इतिभवेयुरेधेत इत्यादावलोपोन भवसीत्यादि मध्यमः स्पष्टः ॥ व्मो ॥ १५ ॥ अतइत्यनुवर्तते प्रत्ययाधिकारात्तदादिप्रत्यय इत्यर्थादपि मिपो न भवामीत्यादि त्रिष्वनेनात्वं शिष्टं स्पष्टम् अथप्रयुक्ते सराजेति अत्रनाम्निसति प्रथमः धर्मं चरतीतिधार्मिकः चरत्यर्थे केनेयेकाइति इकोणित्त्वादामिवृद्धिः एवं तौ भवतः ते भवन्तीति सिम्योरपि त्वं साधुरिति अत्रयुष्मदिमध्यमः एवंयुवांभवथः यूयंभवथेति द्विबहोरपिज्ञेयम् अहमिति आतमानंवेत्तीत्यातमावित् अस्मदिसत्यत्रोत्तमः आवांभवाव वयंभवाम इतिद्वित्वबहुत्वयोरपिज्ञेयम् । एवमप्रयुज्यमानेष्वपि नामादिषूदाहार्यमि

त्मविद् भवामि इत्यादि प्रयोक्तव्यम् । अव्यवधानाच्च पुरुषविशेषः साधुःसचत्वंच भवथः । विधिसंभावनयोः ॥१६॥ यात् यातां युस् यास् यातं यात यां याव याम। ईत ईयाताम्। ईरन् ईथाम् ईयाथाम् ईध्वम् ईय ईवहि ईमहि । विधिःकर्त्तव्यार्थोपदेशः अज्ञातज्ञापनमेकविधिः संभावनं कल्पनमूहस्तत्रयादादयः प्रत्यया भवंति लिङिति चैषां संज्ञा

त्याह इत्यादीति अव्यवधानाच्चेति व्यवधानंभेदस्तदभावोऽव्यवधानमभेदः सहविवक्षेति यावत् ततःपुरुषविशेषः परः पुरुषो भवतीत्यर्थः । अयमाशयः । नामादिषुयदाभेदो विवक्ष्यते देवदत्तो भवति भवसि त्वमहं भवामि च देवदत्तोऽहं चभवति भवामीति तदापृथगेव यथा ते पुरुषा भवंति यदापुनरभेदः सहभावोविवक्ष्यते देवदत्तौ भवथः सोऽहंच भवावः त्वमहंचभवावः सत्वम् अहंचभवामः सत्वमहं चवयंभवामः इतितदापरः पुरुषः प्रयोक्तव्यइत्यर्थः तथोदाहरति साधुइति इहनामयुष्मदोः सहविवक्षायां मध्यमो जातः एवंच तद्द्विवचनमप्युपपद्यते तथोक्तंपदमंजर्य्याम् अत्रयुष्मदस्मदी द्वे अप्युपपदे भवतः तत्रयदिकर्तृशक्तीस्वाधारनियते विवक्ष्येते तदालकारोपि भेदेनोत्पद्यते त्वंचाहं च पचसि पचामिचेति सहविवक्षायांतु द्वयोरपिसतोरेको लकारउत्पद्यते तत्रयुष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन त्वंचाहं च पचावः अहंत्वंचवृत्रहन् संयुज्यचेति । यदापि त्यदादीनां यद्यत्परमित्यस्मदः शेषस्तदा स्थानिन्यपीति मध्यमप्राप्तौपरत्वादुत्तम एवभवति आवांपचावइति ॥ विधि ॥ १६ ॥ कर्तव्येऽर्थे उपदेशः आज्ञापनं भृत्यादेरित्यर्थः एतेननिमंत्रणामंत्रणाधीष्टानामप्यत्रांतर्भावः सूचितः तत्रापिप्रवर्तनमात्रस्यसद्भावात् तत्रनियोगकरणं निमंत्रणम् इहभवान्भुंजीत आमंत्रणं कामचारकरणम् इहभवानासीत अधीष्टः सत्कारपूर्वकोव्यापारः अधीस्वभोमाणवक भवानुपनयेत संभावनशब्दार्थमाह कल्पनमिति अस्यापिपर्य्यायऊह इतिप्रत्ययार्थविशेषणं चैतदित्याह तत्रेति विध्यादिविशिष्टेषु कर्तृकर्मभावेष्वित्यर्थः लिङिन्तीति एषांयादादीनामित्यर्थः ।

पाणिनीयानां यादादीनाम् ॥ याः॥१७॥ अकारात्परो या इ- र्भवति भवेत् भवेताम्॥युसइट् ॥१८॥ अकारांतात्परस्य युस इ- डागमो भवति।भवेयुः भवेः भवेतं भवेत॥यामियम्॥१९॥अका- रात्परो याम इयम् भवति । भवेयं भवेव भवेम। शिष्यो गुरु- शुश्रूषको भवेदिति विधिः भवेदसौ वेदपारगो ब्राह्मणः ब्राह्म- णत्वादिति संभावनम् ॥ आशीःप्रेरणयोः ॥ २०॥ तुप् ताम् अंतु हि तं त आनिप् आवप् आमप् ताम् आताम् अंतां स्व

संज्ञेति लिङिति व्याख्येयम् ॥ याः ॥ १७ ॥ इहातइतिसूत्रादनुवर्तते आदाथइरि- त्यतः इतिचयेतिच लुप्तसिकोनिर्देश इत्याह याइत्ययमिति ततश्चषष्ठी निर्दिष्टत्वादं- त्यस्यादेशो न अतः किं ब्रूयात् तपरः किं यायात् अइए इतिएत्वमितिशेषः भवेदि- त्यादि भूइत्यस्मात्प्राग्वत् यादादौअप्कर्तरीत्यपि गुणइत्युकारस्य ओकारे अविच भवयात् इतिस्थिते येति इकारेएत्वेच एवंस्यादित्यर्थः ॥ युसः ॥ १८ ॥ अतइत्य- नुवर्तते इत्याह अकारादिति भवेयुरितियुस आदौ टित्त्वादिटि एत्वे विसर्गः भवे- रित्यादि याइतीत्वे एत्वयाम गुरुत्वात्सर्वादेशःकेनेत्याशंक्याह ॥ याम् ॥ १९ ॥ भवेयमिति इयमादेशे एत्वंभवेव भवेमेति येतित्वे एत्वं शिष्यइतिशुश्रूषत इतिशुश्रू- षकगुरोः शुश्रूषकइतिविधिरितिगुरुशुश्रूषकत्वलक्षणस्य कर्तव्यस्यार्थस्य अत्रोपदे- शादेवं तौ तादृशौ भवेतां ते तादृशा भवेयुः त्वंतादृग्भवेः युवांसाधूभवेतं यूयंसं- तोभवेत । अहंसाधुर्भवेयम् आवांतादृशौभवेव वयंसंतोभवेमेति प्रयोज्यम् इतिसं- भावनमिति ब्रह्मणत्वेन छंदोऽवगतत्वस्य संभावनात् ॥ आशीःप्रे ॥ २० ॥ आशीरर्थमाह अप्राप्तेतिप्रार्थना इच्छा परस्येति इष्टस्य प्रियार्थस्य प्रतिपादन- माशंसनंवा पक्षांतरेप्रेरणमिति तेनविधेः प्रैषातिसर्गप्राप्तकालानांच ग्रहणंभवति प्रवर्तमानमात्रस्य तत्रापिसत्त्वात् तत्रविधिः प्राग्वदुदाहार्यः प्रैषादौभवान् कटं- करोतु प्रेषितोऽतिसृष्टः प्राप्तकालश्च करणे अतिसर्गः कामचारानुज्ञा तत्रेति आशीःप्रेरणार्थविशिष्टेषुकर्त्रादिष्वित्यर्थः एभामितिप्राग्वत् व्याख्येयंतुह्योरिति-

आथां ध्वम् ऐप् आवहैप् आमहैप् अप्राप्तप्रार्थनमाशीः परस्येष्टार्थशंसनं वा प्रेरणं प्रवर्त्तनं तत्र तुबादयः प्रत्यया भवंति अस्य तुबादेःपाणिनीयानां लोडितिसंज्ञा तुह्योस्तातङाशिषि वा वक्तव्यः भवतु–भवताद्वा भवतां भवंतु ॥ ॥ अतः ॥२१॥ अकारादुत्तरस्य हेर्लुग्भवति । भव–भवताद्वा भवतं भवत भवानि भवाव भवाम आयुष्मान् भवतु भवान् अध्ययनायोद्यतो भव सौम्य ॥ अनद्यतनेऽतीते ॥ २२ ॥ दिप् ताम् अन् सिप् तं त अमिप् व म तन् आताम् अंत थाम् आथां ध्वम् इ वहि महि अतीताया रात्रेर्यामद्वयाद्र्वाग्यावदागामिन्याः प्रथमयामद्वयं सोऽद्यतनस्ततोऽ

ङकारोगुणाद्यभावार्थत्वेनोपक्षीणत्व प्रजनत्वान्नांत्यादेशो ङिद्त्यस्येत्यत्रोपपादितः भवंत्विति अदइत्यलोपः ॥ अतः ॥ २१ ॥ इह ओर्वाहेरित्यतो हेरनुवर्तते लोपोह्रस्वात्झस इत्यतोलोपश्च इत्यतआह हेर्लोप इति तत्रापीत्याद्यधिकारादन्यस्य हेर्नलोपः नहि स्वरव्यवहृतय इति हेरादेशस्य तातङः स्थानिवत्त्वेन प्राप्तलोपाभवंतु ओर्वाहेरित्यत्र वक्ष्यामः अतः किं ब्रूहि तपरः किं याहि भवानीति त्रिष्वपि सवर्णदीर्घः आशिष्युदाहरति आयुष्मानिति भूय आयुरस्यास्तीति भूमार्थेऽस्त्यर्थे इतिमतौ सह्यादेरिति षां...निपातनसामर्थ्याद्दोषामितिरेफोन भवच्छब्दप्रयोगः परस्येष्टार्थशंसनमपि दर्शयितुं भवताद्वृद्धौ तौ तादृशौभवेतां तेतादृशाभवंतु त्वंसाधुर्भव भवताद्वा युवांसंतौ भवतं यूयंसंतोभवत अध्ययनायेति प्रेरणोदाहरणं सौम्येति सोममर्हतीति णितोवेति यः ॥ अन ॥ २२ ॥ ननुचायं तत्पुरुषः नाद्यतनोऽनद्यतन इति बहुव्रीहिर्वा नास्त्यद्यतनो यस्मिन्निति नाद्यः भूतसामान्येपिप्रसंगात् भूतविशेषाश्रयस्य तत्रानुपस्थानात् द्वितीयेतु बहुव्रीहिणाद्यतनाभाववति अतीतविशेषे विधानात् नोक्तदोषः सामान्यविशेषस्यासत्त्वात् किंचात्राद्यतनानद्यतनसमुदायेऽपि न भवति अद्यतनस्यसत्त्वात् अद्यह्योभुंक्ष्महीति नन्वेवम

१ ननुह्यस्तन इतिवक्तुमुचितं लाघवात् उत्तरार्थताप्यस्य नास्ति ह्यस्तन इत्यस्यैवाऽन्वयसंभवादितिचेत् सत्यं नोक्तमनित्यमित्यद्यतनेपि परोक्षेणादिविध्यर्थमिदं बहुजगद पुरस्तात्तस्य मत्ता किलाहं सुप्तोऽहं किल विललाप । अत्र मद्यनिद्रादोषेण स्वनिष्ठक्रियाया अप्यननसंधानात्परोक्षम् ।

न्योनद्यतनस्तस्मिन्ननद्यतने अतीते काले दिवादयः प्रत्य-
या भवंतिएषां च संज्ञालङ् दिसिमिइत्येतेषामिकार उच्चार-
णार्थः तनोनकारइण्तन्यकर्त्तरीतिविशेषणार्थः वावसाने-
दकारस्यतकारः ॥ दिवादावट् ॥ २३ ॥ दिवादौ
परे धातोरडागमो भवति।अभवत-अभवद् अभवताम् अभ-
वन् अभवः अभवतम् अभवत अभवम् अभवाव अभवाम ह्यो
भवत्त्वत्पुत्र इत्यादि एधवृद्धौ अकारआत्मनेपदार्थः

द्यतने प्राप्नोति तत्रैव तस्याभावादितिवाच्यम् अनद्यतनेऽपिमुहूर्तादेः सत्त्वात्
मुहूर्त्तादावपि क्षणादेः तत्राद्यतनं लक्षयति अतीताया इत्यादि यामद्वयादिति पाश्चा-
त्यायाः पूर्वादित्यर्थः सइतिउक्तलक्षणो दिवसेन सहाष्टप्रहरात्मकः कालइत्यर्थः
अहउभयतोऽर्द्धरात्रमेषोऽद्यतन इतिग्रंथांतरः ततोऽन्यइति तदभाववानित्यर्थः
अथवानेन तत्पुरुषपक्षेपि नदोषइतिसूचितं भूतसामान्ये अद्यह्योभुंक्ष्महीत्यादौ
चानभिधानान्नभवति तस्मिन्निति तद्विशिष्टेषु कर्त्रादिष्वित्यर्थः एषामितिप्राग्वदर्थः
दिसिमीति अन्यथाद्विहसी दुरुच्चरेति तनइति अन्यथाइण्तेकर्तरीत्युच्यमाने
हि तकारांतरेपि प्रसंगः दिवादावडित्यतो दिवाद्यनुवृत्तेर्नैषदोष इतिचेन्न परस्मैपदेपि
प्रसंगान्न कर्तरीति तन्निवृत्तेः परस्मैपदस्य तु कर्तरिविधानात् नापितेकर्तरीतिनि-
र्देशे अकर्तरिकर्तरिवेति संदेहस्य निरासार्थः अकर्तरीति निर्देशादेव तत्सिद्धेरव्या-
ख्यानतोवा नाप्युत्तरार्थः लोपइति सतएवयथास्यात् नकारांतरस्य माभूदितिवाच्यम्
तत्रापिदिवादावकर्तरीति चानुवृत्तेः एवंतर्हि नकारोविस्पष्टार्थः वावसान इतिदः
क्षिकइतिशेषः ॥ दिवा ॥ २३ ॥ इहधातोरिति सूत्राद्धातोरित्यनुवर्तत इत्याह
धातोरिति अतएवपूर्वंधातुरुपसर्गेण युज्यत इतिदर्शने उपसर्गपूर्वादपि प्रत्ययधा-
तोरेव प्रागडागमोभवति सचटित्वाट्टित्किताविव्यादि अभवदिति भूइत्यस्माल्ला-
ङ्तत् दिवादिषु भूदिबित्यत्राप् प्राप्नोत्यट्च तत्रापि पश्चादट् प्राप्नोति नित्यत्वादप्

ततः पराणि नववचनानि पूर्ववद्बादिप्रयोक्तव्यः एधते ॥ आदाथ इः ॥ २४ ॥ अकारांतात्परस्य आतआथसंबंधिनआकारस्य इकारादेशो भवति । एधेते एधंते एधसेएधेथे एधध्वे एधे एधावहे एधामहे धर्म्मादिधते अदोराज्यमित्यादिविधिसंभावनयोः इत्यादीनि नववचनानि-नियोक्तव्यानि एधेत एधेयाताम् एधेरन् एधेथाःएधेयाथाम् ए-

नच अडपि नित्यः कृतेऽपि तेन व्यवधानादप्राप्तेः अजुहोदित्यादौ च चरितार्थत्वादट् च तस्यापि नसामर्थ्यम् एवं तर्हि अबप्यनित्यः शब्दांतरप्राप्तेः कृतेऽटि अभूइत्यस्य प्राप्नोत्यकृते भूइत्यस्य द्वयोरनित्ययोश्च परत्वादडेवादौ भवति ततोऽप् ततो गुणे अवादेशे पाक्षिके तत्वेचएवंस्यादित्यर्थः अमि त्वदे इत्यलोपः सिपितुविसर्गः वमोस्तु व्मोरित्यात्वं शिष्टंस्पष्टं ह्योऽभवदिति गतेह्नि ह्य इत्यव्ययंवर्तते इतिभवत्यबमतीतोऽनद्यतनः कालः तथाचामरः ह्योगतेनागतेऽह्निच इतितवपुत्र पूर्वेद्युरासीदित्यर्थः इत्यादिना त्वत्पुत्रौ ह्योभवतां ह्योभवन् त्वमभवः युवामभवतं यूयमभवत अहमभवम् आवांभवाव वयंभवामेति प्रयोज्यमित्यर्थः एधवृद्धिरुच्छ्रायः अवयवोपचयोवा वृद्धिः अकारइति सतिहि अकारेतस्यानुदात्तत्वाच्चानुदात्तङित इति एध अस्मादात्मनेपदंस्यादितिभावः अनुदात्तत्वं चाचार्यस्मरणादवगंतव्यं तदुक्तं स्वरितत्वानुदात्तत्वमनुनासिकता तथा । आचार्य्यस्मरणाज्ज्ञेयाप्रतिज्ञातत्रदर्शितेति ततः पराणीतितेषामेवात्मनेपदसंज्ञत्वादितिभावः पूर्ववदिति पूर्वस्मिन्निति पूर्ववत् यथाभूधातावबादिकार्यं दर्शितं तथात्रापि यथा संभवंद्रष्टव्यमित्यर्थः:एधते इति एध इत्यस्य भ्वादिरिति धातुत्वाद्धातोरित्यधिकृत्यवर्तमानेतितिबित्यादिसूत्रेण पराण्यात्मनेपदानि आदनुदात्तङितः कर्तरिपंच; नाम्निचेतिसूत्रैरेकवाक्यतामापन्नेन ते आते इत्यादिषु कृतेष्वपिकर्तरीत्यपि चैवंस्यादित्यर्थः ॥ आदा ॥ २४ ॥ आच्चाचेति द्वंद्वैकत्वेन षष्ठ्यंतः अकारादिति अतइत्यनुवर्तते आकारस्येति अनेन वमोरित्यनुवर्तमान आशब्दोर्थात् षष्ठ्यंतोजातः इतिदर्शितः अतः किं शयाते तपरः किं गाते

धेध्वंएधेयएधेवहिएधेमहि धर्मतः साधुरेधेत आशीःप्रेरणयोःतामादयः एधतांएधेतांएधन्तांएधस्वएधेथां एधध्वंएधै एधावहैएधामहै अनद्यतनेऽतीतेतनादयः ॥ स्वरादेः ॥ २५ ॥ स्वरादेर्धातोर्द्वितीयोऽडागमोभवति दिबादौपरेऐधत ऐधेतांऐधंतऐधथाः ऐधेथांऐधध्वंऐधे ऐधावहिऐधामहि ईक्षदर्शनांकनयोः आत्मनेपदी ईक्षतेईक्षेतेईक्षंतेईक्षसे ईक्षेथेईक्षध्वेईक्षेईक्षावहे ईक्षामहे विधिसंभावनयोः ईक्षेतईक्षेयातांईक्षेरन्ईक्षेथाः ईक्षेयाथांईक्षेध्वं ईक्षेयईक्षेवाहिईक्षेमहि आशीःप्रेरणयोः ईक्षतां ईक्षेतांईक्षन्तांईक्षस्वईक्षेथांईक्षध्वंईक्षैईक्षावाहिईक्षामाहि अनद्यतनेऽतीते ऐक्षतऐक्षेतांऐक्षंतऐक्षेथाःऐक्षेथां ऐक्षध्वंऐक्षेऐक्षावहिऐक्षामहि डुपचष्पाके डुकारषकारानुबंधौकार्यार्थौ चकारेत्वकारउभय-

अइए इत्यनेन एध आते इत्यत्र आकारस्येत्वे एवमित्यर्थः एधंतइति अदेइत्यलोपः एधेथे इति आदाथइः इतीत्वे एत्वं एधंते इति अदेइत्यलोपः एधावहे एधामहे इति व्मोरित्यात्वं शिष्टंस्पष्टम, धर्मादिहेतौ पंचमीयं राज्येत्यत्र कर्तरिप्रत्ययः इत्यादीति द्विवचनादावप्युदाहार्य्यमितिशेषः विधीति धातोरात्मनेपदित्वादिति भावः एधतइत्यादि सर्वत्रैवं एंधतामिति आतइत्वे एत्वम् एधेताम् अलोपः एधेथामिति इत्वैत्वे एऐऐ इतिऐत्वं एधावहै इति सवर्णदीर्घत्वं शिष्टंस्पष्टम् ॥ स्वरादेः ॥ २५ ॥ इहधातोरित्यनुवर्तते दिबादाविितिच तत्रस्वरादेरिति धातोर्विशेषणमितिमत्वाह स्वरादेर्धातोरिति दिबादावडित्येव सिद्धेपुनरस्यारंभः स्वसामर्थ्यादैक्षतेत्यादिसिद्ध्यर्थमडागमांतरविधानायेत्यभिप्रेत्याह द्वितीयोऽडागमइति ऐक्षतेत्याद्यर्थमपिस्वरादित्वसाम्यादिदमत्रव्याख्यातम् ऐधतेति अटोरेत्वं ऐधे इतिएत्वं शेषं प्राग्वत् ईक्ष दर्शनम. वलोकनं अंकनं चिह्नं आत्मनेपदीति अकारस्यानुदात्तत्वप्रतिज्ञानादितिभावः ऐक्षतेति

पदार्थः पूर्व्ववद्बादिप्रयोगः वर्त्तमाने पचतिपचतःपचं-ति पचसिपचथःपचथ पचामिपचावःपचामः विधिसं-भावनयोः पचेत्पचेतांपचेयुः पचेःपचेतंपचेतपचेयं पचे-व पचेम आशीःप्रेरणयोः पचतु-पचताद्वापचतांपचंतु अतः इतिहेर्लोपः पच-पचताद्वापचतंपचतपचानिपचा-व पचाम अनद्यतनेऽतीते अपचत् अपचतांअपचन् अपचः अपचतंअपचतअपचंअपचावअपचाम परस्मैपदे रूपंज्ञेयं वर्तमाने पचतेपचेतेपचंते पचसेपचेथेपचध्वे प-चेपचावहेपचामहे विधिसंभावनयोः पचेतपचेयातांप-चेरन्पचेथाः पचेयाथांपचेध्वंपचेयपचेवहिपचेमहिआ-शीःप्रेरणयोः पचतांपचेतांपचंतां पचस्व पचेथांपचध्वं पचै पचावहै पचामहै अनद्यतनेऽतीते अपचत अपचे-तांअपचंत अपचथाः अपचेथांअपचध्वंअपचेअपचावहि अपचामहि ॥ इतिभ्वादयः ॥ १ ॥ इदानींलुग्विकरणाददा-देर्गणात्कर्तरिरितिबादयश्चत्वारोगणावर्ण्यते अद्भक्षणे अ-

पूर्वदिबादावट् अइए इत्येवं ततोद्वितीयेन अटा एऐऐइत्यैत्वं सवर्णदीर्घस्तु द्वितीयस्याटोविधानसामर्थ्यान्न शिष्टं एवमज्ञेयं डुपचष्पाके डुकारेति सदोणादय-इति सदाशब्दस्य बहुलार्थत्वात्समुदायादपि कारप्रत्ययः डकारेणसहित उकारो डुकार इतिवा कार्य्यायेदितीत्संज्ञत्वाद्यस्येत्संज्ञेति लोपादित्यर्थः कार्यार्थावितिकार्य्ये तु पक्त्रिममिति ड्वित इति त्रिमक् पचेति षिद्भिदामङ् वक्ष्यते चकारइति तस्यहि स्वरितेत्वप्रतिज्ञानादित्वाच्च ञित्स्वरितेतद्धतिपचतेः परस्मैपदात्मनेपदे स्त इत्यर्थः पचतीति प्राग्वत्तिबादावपि च सर्वत्र श्लिष्टोच्चारणं प्रक्रियातु भवतिवत् आत्मनेपदेपि प्रक्रियाद्वितीयाड्डूर्जमेधतिवज्ज्ञेया ॥ इतिभ्वादयः ॥ १ ॥ इदानीमिति अपउपजीव्य-

कारउच्चारणार्थः ॥ अदादेर्लुक् ॥ १ ॥ अदादेर्गणादुत्पन्नस्यापोलुग्भवति खसेच्चपाझसानांवर्तमाने अत्ति अत्तः अदंति अत्सिअत्थः अत्थआद्मिअद्वः अद्मः विधिसंभावनयोः अद्यात्अद्यातां अद्युःअद्याःअद्यातंअद्यातअद्यांअद्याव अद्याम आशीः प्रेरणयोःअत्तुअत्ताद्वाअत्तांअदंतु ॥ झसा- ॥ २ ॥ झसादुत्तरस्यहेर्धिर्भवति अद्धिअत्ताद्वाअत्तम् अत्तअदानिअदावअदाम अनद्यतनेऽतीते अदोदिस्योरडागमोवक्तव्यः आदत्आत्ताम् आदन्आदः आत्तम् आत्त आदंआद्वआद्म शीङ्स्वप्नेङकारआत्मनेपदार्थः ॥ शीङः

त्वात्तद्वत इत्यर्थः अद्भक्षणे भक्षणं खादनं ।। अदा ॥ १ ।। इहापूकर्तरीत्यतोऽन्विति प्रथमांतमप्यर्थात् स्थानषष्ठ्यंतं स्यादित्याह अपोलुगिति अत्तीति ॥ झसा ।। २ ।। प्राग्वत्तिबादावपि तस्य लुकिच तकारसकारपकारादौ खसेचपा इति सावर्ण्याद्वस्यत इत्यर्थः प्रागादेशनिर्देशो असंदेहार्थः ननुचैतदत इत्यस्मात्परमेव किं न कृतं एवंतर्हि ओर्वाहेरित्यनुवृत्तेः पुनर्हिग्रहणं नकार्यंस्यात् मैवंवानुवृत्तेरत्रदुर्वारत्वात् अद्धीतिहेर्धित्वम्अत्तादिति तातङोऽत्रधित्वाभावमोर्वाहेरित्यत्रवक्ष्यामः अद इतिए-तच्च दिबादावडित्यस्मात्परमदोदिस्योरितिसूत्रमस्ति ततोलभ्यते तस्यचायमर्थः । अदोदिस्योः अतःपरयोःदिप्सिपोरडागमोभवति आददित्यादि स्वरादित्वादटोदीर्घः टित्त्वादिस्योरादावट् शीङ्स्वप्नेस्वप्नसंवेशः ङकार इतिसतिहिङ्कारे तस्येत्वादनुदात्तङित शीङ्धातोरपि पराणि नववचनानिस्युरित्यर्थः शीङः ङकारो यङ्लुक्निवृत्त्यर्थः शशीतः शेश्यति अस्यपितिगुण इत्येवसिद्धत्वात् क्ङितिप्रतिषेधापवादार्थं-

---

१ अद् आदिर्यस्य स अदादिस्तस्माददादेः अद् भक्षणेइत्यारभ्यदिवुक्रीडेत्यतः प्राग्वर्ती समुदायोऽदादिशब्देन गृह्यते तस्यचाऽनुद्भूताऽवयवभेदस्याऽन्यपदार्थत्वेन विवक्षणाददादेरित्येकवचनं पूर्वसूत्रादप् इत्यनुवर्तते तच्चषष्ठ्याविपरिणम्यते तस्यलुग्विधीयते अत्र-चतुर्भ्विंत्यस्यानुवृत्तिस्तु नोपयुज्यतेऽचतुर्ष्वपोऽभावात् अत्रतद्गुणसंविज्ञानबहुव्रीहेराश्रयणाद्दते चतुर्षुरप्यपोलुक् अपःकिं भिद्यतेएवमग्रेपि ।

सर्वत्र ॥ ३ ॥ शीङः सर्वत्र गुणो भवति । शेते शयाते ॥ शीङो रुट् ॥ ४ ॥ शीङः परस्यांत इत्यस्य रुडागमो भवति ॥ आतोंतोदनतः ॥ ५ ॥ आतः आत्मनेपदस्यांत इत्यस्याद्भवति अनकारादुत्तरस्य । शेरते शेषे शयाथे शेध्वे शये शेवहे शेमहे विधिसंभावनयोः शयीत शयीयातां शयीरन् शयीथाः शयीयाथां शयीध्वं शयीय शयीवहि शयीमहि आशीः प्रेरणयोः शेतां शयातां शेरतां शेष्व शयाथां शेध्वं शयै शयावहै शयामहै अनद्यतनेऽतीते अशेत अशेयाताम् अशेरत अशेथाः अशेयाथाम् अशेध्वम् अशयि अशेवहि अशेमहि । ब्रूञ् व्यक्तायां वाचि ञकार उभयपदार्थः ॥ अवादात्रीपितितस्मि ॥ ६ ॥ ब्रुव ईकारप्रत्ययो भवति तका-

भेदमिति सर्वत्रास्य गुणो भवतीतिमत्वाह ॥ शीङः सर्वत्र ॥ ३ ॥ यद्येवं शिश्ये शिश्याते इत्यत्रापि प्राप्नोतिमैवं भूञ्वांलुकीतिसूत्रात् मंडूकप्लुत्यालुकीत्यनुवृत्तेरस्य योगस्यापविषयत्वात् अतएव वृत्तिकारः पुनर्यकि शीङो यङमारप्स्यतो शीङो यङ् यकि वक्तव्य इति ओत इति शीङोङित्त्वात् प्रागवदात्मनेपदेऽपि चादादित्वादप् लुकि न तन्निमित्तमिति अपूनिमित्तगुणाप्राप्तौ शीङ इति तेनिमित्तोगुण एकारः शयात इति प्रागवदेकारे ए अय् ॥ शीङोंत ॥ ४ ॥ शीङः परस्यांत इत्येतस्य रुडागमो वक्तव्य इत्यर्थः ॥ आतोंत ॥ ५ ॥ आदितिच्छेदः अंत इति षष्ठीयम् इति तकारावधिः स्थानी आत इत्यात्मनेपदैकदेशनिर्देश इति मत्वाह आत आत्मनेपदस्येति शेरत इति शीङो गुणेऽनेनादादेशे टित्त्वादादौ रुट् एवं शेरतां अशेरतेति आतः किं विदंति अनत इति किं च्यवंते तपरः किं गातेराते शेषे इति किलादिति षत्वं शिष्टं स्पष्टं ब्रूञ्व्य-कार इति तेन ञित्त्वात् ञित्स्वरितेत इति परस्मैपदात्मनेपदे अस्माद्भवत इत्यर्थः अवादा ॥ ६ ॥ अत्र ब्रुव आह इत्यतो ब्रुव इत्यनुवर्तते अपीत्येव सिद्धे आदि-शब्द उत्तरार्थः तेन जायते जानाति इत्यत्र येनाप्रत्ययेऽपि जादेशो भवति-

रसकारमकारादौपिपितिपरे अबादौविषयेगुणावादेशौ वर्त्तमाने ब्रवीति ब्रूतः ऋओर्धातोरियुवौ स्वरे य्वोर्वेति वर्त्तमाने ॥ नुधातोः ॥ ७ ॥ विकरणस्यनोर्धातोश्चेवर्णोवर्णयोरियुवौभवतः स्वरेपरे अनेकस्वरस्यासंयोगपूर्वस्यतुय्वौ नानप्योर्व्वः । ब्रुवंतिब्रवीषि ब्रूथः ब्रूथब्रवीमिब्रूवः ब्रूमः ब्रुतेब्रूवातेब्रुवतेब्रूषेब्रु-

वेषयसप्तम्येवायमिति अमोलुक्यपि भवति ण्पितीति द्विपकारकोनिर्देशः इतिवि-गीयते अन्यथापित्तादिरिति ङित्त्वात् गुणोनस्यात् तिस्मतिचतकारसकारमकाराणां द्वैकत्वेन ङ्यंतोनिर्देशः अव्यवहिताश्चतादयः प्रत्ययादावेवंभवंतीति सर्वमालोच्याह ब्रुवईप्रत्ययइत्यादि ब्रवीतिब्रुवः प्राग्वत्तिप्यदादित्वादपोलुकि अबादावितीपिगुणेऽवा-देशेचैवंस्यादित्यर्थः ब्रूतइतिङित्त्वान्नगुणः य्वोर्धातोरिति एतच्चताभ्यामेव सिद्धे नुधा-तोरिति नारंभणीयमितिशंकानिरासायोक्तं तच्चाग्रएवस्फुटयिष्यते ॥ नुधा ॥ ७ ॥ पूर्वसूत्रयोः स्यादिस्वरविषयत्वादस्यारंभः यद्यपितदेव स्वरग्रहणमत्राप्यनुवर्तते तथापिनुप्रत्ययोपादानसामर्थ्यात् योगांतरारंभाच्च धातुर्विहितप्रत्ययः स्वरएवविज्ञा-यते तेनच्यर्थं भ्वर्थमित्यादावनेनापि युवौ न अतएवच णुस्तुतावितिधातुरपिनगृह्यते कृत्रिमत्वाच्च तदेवस्वादिनोलुप्तषष्ठीकोयं निर्देश इतिमत्वाह विकरणस्यनोरिति प्र-त्ययग्रहणपरिभाषयातदंतस्येत्यर्थः इहनोश्चेतिकृतेऽपि सूत्रे य्वोर्धातोरित्वतोऽनुवृत्ते-र्नोर्धातोश्चयुवोःसिद्धौ योगविभागार्थंपुनर्धातुग्रहणं तेननुइत्येकोयोगः तत्रानुवर्तमानेन धातुग्रहणेनोक्तार्थःसिद्ध्यति ततोधातोरितिद्वितीयः तत्रच नु इत्यनुवर्तते यौवेतिच तेन नुप्रत्ययांतस्य धातोश्चानेकस्वरस्यासंयोगपूर्वयोरिवर्णोवर्णयोर्य्वौभवत इतिच-स्यार्थ इत्यभिप्रेत्याह अनेकस्वरस्येति नुप्रत्ययांतस्य धातोश्चेत्यर्थः असंयोगपूर्वस्येति इवर्णोवर्णस्येत्यर्थः नुर्विशेषे य्वाविति यकारवकारौ इयुवोरपवादभूतौस्यातामि-त्यर्थः नानप्योर्वइत्यनेनापि अब्विषयाद्विभक्तिचतुष्टयादन्यत्रोकारस्य वकारो नस्यादित्यर्थः एतत्सर्वंचानुवृत्तेर्लभ्यते सहिनिपातत्वादनेकार्थः एषामुदाहरणानि

वाथेब्रूध्वेब्रुवेब्रूवहेब्रूमहे इत्यात्मनेपदे ॥ ब्रुवआहश्चपंचा-नां ॥ ८ ॥ ब्रुवउत्तरेषांतिबादीनांणपअतुसउस्थप् अ-थुस्इत्येतेपंचआदेशाः ब्रुवआहश्चादेशोभवतिणका-

वु यथास्वं मूलएवाग्रे वक्ष्यते ब्रुवंतीति अंतावप् लुकिनुधातोरित्युव् ब्रवीषीति-सिपि ; अबादावितीपि गुणावादेशौ उवतुपरत्वात् गुणेनबाध्यते ब्रवीमीति तिब्वत् ब्रुवे इति आतोंत इत्यत् ॥ ब्रुवः ॥ ८ ॥ अत्र विदो नवानामित्यतस्तिबादीनां णबादिर्वेत्यनुवर्तते पंचानामिति च तिबादीनां विशेषणं आदिशब्दश्चोभयत्रापि व्यवस्थार्थः सन् वर्तमाने तिप् तस् अंति सिप् थस् थ इतिसूत्रस्थान् तिबादीनाचष्टे तथापरोक्षेणवतुसुस्थप्थुसिति सूत्रस्थांश्च णबादीन् तत्रार्थतः सादृश्यादिकार्थ्य-स्यातिपोणवित्यर्थः द्व्यर्थस्य तसोद्व्यर्थोऽतुस् बह्वर्थस्यांते बह्वर्थउस् तथायुष्मदेकार्थस्य सिपस्तादृशस्थप्युष्मदोद्व्यर्थस्यथसः तादृशोऽथुस्येवंपंचानां स्थानिनां क्रमेणपंचैवा-देशा भवंतीत्यभिप्रायेणाह इत्येत्वेपंचेति अथायमादेशस्तिबादीनांस्यात् अर्थवशात् ब्रुवइतिपंचम्याषष्ठीविपरिणामेन ब्रुवएव वा नाद्यस्तिबादिविधिवैयर्थ्यापातात् तदभा-वपक्षेऽयं स्यादितिचेन्न प्रागादेशनिर्देशानुपपत्तेः किंच तिबादीनामाहादेशे थकारेह-स्याभावात्तथइत्येतदसंगतार्थंस्यात् इतिद्वितीयमेवाश्रयति ब्रुवआहश्चेति हकारे अका-रउच्चारणार्थः आहेति ब्रू तिइतिस्थितेणपिब्रुवश्च गुरुत्वात् सर्वस्येत्वाल्लोपः स्थानिव-द्भावेपि णपोनेप्भवति स्वरूपानतिदेशेन तादित्वाभावात् नत्वाकारमात्रमादेशोयमां-तादेशत्वेनातारिकारस्यप्राप्नोति नचणपाभ्यामनेकवर्णं इतिवाच्यम् इत्संज्ञकानामने-कवर्णत्वं प्रति अप्रयोजकत्वात्[1] अतएवगुरुः शिच्चेति शिद्ग्रहणं एवंतर्हि सर्वादेशताम-

---

[1] अप्रयोजकत्वमनुकूलतर्काभावत्वम् ।

रौश्रुद्धर्यर्थः आहआहतुःआहुः ॥ तथे ॥ ९ ॥ थकारे परेब्रुवोहकारस्यतकारादेशोभवति आत्थआहथुः विधिसंभावनयोः ब्रूयातब्रूयातांब्रूयुःब्रूयाःब्रूयातंब्रूयात ब्रूयांब्रूयावब्रूयाम ब्रूवीतब्रूवीयातांब्रूवीरन्ब्रूवीथाः ब्रूवीयाथांब्रूवीध्वंब्रवीयब्रूवीवहिब्रूवीमहि आशीःप्रेरणयोःब्रवीतु–ब्रूताद्वाब्रूतांब्रूवंतु ब्रूहि–ब्रूताद्वाब्रूतंब्रूतब्रवाणिब्रवावब्रवाम ब्रूतां ब्रूवातां ब्रूवतांब्रूष्वब्रूवाथांब्रूध्वं ब्रवैब्रवावहैब्रवामहै; अनद्यतनेऽतीते अब्रवीतअब्रूतांअब्रुवन्अब्रवीः अब्रूतंअब्रूतअब्रवं अब्रूव अब्रूम अब्रूतअब्रूवातां अब्रूवतअब्रूथाः अब्रूवाथांअब्रूध्वंअब्रूविअब्रूवहिअब्रूमहि ॥ इत्यदादयःसमाप्ताः ॥ २ ॥ लुग्विकरणस्या-

तरेण णस्येत्संज्ञैव नस्यादिति गुरुत्वादेव सर्वादेशः नतुसादि साहचर्य्याद्वा आहतुस्तसोऽत्रातुस् एवमाहुरित्यत्राप्यंते रुस् वा ॥ तथे ॥ ९ ॥ लुप्तसिको निर्देशः इहब्रुव आहश्चेत्यतः आहइति प्रथमांतमप्यादेशापेक्षयार्थात्षष्ठ्यंतं स्यादित्यं तस्यायंतादेश इत्याह ब्रुवोहकारस्येति ब्रुवआदेशसंबंधिनइत्यर्थः आत्थइति ब्रुवोऽत्रथपि ब्रुवश्चाह हस्यानेन तः आहथुरितिथसोत्राथुस् पंचानांकिंब्रूथब्रूयादित्यादि यादादौ ङित्त्वान्नगुणः तादौस्वरादित्वान्नुधातोरित्युव् ब्रवीत्विति तुध्यवादावितीपि गुणावौ ब्रूतादिति तातङि अवादावितीप् नेतिङित्सूत्रे एवोपपादितः ब्रवाणीत्यादि त्रिष्वपि गुणावौ तथा ब्रवै त्र्येपि अब्रवीत् इत्यादि दिपो वावसान इतितत्वं सिपिचावादाविबोप् स्वरादौपिति सर्वंगुणावौ ङितिउव् दिबादावट् शेषंसुगमं ॥ इत्यदादयः ॥ २ ॥ लुक् विकरणस्येति गणांतरत्वप्रदेशनार्थमेतदुक्तं हुदानादनयोरित्यत्रदानंहविः

**पिजुहोत्यादिगणस्यविशेषः हुदानादनयोः ॥ ह्वादेर्द्विश्च ॥ १ ॥ हुइत्यादेर्गणादुत्पन्नस्यापोलुग्भवतिसति नस्मिन्धातोर्द्विवचनं ॥ सस्वरआदिर्द्विरद्विः ॥ २ ॥ सस्वर**

प्रक्षेपः अदनमशनं ॥ ह्वादेः ॥ १ ॥ इहादादेर्लुगित्यतो लुगित्यनुवर्तते सचप्राग्वदेवेत्याह अपोलुगिति द्विश्चेति द्वित्वमपि सन्निधानात् ह्वादीनामेवेत्याह धातोर्द्विवचनमिति तस्मिंल्लुकीत्यर्थः ॥ सस्वर ॥ २ ॥ इतिद्वित्वविधानांतरस्य द्विश्चेत्यादेर्वैयर्थ्यप्रसंगापनायं स्वतंत्रोविधिः किंतुपरिभाषेयं द्वित्वं विधीयमानं सस्वरस्यादेरद्विरुक्तस्य स्यादिति वेदितव्यं आदिश्चधातुमात्रस्यगृह्यते तेनधातुपाठस्य भुवोऽनुपादानात् इत्यतआह सस्वरआद्योऽवयव इतिसामान्येन धातुमात्रस्येत्यर्थः अटत्यादौतु नुगशासिनि पूर्वस्यनुग्विधेर्ज्ञापकात् स्वरमात्रस्यापि द्वित्वसिद्धिः इयर्तीत्यादावपि स्वरमात्रे धातौ राहोः शिरः इतिवन्निर्वाहः ननुचादेरेव द्विरुक्तौव्यवधानान्नैव नेनिजतीत्यत्र द्विरित्यादेशोनप्राप्नोति अनेनिजुरित्युसादेशश्च नैषदोषः तस्यापि द्विर्भावात्तथाहि स्वरेण सहवर्तमानः सस्वरइतिसमुदायः समासार्थतत्र येनस्वरेणावयवः सस्वरस्तेनैव समुदायोपीति यथा अंगुलिमंतमानयेत्यंगुलिमत्वाविशेषेऽपि देवदत्त एवानीयते न हस्तं तद्वदत्रापि द्विर्भविष्यति अवयवद्विरुक्तिं विनासमुदायस्याशक्यद्विरुक्तित्वात् एवंचेत्स्वलक्षणैरेव समुदायद्विरुक्तेः पूर्वस्यहसादिशेषः शसात्खपा इतिशेषेणसिद्धौ व्यर्थमिदमितिवाच्यं अनेकस्वरस्य समुदायार्थत्वात् जजागर दिदरिद्रिषति अतएव चार्थवद्ग्रहणपरिभाषयार्थवतः समुदायस्यैव द्वित्वंस्यान्नानर्थकावयवानामित्यपिनाशंक्यं शब्दरूपानुच्चाराद्वा नायमस्या विषयः द्विरिति द्विर्वारं द्विरिति सुप्रत्ययानि-

---

१ हुआदिर्यस्यसह्वादिः तस्यद्वौवारौ इतिद्विःद्वित्वविशिष्टवाचकाद्द्विशब्दात् क्रियाया-आवृत्तौ सुः साचयोग्यताबलादुच्चारण क्रियागृह्यते लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते ह्वादेरिति कर्मणि षष्ठ्युच्चारणक्रियायाः कर्मत्वात् तथाचलुकिसतिह्वादिर्द्विवारमुच्चारणीयः इतिफलितं द्विःप्रयोगो द्विर्वचनमिति सिद्धांतो नतुस्थानेद्विर्वचनमिति लुकिकिं हूयते । अत्रचअकारोधिकःपूर्वेणापोलुकि अनेनद्विर्वचनस्य विधानेन सिद्धत्वात् । चकारोऽनुक्तसमुच्चयार्थः तेनभीह्रीभृहुवामितिद्वित्वमित्वंचासिद्ध्यति ।

आद्योऽवयवोऽद्विरुक्तौद्विर्भवति ॥ कुहोश्चुः ॥ ३ ॥ पूर्वसंबंधिनोःकवर्गहकारयोश्चुत्वंभवति ॥ झपानांजबचपाः ॥ ४ ॥ पूर्वसंबंधिनांझपानांजबाश्चपाश्चभवंति । जुहोति जुहुतः ॥ द्वेः ॥ ५ ॥ द्विरुक्ताद्धुत्तरस्यांतइत्यस्याद्भवति जुह्वतिजुहोषिजुहुथः जुहुथजुहोमिजुहुवः जुहुमः विधिसंभावनयोः जुहुयातजुहुयातांजुहुयुः जुहुयाः जुहुयातं जुहुयात जुहुयां जुहुयाव जुहुयाम छंदसि तिबा-

देशता सएवशब्दो द्विरावर्तेत इति द्विः प्रयोगः पक्षएवाद्दतोभवति नत्वादेशपक्षः एवंच बेभिदितिरित्यत्रोणादित्वात् क्तौविभिद्यशब्दाद्यतइत्यलोपयलोपयोः कृतयोरुपदेशे यएकस्वरोऽनुदात्तः सएवायमिति नैकस्वरादनुदात्तादिति प्राप्तनिषेधो अल्लोपस्य तद्वद्भावान्न तथाजागृहीतेत्यत्रापि इटोग्रहामिति ग्रहादिभ्यो विहितस्येट ईद्विधानान्नेत्वप्रसंग इत्यनया दिशा दोषप्रसंगद्वारौमहाभाष्यपदमंजर्य्यनुसारेण विचार्य्यौ विस्तरभयादिहनोक्तौ अद्विः किं पापठिषतेः यङंतात्सप्रत्यये पुनर्द्वित्वं न ॥ कुहोः ॥ ३ ॥ अत्रपूर्वस्यहसादिरित्यतः पूर्वस्येत्यनुवर्तते इत्याह पूर्वसंबंधिनोरिति हकारस्येति चतुर्थोझकारः एतच्च होझभाइत्यत्र सुविशदमुपपादितं ॥ झपा ॥ ४ ॥ जबचपाइतिद्वंद्वनिर्देशइत्याह जबाश्चपाश्चेति तत्र वर्ग्योवर्गेणेति झढधघभानां जडदगबाः खफछठथानांचटतकपा भवंतीत्यर्थः जुहोतीतिहुधातोः प्राग्वत्तिप्यपिच ह्वादेरिति अब्लुकिद्वित्वेन सस्वरआदिरिति हुशब्दे द्विरुक्ते कुहोरितिपूर्वहस्य चुत्वेन झपानामिति झस्यजेति कृतेचैवंस्यादित्यर्थः जुहुतइति तसोङित्त्वान्नगुणः ॥ द्वेः ॥ ५ ॥ द्वेरूपेविद्येतेऽस्यासौ द्विस्तस्मात् द्वेरितिसहादेरिति द्विमच्छब्दस्यास्त्यर्थेमत्वंतः स्यात् द्विरादेशः यथाशुक्लगुणवान् शुक्ल इति शुक्लवच्छब्दस्यशुक्लादेशः ततश्च द्वेरित्यद्विरूपवतो द्विरुक्तादित्यर्थः स्यादितिमत्वाह द्विरुक्तादितिइहांतोऽतइत्यनुवर्तेत इत्याह अंत इत्यस्याद्भवतीति जुह्वतीतिद्वित्वं अंतेऽदादे

द्रिर्विधौवावक्तव्यः अग्निहोत्रंजुहोतिजुहुयादित्यर्थः आ-शीःप्रेरणयोः जुहोतु-जुहुताद्वाजुहुतांजुह्वतु ॥ हेर्धिः ॥ ६ ॥ हुशब्दादुत्तरस्यहेर्धिर्भवति । जुहुधि-जुहुताद्वाजुहुतंजुहुतजुहवानि जुहवाव जुहवाम अनद्यतनेऽतीते अजुहोत् अजुहुतां ॥ अनउस् ॥ ७ ॥ द्वि-रुक्तादुत्तरस्यानउस्भवति गुणावादेशौ । अजुहवुः अ-जुहोः अजुहुतंअजुहुतअजुहवंअजुहुवअजुहुम ओहा-ङ्गतौ ङकारआत्मनेपदार्थः ओकारउदित्कार्यार्थः

ङित्त्वान्नगुणः अनेकस्वरत्वादसंगपूर्वत्वात् उत्वं जुहोषीति सिपिगुणेऽपिकिलादि-तिशेषःएवंसर्वत्र पिदपितोर्गुणस्य विधिनिषेधौ द्रष्टव्यौ ओर्वमोर्वालोपः इत्यस्यात्र क्वाचित्कोपपाठः प्रत्ययोकारस्यानेनलोपाविधानात् तथा वोतश्चप्रत्ययादित्यधिकृत्य श्रीपाणिनिनाप्युक्तं लोपश्चान्यतरस्यांम्वोरिति छंदसीतिविधौ यादाद्यर्थे अग्निहोत्र-मिति अग्निहोतारंहविरग्नौप्रक्षिपतीत्यर्थः तथाच पदमंजर्य्यामुक्तं कपुनरयमग्निहोत्र-शब्दो वर्तते हविषीति जुहुतादिति तातङोङित्त्वान्नगुणः जुह्वतु इतिद्वेरित्यदादेशः हुश-ब्दादिति अयंभावः झसाद्धिर्हेरित्यत्र हुझसादितिवक्तव्यं ततश्च ॥ हेर्धिः ॥ ६ ॥ इत्यनेन हेर्धौकृते जुहुधि एतद्रूपं सेत्स्यति तादितिवत् जुहुतादित्यत्र धित्वंतातङो न जुहवानि त्रिष्वपिपित्त्वाद्गुणः अजुहोदिति दिवादावट् पितिगुणः अजुहुतामिति ङित्त्वान्नगुणः अतद्विरिति सूत्रमनुवर्तत इत्याह द्विरुक्तादिति गुणावादेशाविति अजु-हवुरित्यत्र ॥ अनउस् ॥ ७ ॥ इत्यनेनोसिकृते तस्यतद्धत्वात् ङित्त्वेपिक्ङित्यद्वयु-सीत्यत्रद्वयुसः प्रतिषेधात् गुणइत्योकारेऽवादेशइत्यर्थः अजुहोरिति स्रोर्विसर्गः अजु-हवमिति अमिपिगुणावौ शिष्टंस्पष्टम् ओहाङ्गतावित्यत्रगतिर्गमनं ङकारइति आद-नुदात्तङित इतिशेषः उकारइति उदित्यस्यासौ उदित् तस्यकार्य्यं तदर्थं ओकारइत्यर्थः तच्चत्वाबोदित इति वक्ष्यते हाते इतीति एतेन तयोरित्वालोपो सूचितःद्विर्वचनादिति

हाते इतिस्थितेद्विर्वचनादिपूर्ववत् ॥ ह्रस्वः ॥ ८ ॥ पूर्वसंबंधिनोदीर्घस्यह्रस्वोभवति ॥ भृञामित् ॥ ९ ॥ डुभृञ्धारणपोषणयोः ओहाङ्गतौ माङ्माने एतेषां पूर्वस्याकारस्येकारादेशोभवतिश्लुकिसति ॥ द्वेस्तौ ॥ १० ॥ लोपोऽनुवर्त्तते इकारश्च । द्विरुक्तस्यधातोराकारस्यलोपोभवतिङितिस्वरेपरेईकारश्चङितिहसेपरेजिहितेजहातेजिहतेजिहीषेजिहाथे जिहिध्वेजिहेजिहीवहेजिहीमहे विधिसंभावनयोः जिहीत जिहीयातांजिहीरन्जिहीथाः जिहीयाथांजिहीध्वंजिहीय जिहीवहि जिहीमहि आशीःप्रेरणयोः जिहीतांजिहातां जिहतां जिहीष्वजिहाथां जिहीध्वं जिहैजिहावहैजिहामहै अनद्यतनेऽतीते अजिहीतअजिहातांअजिहतअजिहीथाः अजिहाथांअजिहीध्वंअजिहिअजिहीवहिअजिहीमहिडुभृञ् धारणपोषणयोः ॥ रः ॥ ११ ॥ पूर्वसंबन्धिनऋकारस्याकारादेशोभवति । बिभर्तिबिभृतःबिभ्रतिबिभर्षिबिभृथः बिभृ-

तत्रह्वादिरित्यप् लुकिद्वित्वे कुहोरितिचुत्वं झपानामिति तस्य जः ॥ ह्रस्वः ॥ ८ ॥ पूर्वस्यहसादिःशेष इत्यतः पूर्वस्येत्यनुवृत्तेराह पूर्वसंबंधिनइति ह्रस्वश्च स्वसामर्थ्याद्दीर्घमेवस्थानिनमाक्षिपतीत्याह दीर्घस्येति ॥ भृञां ॥ ९ ॥ बहुवचनजिघृक्षितान्परिगणयति डुभृञित्यादि अकारस्येकारइति यःसइत्यतो य इत्यनुवृत्तेरिति भावः ॥ द्वेस्तौ ॥ १० ॥ ११ ॥ अपइतिशेषः द्वेः पूर्वेहि ईहसे इतिहसेङिति ईत्वं विहितं स्वरेच नातइत्यालोप इति तादृशावेवलोपेकारौ उभावपि तावित्यनेन परामृश्येते अन्यथाऽनंतरत्वादीकार एवानुवर्तेतेति सर्वमालोच्याह लोपइत्यादि द्विःकिं यातः आतःकिं बिभृतिङितित् जहाति जिहीत इति सर्वप्रक्रियायां जिहाते इतिस्थिते

थबिभर्मिबिभृवःबिभृम: आत्मनेपदे बिभृतेबिभ्राते बिभ्रतेबिभृषेबिभ्राथेबिभृध्वेबिभ्रेबिभृवहेबिभृमहे विधि- संभावनयोः बिभृयातबिभृयातांबिभृयुःइत्यादि बि- भ्रीतबिभ्रीयातांबिभ्रीरन इत्यादि आशीःप्रेरणयोः बिभर्तुबिभृताद्वाबिभृतांबिभ्रतु इत्यादि बिभृतांबिभ्रा- तांबिभ्रतामित्यादि अनद्यतनेऽतीते अबिभः अबिभृतां अबिभरुः ॥ दिस्योर्हसात ॥१२॥ हसादुत्तरयोर्दिपूसिपो- र्लोपोभवति अबिभः अबिभृतं अबिभृत अबिभ- रंअबिभृवअबिभृम अबिभृत अबिभ्रातांअबिभ्रत इ- त्यादि माङ्माने ङकारआत्मनेपदार्थः मिमीतेमिमा- तेमिमते विधिसंभावनयोः मिमीतमिमीयातांमिमी- रन आशीःप्रेरणयोः मिमीतांमिमातांमिमतामित्यादि अनद्यतनेऽतीते अमिमित अमिमातांअमिमत इत्यादि ओहाक्त्यागे परस्मैपदी ओकारककारानुबंधौ जहाति

ह्रस्वइति पूर्वाकारस्यह्रस्वः भृञामिति तस्येत्वे द्वेस्ताविति हसेपरेङितीत्त्वं जिहित इति स्वरपरत्वाद्वेस्तावित्यालोपः द्वेरित्यदादेशः एवमग्रेऽपि हसेङितीत्त्वं स्वरेङि- त्वाल्लोप इतिज्ञेयं जिहे इत्यादि त्रिपुपित्त्वादनालोपाद्येऐऐ अंत्ययोः सवर्णदीर्घः ओहाक् त्यागे त्यागोहानिः ओकारः प्राग्वत्ककारः शास्त्रांतरे ह्वश्रीह्रीहिकाल- भोरित्यत्र हाक् हाङोः सामान्यग्रहणार्थमुपात्त इत्यत्रापि तदनुसारित्वप्रदर्शी- नार्थमुपात्तइतिज्ञेयं जहातीति हाधातोः परतोऽन्यदिति परस्मैपदिनस्ति- बादौ अपिच ह्वादेरिति अप् लुकिद्वित्वे सस्वरआदिरिति हाहातिसति कुहोरितिचुत्वेन पूर्वहस्य झकारे तस्य झपानामिति जे इत्याकारस्य ह्रस्व इत्यर्थः जहीतइति हसेद्वेस्तावितित्त्वं जहतीति स्वरे ङित्यालोपः द्वेरि- त्यतोऽत् इत्यादिनाजहासि जहीथः जहीथ जहामि जहीव जहीम

जहीतः जहति जहासि जहीथः जहीथ जहामि जहीवः जहीमः विधिसंभावनयोः जहातेरालोपोयादावक्तव्यः जह्यात् जह्यातां जह्युरित्यादि आशीःप्रेरणयोः जहातुजहीताद्वाजहीतांजहतु ॥ ईर्वाहौ ॥ १३ ॥ जहातेर्हौपरे ई आ वा भवतः । जहिहि जहाहि जहीहिजहीताद्वाजहीतंजहीतजहानिजहावजहाम अनद्यतनेऽतीते अजहातअजहीतां । उस्यालोपोवक्तव्यः अजहुः अजहाः अजहीतं अजहीत अजहां अजहीव अजहीम डुदाञ् दाने ञकारउभयपदार्थः डुकारोड्वि-

जहातेरिति अयंभावः ओदौतोरितिसूत्रे यःप्रत्ययः स्वरवदितिविवक्ष्यते इतियकारस्यापि क्वचित् स्वरवत्वात् द्वेस्तावित्येवालोप इत्यर्थः जह्यादित्यादि द्वित्वादिप्राग्वत् आलोपः जहात्विति अङित्वान्नेत्वं जहीतादिति तातङोङित्त्वादीकारः एवंजहीतामपि जहत्विति द्वेरित्यालोपो अश्च ॥ ईर्वेति ॥ १२ ॥ १३ ॥ इः वा इतिच्छेदः प्रस्तुतत्वाज्जहातेर्हौ परे इः आच वास्त इति वक्तव्यमित्यर्थः तयोश्चाभावपक्षे द्वेस्तावितीकार इतिरूपत्रयमुदाहरंति जहाहीति आत्वं जहिहीति इत्वं जहीहीति द्वेस्तावितीत्त्वं जहीतात् इत्यादि त्रिष्वपीत्त्वं जहानीति त्रिष्वपिपित्त्वात् सवर्णदीर्घः अजहादिति दिबादावट् पित्वान्नेत्वं अजहीतामितीत्त्वं उस्यालोपः इतिङित्वात् द्वेस्तावित्येवेतिभावः अजहुरिति अनङसित्युस् अपित्तादिरिति तस्यङित्त्वं आदिना अजहा अजहीतं अजहीत अजहां अजहीव अजहीमेति ईर्वाहावित्यत्र इर्वेति योगविभागः कार्यः तत्र ङितिहसइत्यनुवर्तते तेन जहातेर्ङितिहसेइकारोवाभवति तत्रजहितः जहीथः जहिथ जहिवः जहिमः जहितात् जहितां जहितं जहित अजहितां अजहितं अजहित अजहिव अजहिमेत्यपिज्ञेयं डुदाञ्दाने दानंत्यागः अकारइति ततश्चकार्त्र्यायेदितीत्त्वालोप इतिभावः डुकारइति डोकरणं डुकारइति कृञोरूप-

त्कार्यार्थः दाइतिस्थितेपूर्ववद्द्विवचनं ह्रस्वः ददाति ॥ दादेः ॥ १४ ॥ द्विरुक्तस्यदादेराकारस्यलोपोभवति ङिति परे । दत्तः ददतिददासिदत्थः दत्थददामिदद्वः दद्मः विधिसंभावनयोः दद्यातदद्यातांदद्युः दद्याः दद्यातंदद्यात दद्यांदद्यावदद्याम आशीःप्रेरणयोः ददातुदत्ताद्दादत्तांददतु ॥ दांहौ ॥ १५ ॥ दादीनांधातूनांहौपरेपूर्वस्यलोपोभवतिधातोराकारस्यचैकारः । देहि दत्ताद्दादत्तंदत्तददानिददाव ददाम अनद्यतनेऽतीते अददातअदत्तांअददुः अददाः अदत्तंअदत्तअददांअदद्वअदद्म आत्मनेपदेऽपि पूर्ववदकारलोपः दत्ते ददाते ददते दत्से ददाथे दद्ध्वे ददे दद्वहे दद्महे विधिसंभावनयोः ददीत ददीयातां ददीरन् ददीथाः

मिदं नहिवर्णग्रहणमात्रात् वर्णात्कार इति कारः स्यात् द्वित्वकार्य्यार्थं इतितेन दृत्रिममिति त्रिमक्सिद्धयति पूर्ववदिति ह्वादित्वेन जुहोतिवदित्यर्थः ददातीतिदाधातोः तिबादौ अपिच ह्वादेरित्यप्लुकि द्वित्वेचह्रस्वः ॥ दादेरिति ॥ १४ ॥ द्वेर्ङितीति वर्त्तते ह्रसार्थमिदं द्विरुक्तस्य दाञोधाञश्च ह्रस्तादित्यस्यापवादो ङित्यालोपोवाच्य इत्यर्थः दादेरालोप इति वक्तव्यमेवभ्रांतेः सूत्ररीत्यैव तल्लिखितं नतु सूत्रं सूत्रेष्वसत्वात् दत्त इति ददातस्इत्यत्रालोपे खसेचपा इतिखसे सर्वत्र दस्य तः ददतिइति दादेरित्यालोपः दत्तादिति तातङो ङित्वादालोपः ददत्विति ह्वेरित्यत् ॥ दांहाविति ॥ १५ ॥ बहुवचनसामर्थ्याद्दाधा इत्यादयो गृह्यंत इत्याह दादीनामिति पूर्वस्यह्रसादिरित्यतोऽनुवर्तते लोपं एत्वंचलोपः पचामित्यत लोपोऽयं षष्ठीनिर्दिष्टोऽप्यंतस्य न भवति पूर्वावयवस्यानर्थक्यात् नानर्थकेऽलोंत्यविधिरितिन्यायात् ह्वलोपः पचामित्यतो अस्येत्यनुवर्तते अकारश्च तत्रसावर्ण्यात् आकारमपि गृह्णातीत्याह धातोराकारस्येत्वमिति ददाहीत्यत्रानेन पूर्वस्यलोपे आतएत्वं दत्तादिति अत्र

ददीयाथां ददीध्वं ददीय ददीवहि ददीमहि आशीःप्रेरणयोः दत्तां ददातां ददतांदत्स्वददाथांदद्ध्वंददैददावहै ददामहै अनद्यतनेऽतीते अदत्त अददातां अददत अदत्थाः अददाथांअदद्ध्वं अददि अदद्वहि अदद्महि डुधाञ्धारणपोषणयोःवर्त्तमाने ॥ पूर्वस्यङिति झसेधः ॥ १६ ॥ झभांतस्यधातोः पूर्वदकारस्यधकारोभवति ङितिपरे । दधाति धत्तः दधति दधासि धत्थः धत्थ दधामि दध्वःदध्मः विधिसंभावनयोः दध्यात् दध्यातां दध्युः दध्याः दध्यातं दध्यात दध्यां दध्याव दध्याम आशीःप्रेरणयोः दधातु धत्ताद्वा धत्तां दधतु धेहि धत्ताद्वा धत्तं धत्त दधानि दधाव दधाम अनद्यतनेऽतीते अदधात् अधत्तां अदधुः अदधाः अधत्तं अधत्त अदधां अदध्व

स्थानिवत्वे प्येत्वाद्यभावमोर्वाहिरित्यत्र वक्ष्यामः आलोपस्तत्वं ददानीति अङित्वात् त्रिष्वपिदीर्घः अदहुरिति दिवादावटि अनउसि ङित्वादालोपः आत्मनेपदेपीति पूर्वेणतुल्यमत्रापिङित्वादालोपः खसेतत्वंद्वेरित्यत् इत्यादिकार्यमित्यर्थः दत्तेइतिआलोपतत्वे आदिनादत्से ददाथे दध्वे ददे दद्वहे दद्महे ददीथाः ददीयाथां ददीध्वं ददीय ददीवहि ददीमहि दत्स्व ददाथां दध्वं ददै ददावहै ददामहै अदत्थां अददाथां अदध्वं अददि अदद्वहि अदद्महि इति डुधाञ्धारणपोषणयोः धारणं धृतिः पोषणंपुष्टिः डुञ्प्राग्वत् दधातीति धाधातोः प्राग्वत्तिबादौ ह्वादेरित्यश्लुकि द्वित्वेपूर्वस्य ह्रस्वेझपानामिति धस्य देच श्लिष्टोच्चारणमित्यर्थः ॥ पूर्वस्येति ॥ १६ ॥ अकृतत्वाद्दधातेः पूर्वस्यदकारस्य ङितिझसेपरे धकारादेशोवाच्य इत्यर्थः धत्त इतिदधातेत्यत्र दादेरित्यालोपे दस्यधत्वं खसेचपाइति धस्य तत्वं दधतीति दादेरित्यालोपः धत्थइत्यादि सर्वत्रङित्यालोपः झसेङिति पूर्वदस्यधत्वं खसेतत्वं द्वेरित्यंतोऽत् अनडस् शिष्टंस्पष्टं प्राग्वत् धत्थ दधामि

अदध्म आत्मनेपदेऽपि धत्ते दधाते दधते दत्से दधाथे दध्वे दधे दध्वहे दध्महे विधिसंभावनयोःदधीत दधीयातां दधीरन् दधीथाः दधीयाथां दधीध्वं दधीय दधीवहि दधीमहि आशीःप्रेरणयोः धत्तांदधातां दधतां दत्स्व दधाथां दद्ध्वं दधै दधावहै दधामहै अनद्यतनेऽतीते अधत्त अदधातां अदधत अधत्थाः अदधाथां अदध्वं अदधि अदध्वहि अदध्महि ॥ इतिह्वादयः ॥ ३ ॥ इदानींदिवादयः प्रक्रियाःउच्यंते ॥ दिवुक्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु । उकारउदित्कार्यार्थःदिव्इतिस्थिते ॥ दिवादेर्यः ॥१॥ दिवादेर्गणात्तिबादिषु परेषु चतुर्षु यःप्रत्ययोभवति अपोऽपवादःय्वोर्विहसेइ

दध्वः दध्मः धत्ते दधाते दधते दत्से दधाथे दध्वे दधे दध्वहे दध्महे दध्यात् दध्यातां दध्युः दधीत दधीयातां दधीरन् दधातु धत्तात् धत्तां दधतु धेहि धत्तां दधातां दधतां दत्स्व दधाथां दद्ध्वं दधै दधावहै दधामहै अदधात् अधत्तां अदधुः अधत्तः अदधातां अधत्त इत्यादिज्ञेयं ॥ इतिह्वादयः ॥ ३ ॥ दिवुक्रीडाखेला विजिगीषा विजेतुमिच्छा व्यवहारःपणनं द्युतिः दीप्तिः स्तुतिः प्रशंसा कांतिरभिलाषः गतिर्गमनं उकारइति ततश्चकार्यायेदितीत्वाल्लोपे देवित्वा द्यूत्वेति द्वयमपिसिद्धयतीतिभावः पूर्ववदिति परतोऽन्यदिति परस्मैपदमित्यर्थः ॥ दिवादेरिति ॥ १ ॥ दिवादिचतुर्ष्वित्ति यक्सूत्रादनुवर्तमानेषु

---

१ दिव आदिर्यस्य सतस्माद्यःप्रत्ययो भवति कर्त्रर्थेषु चतुर्षु परेषु अत्राऽनुक्तसमुच्चयार्थश्चकारोऽनुवर्तते । तेनभ्राशृभ्लाशृभ्रमुक्रमुक्लमुत्रसित्रुटिलषांयोवाऽनुपसर्गोद्यस:सम्पूर्वाच्चेतिबोध्यं यद्वा भ्राशादयो धातवः दिवादिषुपुषादिभ्योऽन्यत्रपाठ्याः आदर्हाः आदर्हेषु पार्हाः पार्हेषु उभयार्हाः उभयार्हेषु अर्थाश्च तत्तद्गणोक्ता अत्रापि ग्राह्याः । वाभ्राशेतिसूत्रारंभे यथा यसु संयसु इतिचपाठार्थं यसुपाठेन सिद्धे संपूर्वपाठस्तु नियमार्थः संपूर्वादेवयोनउपसर्गांतरपूर्वात् अपूतु भ्वादिपाठाद्भवति येननाप्राप्तिन्यायेनापोऽपवादोऽयं यःचतुर्षु किं दिदेव कर्त्रर्थेषु किं दिव्यते । यद्यपि पेयकि चसमानरूपं तथाप्यर्थेपदेचविशेषः ॥

तिर्दीर्घः दीव्यति दीव्येत दीव्यतु अदीव्यदित्यादि भवतिवज्ज्ञेयं ॥ इतिदिवादयः प्रक्रियाः ॥ ४ ॥ षुञ्अभिषवे । ञकारउभयपदार्थः ॥ स्वादेर्नुः ॥ १ ॥ स्वादेर्गणान्नुप्रत्ययोभवति चतुर्षु तिबादिषु प्रागभिप्रयोगः॥ आदेः ष्णः स्नः ॥ २ ॥ धातोरादौवर्त्तमानयोः षकारणकारयोः

तिव्यातुब्दिवादिष्वित्यर्थः ॥ दिवादेर्यः ॥ १ ॥ परत्वादितिशेषः य्वोर्वीति अनेन दीव्यतीत्यादौ यकारेवकारेदीर्घ इतिभावः दिव्यतीति दिवोये उपधादीर्घे अदेइत्यलोपः दीव्यामीत्यादि वमोरित्यात्वं दीव्येदिति येतित्वे एत्वंभवतिवदिति आर्वतत्वेनादंतत्वसाम्यादितिभावः ततश्च दीव्येयुः युसइडेत्वे दिव्येयं याम इयन्येत्वं दीव्यंत्विति अदेइत्यलोपोदीव्य अत इतिहिलोपो दीव्यानि दीव्याव दीव्याम सवर्णदीर्घः अदीव्यन् दिवादावडदेइत्यलोपः अदिव्यं अलोपः अदीव्याव अदीव्याम वमोरित्यात्वं शिष्टंस्पष्टं ॥ इतिदिवादयः ॥ ४ ॥ षुञ्अभिषवे अभिषवोलवनंसोमादेः अकारइति ततश्चेत्वाल्लोप इत्यर्थः ॥ स्वादेर्नुः ॥ १ ॥ इत्यनेन नुः स्यात् स्वादिचतुर्ष्वितिदिप्पर्यंतेष्वित्यर्थः प्रागिति प्राग्धातोरित्यनेन ॥ आदेः ॥ २ ॥ धातोरिति अधिकारोयं तस्येत्यर्थः आदौवर्तमानयोरितिउपदेशकाले आदिभूतयोरित्यर्थः ष्णइतिद्वंद्वैकत्वे षष्ठ्याःस्थानिनिर्देशइत्याह षकारणकारयोरिति स्न इत्यकार उच्चारणार्थः धातोःकिंः षंडः आदेःकिं कर्ष ष्णोपदेशाश्च पाठतोऽवगंतव्याः लक्षेक्षिताश्च रामचंद्राचार्यैः सेकसृप् स्तृप् सृसृस्तोऽन्ये दंत्याजंतसादयः षोपदेशाःस्मृताःष्वष्क।स्विदस्वज स्वी स्मिङः। णोपदेशास्तु नर्द नाट् नाथृनाधृ नंद ष्वद नृ नृतः। सुष्वापेत्यादौ

१ सुरादिर्यस्य सः स्वादिस्तस्मान्नुप्रत्ययो भवति कर्त्रर्थेषु चतुर्षु सुनोति । चतुर्षु किं सुषुवे कर्त्रर्थेषु किं सूयते सोमोभवता । श्रुश्रवणे स्वादिष्वेवपाठ्यः । इशादेः पश्यादिरिति शृभावतक्षूतनूकरणे अक्षू व्याप्तावेतौ स्वादिष्वपिपाठ्यौभ्वादिषुचतेनतक्ष्णोतितक्षति अक्ष्णोति अक्षतीत्यादि सिद्धम् ॥

सकारनकारौभवतः ॥ प्रादेश्च तथातौसुनमाम् ॥ ३ ॥ प्रादे-रुपसर्गात्परेषां स्वादीनां नमादीनां च धातूनां स-कारनकारयोस्तौ पूर्वभाविनावेव षकारणकारौ भवतः तथातेष्वेव निमित्तेषु सत्सु ॥ नूपः ॥ ४ ॥ विकरणस्य नु-प्रत्ययस्य उपूप्रत्ययस्यच गुणोभवति पितिपरे । अभि-षुणोति अभिषुणुयात् अभिषुणोतु अभ्यषुणोत् सोमं

प्ररस्य कृतत्वेन किलादितिषत्वार्थं सत्वविधिः प्रादेर्नमादीनांलाघवेन णत्वार्थं नत्व-विधिः स्नोरुपदेशे हि गौरवप्रसंगः ॥ प्रादेश्च ॥ ३ ॥ आदिग्रहणे उपसर्गग्रहण-मिति स्वसूत्रे ज्ञापितत्वादाह प्रादेरुपसर्गादिति अतएव सुस्थ इति षत्वं न उपसर्ग-प्रतिरूपकंहि सुइत्यव्ययं नोपसर्गः तथेति प्रकारे तेनप्रकारेण तत्स्थान्यादेशनिमित्त-रूपेण यस्य स्थानिनो यत्र च निमित्ते षकारो णकारश्च प्रागभ्यधायि किलात्षःसः कृतस्य पुर्नोणोनंत इति तस्यैवस्थानिनःसकारस्य नकारस्यच तत्रैव च निमित्ते कवर्गलक्षणे षकाररेफलक्षणेच सति तावुभावप्यादेशौ षणौनत्वनंतरत्वात् षकार-एवेत्याह तौपूर्वेति पूर्वमभूताविति पूर्वभाविनौ उपदेशकालस्थावित्यर्थः प्रायिक-मिदं तेन इनेनस्वामिनासहवर्तत इतिसेना तया सेनया अभिषेणयति प्रणिगदती-त्यादावभूतपूर्वेपि षत्वणत्वौ भवतः अथवापूर्वयोः सूत्रयोः किलात्षःसः कृतस्य षुर्नोणोऽनंत इत्येतयोर्भाविनौ भाववंतौ वर्तमानौ तावुभावपि षणावित्यर्थः च शब्दाद्वा षत्वणत्वेसत्यनेकार्थः सुनमामिति बहुवचनमाद्यर्थमित्याह स्वादीनां नमा-दीनां चेत्यर्थः चशब्दादेव चादिपूर्वरूपव्यवधानादावपि षत्वं निषिषेव नितष्ठौ अवष्टब्धोविदूरे आलंबनेच अवधूषुणातीत्यादि स्वादिषुपाठसामर्थ्याद्वात्र षः अविहि-तलक्षणौ च षणौ सुनमादौ ज्ञेयौ विस्तरभयादिहनोदाहृतौ ॥ नूपः ॥ ॥ ४ ॥ उपाविकरणेन साहचर्य्यात् नुरपिविकरणो गृह्यते न स्तुत्यर्थो णुधातुः कटादिः नोस्तु गुणः इत्येवसिद्धत्वादग्रहणमितिमत्वाह विकर-णस्य नुप्रत्ययस्येति अभिषुणोतीति अभिपूर्वात्षुञ् आदेः ष्णः स्न इतिसत्वे

सोमपा सुनोति सुनुतः सुन्वंति सुनोषि सुनुथः सुनुथ सुनोमि ॥ ओर्वमोर्वालोपः ॥ ५ ॥ प्रत्ययसंबंधिनउकारस्य वमोः परयोः वा लोपो भवति सुनुवः सुन्वः सुनुमः सुन्मः विधिसंभावनयोः सुनुयात् सुनुयातां सुनुयुः सुनुयाः सुनुयातं सुनुयात सुनुयां सुनुयाव सुनुयाम आशीःप्रेरणयोः सुनोतु सुनुताद्वा सुनुतां सुन्वंतु ॥ ओर्वाहेः ॥ ६ ॥ प्रत्यय-

आग्वत्तिवादौ स्वादेरिति नुप्रत्यये तस्यापित्तादिरितिङित्वात् क्ङितीति सोर्गुण इतिनोर्गुणे प्रादेश्चेति सोःषत्वेतद्योगादवकुप्विति नोर्णत्वे एवंस्यादित्यर्थः सोममिति-कर्मत्वाद्द्वितीया सुनतसोर्ङित्वात् रूप इति न गुणः सुन्वंतीति नुधातोरिति अनेकस्वरत्वादसंयोगपूर्वत्वाच्च वत्वं सुनोषीति गुणेकिलादितिषत्वं सुनोमीतिगुणेनाबाधितत्वादोर्लोपो न ओर्वमोओर्वाहेरित्यतोऽनुवृत्ताद्वाग्रहाणादप्रत्ययस्थस्य जुहुवः युवइत्यादेः संयोगपूर्वस्यच तक्ष्णुव इत्यादिष्वतो न लोप इतिमत्वाह प्रत्ययसंबंधिन इति सुन्व सुनुवइति वालोपः सुनुयादिति ङित्वात् सर्वत्र न गुणः सुनोत्विति-नूप इति गुणः सुनुतादिति तातङो ङित्वान्नगुणः सुनुतादित्येवं सुनुतां सुन्वंत्वित्यपि नुधातोरिति अंतोवत्वं नुर्वा वाग्रहणादिति सहिनिपातत्वादनेकार्थः संयोगादुत्तरस्येति संयोगमनतीति संयोगादुकारः तस्मादुत्तरसंयोगादुत्तरपरस्येत्यर्थः न भवतीति हेर्लोपः इतिशेषः तथा अप्रत्ययोकारातपरस्यापि युहिरुहीत्यादौ हेर्न लोपः हेश्चकार्यं हेरेवभवति न स्थानिवत्वेनापि तातङ इत्यपि वाग्रहणादेव लभ्यते अतएवच सुनुतात् अत्तात् जुहुयात् जहीतादंत्तात् गृहीतादित्यादौ तद्वदेव कार्यं-तातङो न सुनवानीति पित्वादत्र गुणः असुनोदिति दिबादावटिगुणः असुन्वन्निति नुधातोरितिवः असुनोरितिः स्रोर्विसर्गः असुनवमितिगुणावौ असुन्व असुनुवेति ॥ ओर्वमोः ॥ ५ ॥ ६ ॥ इति वालोपः सुन्वते इति आतोऽत इत्यत्वं एवंसुन्वतां

संबंधिनः उकारादुत्तरस्यहेर्लुग्भवति वाग्रहणात्संयोगादुत्तरस्य त्वक्षू तक्षू तनूकरणे इत्यस्य तक्षुहि इत्यत्र न भवति सुनु सुनुताद्वा सुनुतं सुनुत सुनवानि सुनवाव सुनवाम अनद्यतनेऽतीते असुनोत् असुनुतां असुन्वन् असुनोः असुनुतं असुनुत असुनवं असुनुव असुनुम आत्मनेपदेऽपि वर्त्तमाने सुनुते सुन्वाते सुन्वते सुनुसे सुन्वाथे सुनुध्वे सुन्वे सुन्वहे सुनुवहे सुन्महे सुनुमहे विधिसंभावनयोः सुन्वीत सुन्वीयातां सुन्वीरन् सुन्वीथाः सुन्वीयाथां सुन्वीध्वं सुन्वीय सुन्वीवहि सुन्वीमहि आशीः प्रेरणयोः सुनुतां सुन्वातां सुन्वतां सुनुष्व सुन्वाथां सनुध्वं सुनवै सुनवावहै सुनवामहै अनद्यतनेऽतीते असुनुत असुन्वातां असुन्वत असुनुथाः असुन्वाथां असुनुध्वं असुन्वि असुन्वहि असुनुवहि असुन्महि असुनुमहि ॥ इतिस्वादयः प्रक्रियाः ॥५॥ रुधिर् आवरणे । इरनुबंधः । इरितोवाइति विशेषणार्थः रुध्इतिस्थिते ॥ रुधादेर्नम् ॥ १ ॥ रुधादेर्ग-

असुन्वतेत्यपि सुनवै इत्यादित्रिष्वपि पित्वाद्गुणावौ ओर्वमोर्वालोपः शेषंसुगमम् ॥ इति स्वादयः ॥ ५ ॥ रुधिर् आवरणे आवरणमाच्छादनं इरनुबंध कार्यमित्यनेन इरितोवेति अनेनेरित्वादरुधदरौत्सीदिति पाक्षिको ङसिद्ध्यतीति भावः स्वरितेत्त्वादयमुभयपदी ॥ रुधादेर्नम् ॥ १ ॥ रुधादेर्नम् प्रत्ययो

१ रुध् आदिर्यस्य सरुधादिस्तस्मान्नम् प्रत्ययो भवति कर्तरिचतुर्षु रुणद्धि चतुर्षु किं रुरोध । कर्तरि किं रुध्यते । ननु रुदादेरिति भाव्यमन्तर्वर्तिविभक्त्याश्रयणेनपदत्वात्सामिदाधानमितिवदितिचेत्सत्यं । स्पष्टार्थं पदकार्याऽकरणं अन्यथारुदिःआदिर्वा रुधिः आदिर्वासंदेहः स्यात् । ननुव्याख्यानतोविशेषप्रतिपत्तिरितिन्यायात् । रुधिरादिर्ग्रहीष्यतइतिचेत् एवं-तर्हि क्वचिदवांतरपदकार्यमितिज्ञापितं क्षीरस्यपानं क्षीरपाणं सुरापाणं शरवणमित्यादावेकपदवदुपयुक्तं णत्वं भवति समासे क्वचिदैकपद्यं णत्वहेतुरिति त्वस्मादेव लब्धम् ॥

णान्नम् प्रत्ययो भवति चतुर्षु तिबादिषु परेषु मकारस्थानमित्यर्थः ॥ तथोर्द्धः ॥ २ ॥ झभांतस्यधातोः परयोस्तकारथकारयोर्धकारादेशोभवति । झबेजबाः णत्वंच वर्त्तमाने रुणद्धि ॥ नमसोस्य ॥ ३ ॥ नम इत्येतस्य विकरणस्य अस्भुवीति धातोश्चाकारस्य लोपोभवति ङितिपरे । रुंद्धः रुंधंति रुणत्सि रुंद्धः रुंद्ध रुणध्मि रुंध्वः रुंध्मः विधिसंभावनयोः रुंध्यात् रुंध्यातां रुंध्युः रुंध्याः रुंध्यातं रुंध्यात रुंध्यां रुंध्याव रुंध्याम आशीःप्रेरणयोः रुणद्धु रुंद्धाद्धा रुंद्धां रुंधंतु रुंद्धि रुंद्धाद्धा रुंद्धं रुंद्ध रुणधानि रुणधाव रुणधाम ॥ दिस्योर्हसात् ॥ ४ ॥ हसादुत्तरयोः दिप्सिपोर्लोपो भवति । अरुणत अरुणद् अरुं-

भवतीति आगमत्वेप्यर्थवत्त्वादवादिवत् प्रत्ययोऽयं भिन्नदेशोऽपि एकार्थत्वाद्बाधक इत्याह अपोऽपवाद इति मकार इति सति हि तस्मिन् मित्वादयमंत्यस्वरात्परो भवतीति भावः ॥ तथोः ॥ २ ॥ झभांतस्येति आदिजबानामित्यतोऽनुवर्तते दधातेरालोपे धत्त इत्यादिषुतु वावसान इत्यतो निपात वानुवृत्तेर्न धत्वं तथयोरकारउच्चारणार्थः झबेजबाइति अनेन रुधो धस्य सावर्ण्याद्दत्वं णत्वमिति नमोऽवकुप्विति शेषः रुणद्धीति प्रक्रियात्वनंतरोक्ता ज्ञेया ॥ नमसो ॥ ३ ॥ ननु-किमयं नमिति नत्यर्थोधातुर्गृह्यते विकर्णो वा युक्तं तत्रास्तिधातुसाहचर्याद्धातुग्रहणं सत्यं अस्तेस्त्वनपित्वादेशेन प्रयोगाभावादत्विषयोविभक्तिचतुष्टयमस्य सूत्रस्य निमित्तमनुमीयते नच तत्र ङित्यनंतरो नमतिः संभवति अपाव्यवधानात् नसंतीत्यादावप्यलोपस्य तद्भावात्तदवस्थमेव व्यवधानं नापि येननाव्यवधानमितिन्यायस्यायंविषयः वचनस्य विकरणग्रहणेनापि चीरतार्थत्वात् नचात्रापि धात्वक्षरेण व्यवाय इत्याशंक्य विधिकाल एवमस्येत्संज्ञातः आगलोपात्पश्चाच्च मित्वेनान्त्यस्वरा-

द्धां अरुंधन् मध्यमपुरुषैकवचनेसिपिलुते धकारस्य विकल्पेनतकारेदकारेचकृते ॥ दःसः ॥ ५ ॥ दकारस्य सकारोभवति सिपिविषये । अरुणः अरुणत् अरुणद् अरुंद्धं अरुंद्ध अरुणधं अरुंध्व अरुंध्म आत्मनेपदेऽपि रुंद्धे रुंधाते रुंधते रुंत्से रुंधाथे रुंध्वे रुंद्धे रुंध्वहे रुंध्महे विधिसंभावनयोः रुंधीत रुंधीयातां रुंधीरन् रुंधीथाः रुंधीयाथां रुंधीध्वं रुंधीय रुंधीवहि रुंधीमहि आशीःप्रेरणयोः रुंद्धां रुंधातां रुंधतां रुंत्स्व रुंधाथां रुंध्वं रुणधै रुणधावहै रुणधामहै अनद्यतनेऽतीते अरुंद्ध अरुंधातां अरुंधत अरुंद्धाः अरुंधाथां अरुंद्धं अरुंधि अरुंध्वहि अरुंध्महि ॥ इतिरुधा-

त्परत्वं सूत्रेप्येवं नमस इतिमकारनिर्देश उपपद्यते अन्यथा नासइत्येववाच्यं स्यात् किंच प्रत्ययाप्रत्यययोः प्रत्ययस्यैवग्रहणं युक्तमित्यंतमेवपक्षमाश्रित्याह नमित्येतस्य विकरणस्येति ङितिपरइति ङित्यदुरित्यतोनुवर्तमान इत्यर्थः अस्यग्रहणंनमसोऽत्यलोपनिवृत्त्यर्थं रुंद्ध इति रुधेस्तसादौङितिसर्वत्र नस्यानेनालोपे मित्वादंत्यस्वरात्परे अलोपस्थानविधानादस्थानिवद्भावेन नश्चेत्यनुस्वारे यमायपइति धस्य सवर्णे नकारेकृते तस्यच बहिरंगत्वेनासिद्धत्वादंतरंगत्वाभावे तसोधत्वे झबेजबा इतिदत्वे सस्यविसर्गे रुंद्धः रुंधतीत्यादीनि रूपाणिस्युरित्यर्थः रुणत्सीत्यादि पित्तोऽत्र सर्वत्राङित्वादलोपाभावाण्णत्वे खसेधस्यतत्वं झसाद्धिर्हेरिति अनेनरुंद्धीत्यत्रहेर्द्धित्वमितिशेषः रुंद्धादिति अत्तादितिवद्द्धित्वाभावः दिस्योः पदांतत्वादत्र संयोगांतलोपे नैवसिद्धेसंयोगान्तलोपविधेरनित्यत्वज्ञापनार्थमिदं तेन उर्गित्यादौ न संयोगांतलोपः दिपासहचरितस्य सेर्ग्रहणादरौत्सीदित्यादौ भूतेसेर्नलोप इत्याह दिप्सिबित्येतयोरिति अरुणदिति देरत्रलोपः ॥ दिस्योः ॥ ४ ॥ ५ ॥ अत्रसिपिचेतिसूत्रमनुवर्तत इत्याह सिपिविषयइति अनेनसिपीति विषयसप्तमीदर्शिता अरुण

दयः ॥ ६ ॥ तनुविस्तारे । उकारउच्चारणार्थः ॥ तनादेः नुप्[1] ॥ १ ॥ तनादेर्गणादुप्प्रत्ययोभवति पकारः पित्कार्यार्थः नूपः वर्तमाने तनोति तनुतः तन्वंति तनोषि तनुथः तनुथ तनोमि तन्वः तनुवःतन्मः तनुमः विधिसंभावनयोः तनुयात् तनुयातां तनुयुरित्यादि आशीःप्रेरणयोः तनोतु तनुताद्वा तनुतां तन्वंतु तनु तनुताद्वा तनुतं तनुत तनवानि तनवाव तनवाम अनद्यतनेऽतीते अतनोत् अतनुतां अतन्वन् अतनोः अतनुतं अतनुत अतनवं अतनुव अतन्व अतनुम अतन्म आत्मनेपदे तनुते तन्वाते तन्वते इत्यादि तन्वीत तन्वीयातां तन्वीरन् इत्यादि आशीःप्रेरणयोः तनुतां अतनुत डु-

इति सेरत्रदिस्योरिति लोपे वावसानइति जातस्य दस्यानेन सत्वे विसर्गः पक्षेदकारतकारावित्याह अरुणादित्यादि रुद्धे इत्यादिसुगमं आतोऽतइत्यतोऽत् ॥ इति रुधादयः ॥ ६ ॥ तनादेः ॥ १ ॥ अपोऽपवादःपकारइति सतिहिपकारे अपित्तादेरिति पर्युदासादन्यत्वात्करोतीत्यादावपि क्ङितीतिगुणनिषेधो न भवतीतिभावः तनोतीति तन्धातोः प्राग्वत्तिबादावपि नूपइत्योकारः तनुयादिति ङित्वात् गुणाभावःतनोत्विति पित्वाद्गुणः अतनोदिति अद्गुणावित्यादिः सुनोतिनातुल्यप्रक्रियाणि पदद्वयरूपाणिज्ञेयानीत्यर्थः डुकृञ्करणे करणंकृतिःडुञौप्राग्वत् ञित्वादुभयपदी ऋकारस्येति उपः पित्वाद्गुणइत्यनेन पुनरिति तिपः पित्वात्

---

१ तन्आदिर्यस्य स तस्मादुप्प्रत्ययो भवति कर्तरि चतुर्षु । तनोति । चतुर्षु किं ततान ॥ कर्तरि किम् तन्यते । नन्वेवं नलोपशिश्वादेरितिवत्तादेरित्यपिभाव्यामितिचेन्न स्पष्टार्थं नलोपाङ्करणात् अन्यथातादेरित्युक्ते तनादेर्वातकारादेर्वा सन्देहःस्यादथ व्याख्यानतोविशेषप्रतिपत्तिरितिन्यायात्संदेहाभाव इतिचेत्तर्हि क्वचिन्नलोपाभावोज्ञाप्यते सन् आदिर्येषांते सनादयः वृषं वर्षकं वसु यस्य सः वृषण्वसुः वृषाश्वो यस्य स वृषणाश्व इत्यादौ नलोपो न ।

कृञ्करणे पूर्ववदनुबंधलोपादिःतनादेरुप् ऋकारस्य गुणोऽर् पुनर्नृपइतिगुणः करोति ॥ ङित्यदुः ॥ २ ॥ करोतेरकारस्यउकारोभवति ङितिविभक्तौ परतः । कुरुतः कुर्वंति करोषि कुरुथः कुरुथ करोमि कृञोनित्यं वमोरुलोपो वक्तव्यः कुर्वः कुर्मः ॥ कृञो ये ॥ ३ ॥ कृञउत्तरस्य उकारस्य लोपो भवति यकारे परे । विधिसंभावनयोः कुर्यात कुर्यातां कुर्युः कुर्याःकुर्यात कुर्यात कुर्यां कुर्याव कुर्याम आशीःप्रेरणयोःकरोतु कुरुताद्वा कुरुतां कुर्वंतु कुरु कुरुताद्वा कुरुतं कुरुत करवाणि करवाव करवाम अनद्यतनेऽतीते अकरोत् अकुरुतां अकुर्वन् अकरोः अकुरुतं अकुरुत अकरवं अकुरुव अकुरुम

करोतीति कृधातोः प्राग्वत्तिवादावुपि अरि उकारः ॥ ङित्यदुः ॥ २ ॥ इहकृञोयेइत्यतःकृञ् इत्यनुवर्तते अदितिच लुप्तपष्ठीयं इत्याह करोतेरकारस्येति विधिसामर्थ्याद्व्यवहितस्यापीत्यर्थः तपरकरणमुकारस्योपधागुणाभावार्थमसंदेहार्थंचङितिकिं करोति कुरुत इतिसर्वत्रङिति उपनिमित्तगुणाकारस्योत्वं कुर्वंतीति उपः सर्वत्रङितिस्वरे उवमितिवत्वस्य वहिरंगस्यांतरंगं दीर्घे प्रत्यसिद्धत्वाद्धसपरत्वात् य्वोर्वीति न दीर्घः अनुस्वारस्यच यमायपइति परसवर्णेकृतेतस्यणत्वाभावस्तत्रैवोक्तः गुणद्वयेपत्वं कृञोनित्यमिति वक्तव्यो व्याख्येयः तस्येदंव्याख्यानं ॥ कृञोये इतिसूत्रे कृञइतियोगविभागः कर्तव्यः तत्रच ओर्वमोर्लोपः इत्यनुवर्तते न विकल्पः योगविभागसामर्थ्यात्तस्यकृञउत्तर उकारस्य वमोः परयोर्नित्यंलोप इत्यर्थः तदिदमुच्यते कृञोनित्यं वमोरुलोपोवक्तव्य इति कुर्व इति लोपस्तस्यासिद्धत्वान्नदीर्घः अथवा कुर्य्यादित्यादावपि च दीर्घाप्रसंगो दीर्घसूत्रे एवोक्तः ॥ कृञो ॥ ३ ॥ इह ओर्वमोरित्यत ओर्लोपश्चेत्यनुवर्तत इत्याह ओकारस्यलोप इति कुर्यादिति उपिगुणे अदुत्वेचोलोपः करोत्विति पितिसर्वत्रगणद्वयं कुरुतादिति ङितिसर्वत्रोऽपि पूर्व-

आत्मनेपदे कुरुते कुर्वाते कुर्वते कुरुषे कुर्वाथे कुरुध्वे कुर्वे कुर्व्वहे कुर्म्महे । विधिसंभावनयोः—कुर्वीत कुर्व्वीयातां कुर्व्वीरन् इत्यादि आशीःप्रेरणयोः कुरुतां कुर्व्वातां कुर्व्वतां अनद्यतनेऽतीते अकुरुत अकुर्वातां अकुर्व्वत इत्यादि ॥ इतितनादिगणप्रक्रिया ॥ ७ ॥ तुद व्यथने ॥ तुदादेरः ॥ १ ॥ तुदादेर्गणादप्रत्ययोभवति चतुर्षु परेषु । वर्त्तमाने तुदति तुदेत तुदतु अतुदत इत्यादि भवतिवज्ज्ञेयम् ॥ इतितुदादिगणप्रक्रिया ॥ ८ ॥ डुक्रीञ्द्रव्यविनिमये । पूर्ववदनुबंधलोपादि ॥ नाक्र्यादेः ॥ १ ॥

स्य गुणे अदुत्वे ङित्वादुषो न गुणः कुर्मेति ओर्वाहेरितिहिलोपः करवाणीत्यत्र अकुर्वे अकुर्मेति नित्यमुलोपः कुर्वतइति आतोऽतइत्यत्वं करवै इत्यादावत्र अकुर्वहीति वमोनित्यमुलोपः शिष्टंस्पष्टम् ॥ इतितनादयः ॥ ७ ॥ तुदव्यथने । व्यथनं पीडा स्वरितेत्त्वादुभयपदी ॥ तुदा ॥ १ ॥ अपोऽपवादः । तुदतीति तुदधातोः प्राग्वत्तिबादौ अप्रत्यये तस्यापित्त्वादिरिति ङित्वान्नोपधागुणः तुदेदिति येतीत्वे एत्वं भवतिवदिति परस्मैपदे आत्मनेपदे त्वेधतिवदित्यर्थः॥ इतितुदादयः॥८॥डुक्रीञ्द्रव्यविनिमये। द्रव्यस्यविनिमयः परिवर्तः डुञौप्राग्वत् ञित्वादुभयपदी ॥ नाक्र्यादेः ॥ १ ॥

---

१ रियातिधियतीत्यत्र अप्रत्यये सति गुणः कुतो न । ननु धातोरुपधायागुणो विधीयतेऽत्रतु इकारो न धातोरुपधेति चेत् उपधाया इत्यवयवषष्ठीत्वात् उपधाभूतस्य च धात्ववयवत्वात् गुणप्राप्तेः सत्वात् उच्यते अंत्याद्वर्णात्पूर्वस्योपधात्वेनांतस्यापि धात्ववयवस्यैव ग्रहणात् । अप्रत्ययस्यच्चाधात्ववयवत्वान्नदोषः यद्वा अंतरंगबहिरंगयोरंतरंगं बलवदिति परिभाषाश्रयणात् इय् तु अप्रत्ययमात्रापेक्षत्वादंतरंगः गुणस्त्वप्रत्ययमाख्यातं चापेक्षमाणोबहिरंगः एवमशुश्रुवदुद्रुवदित्यादावपिबोध्यः ।

२ प्रत्ययस्यादावुच्चारणं योगविभागार्थम् । नाइतियोगो विभज्यते स्वादेर्नुरित्यतो नुरित्यनुवर्तते धातोर्ना प्रत्ययो भवति नुश्चकर्तरिचतुर्षु । अत्रच स्तंभुस्तुंभुस्कंभुस्कुंभुस्कुञ् एते एवधातवो गृह्यंते लक्ष्यानुसारात् स्तभ्नाति स्तभ्नोतीत्यादि । एतेसौत्राश्चत्वारः । यद्यप्येते क्र्यादिषु पठ्येरंस्तदापि नुविधानार्थं योगविभागः कर्तव्यःक्र्यादेर्नेति पठितत्वात्तत्रनुरनुवर्तने नुः सर्वेभ्यः क्र्यादिभ्यः स्यात् ।

क्र्यादेर्गणान्नाप्रत्ययोभवति चतुर्षुपरेषु । क्रीणाति ॥ ईहसे ॥ २ ॥ नाइत्येतस्याकारस्य ईत्वंभवति हसेङिति परे । क्रीणीतः ॥ नातः ॥ ३ ॥ नाइत्येतस्याकारस्यलोपोभवति ङितिस्वरेपरे । क्रीणंति क्रीणासि क्रीणीथः क्रीणीथ क्रीणामि क्रीणीवः क्रीणीमः विधिसंभावनयोः-क्रीणीयात क्रीणीयातां क्रीणीयुः क्रीणीयाः क्रीणीयातं क्रीणीयात क्रीणीयां क्रीणीयाव क्रीणीयाम। आशीःप्रेरणयोः-क्रीणातु क्रीणीताद्वा क्रीणीतां क्रीणंतु क्रीणीहि क्रीणीताद्वा क्रीणीतं क्रीणीत क्रीणानि क्रीणाव क्रीणाम । अनद्यतनेऽतीते-अक्रीणात् अक्रीणीताम् अक्रीणन् अक्रीणाः अक्रीणीतम् अक्रीणीत अक्रीणाम् अक्रीणीव: अक्रीणीमः आत्मनेपदे क्रीणीते क्रीणाते क्रीणते क्रीणीषे क्रीणाथे क्रीणीध्वे क्रीणे क्रीणीवहे क्रीणीमहे। विधिसंभावनयोः-क्रीणीत क्रीणीयातां क्रीणीर-

चतुर्ष्विति तिप्यातुब्दिप्ष्वित्यर्थः अपोपवादः क्रीणातीति क्रीधातोः प्राग्वत्तिबादिषु नाप्रत्यये तस्यङित्वान्न गुणः णत्वम् ॥ ईहसे ॥ २ ॥ नात इत्यनुवर्तते इत्याह नाइत्यस्याकारस्येति ङितीति ङित्यद्वुरित्यनुवृत्तेः क्रीणीतइति हसेत्र ञितीत्वं एवं सर्वत्र हसे किं स्वरेमाभूत् क्रीणंति नच लोपोऽत्र बाधकइति वाच्यं सत्यत्र हसग्रहणे लोपस्य स्वरोनिमित्तं स्यात् अन्यथासांकर्यमुभयोः स्यात् ॥ नातः ॥ ३ ॥ ना आत इतिच्छेदः तत्रनेति लुप्तषष्ठीको निर्देशः इत्याह नाइत्यस्याकारस्येति षष्ठीनिर्दिष्टस्येत्याकारलोपे सिद्धे आतइत्युत्तरार्थं द्वेस्तावित्याकारस्य लोपो यथास्यात् अन्यस्य माभूत् बिभ्रतीतिहसे इत्वविधानात् स्वरोऽत्र निमित्तमित्याह ङितिस्वर इति क्रीणंतीति स्वरेऽत्र ङित्यालोपः एवमग्रेपि क्रीणानि इतिपित्वात्रिष्वपि सवर्णदीर्घः क्रीणत इत्यलोपे

न्नित्यादि आशीःप्रेरणयोः क्रीणीतां क्रीणातां क्रीणतां क्रीणीष्व इत्यादि अनद्यतनेऽतीते अक्रीणीत अक्रीणाताम् अक्रीणत अक्रीणीथाः इत्यादि ग्रहउपादाने ॥ ग्रहांक्ङितिच ॥ ४ ॥ ग्रहि ज्या वेञ् व्येञ् ह्वेञ् व्यध्वस् व्यच् प्रच्छ भ्रस्ज व्रश्चादीनां किति ङितिचपरे संप्रसारणंभवति रेफस्य ऋकारः वकारस्योकारः यकारस्येकारः वर्त्तमाने गृह्णाति गृह्णीतः गृह्णंति गृह्णासि गृह्णीथः गृह्णीथ गृह्णामि गृह्णीवः गृह्णीमः । विधिसंभावनयोः–गृह्णीयात् गृह्णीयाताम् गृह्णीयुः गृह्णीयाः गृह्णीयातं गृह्णीयात गृह्णीयाम् गृह्णीयाव गृह्णीयाम । आशीःप्रेरणयोः–गृह्णातु गृह्णीताद्वा गृह्णीतां गृह्णंतु ॥ हसादा-

आतोऽतइत्यत् एवंक्रीणतामक्रीणतेत्यत्रापि क्रीणैइत्यादौत्ववादेः पित्वादैत्वदीर्घौ ग्रहउपादाने उपादानं ग्रहणं स्वरितेत्त्वाद्विपदि ॥ ग्रहां ॥ ४ ॥ बहुवचनमन्येषामपिव्यवस्थितानां ग्रहणार्थमित्याह ग्रहितेत्यादि ग्रहउपादाने ज्या वयोहानौ व्यध् ताडने वश् कांतौ व्यच्व्याजीकरणे प्रच्छ ज्ञीप्सायां भ्रस्जो पाके ओव्रश्चूछेदने एषामित्यर्थः अत्रयजां यवरणामित्यतः संप्रसारणं कितीत्यनुवर्तत इत्याह किति-ङितिचपरे संप्रसारणमिति येषां यकारवकाररेफाणां सस्वराणामिकारो-कारऋकाराभवंति संप्रसारणार्थं इतिमत्वाह रेफस्येति ग्रहेत्यत्र वर्तमानस्येत्यर्थः चकारोयमधिकविधानार्थः सन्निविहितलक्षणंसर्वमपि संप्रसारणं साधयति विव्याधइति व्याधेत्यादौ पूर्वस्यप्रतिषेधति निपातानामनेकार्थत्वात् यजादौ ग्रहादौच यवराणां मध्ये पूर्वेषांसंप्रसारणनिषेधार्थत्वात् गृह्णातीति ग्रहधातोः प्राग्वत्तिबादिषु क्र्यादित्वान्नाप्रत्यये तस्यापित्तादिरितिङित्वात् ग्रहामिति रेफस्य संप्रसारणे पकारेलघूपधगुणाभावेच कुप्विति णत्वे चैवं स्यादित्यर्थः गृह्णीतइति ईहस इतीत्वं गृह्णंतीति नातइत्यालोपः एवंपदद्वयेऽपि ङितोर्हसस्वरयोरित्वालोपौ

न्नित्यादि आशीःप्रेरणयोः क्रीणीतां क्रीणातां क्रीणतां क्रीणीष्व इत्यादि अनद्यतनेऽतीते अक्रीणीत अक्रीणाताम् अक्रीणत अक्रीणीथाः इत्यादि ग्रहउपादाने ॥ ग्रहांक्ङितिच ॥ ४ ॥ ग्रहि ज्या वेञ् व्येञ् ह्वेञ् व्यध् वश् व्यच् प्रच्छ भ्रस्ज व्रश्चादीनां किति ङिति च परे संप्रसारणंभवति रेफस्य ऋकारः वकारस्योकारः यकारस्येकारः वर्त्तमाने गृह्णाति गृह्णीतः गृह्णंति गृह्णासि गृह्णीथः गृह्णीथ गृह्णामि गृह्णीवः गृह्णीमः । विधिसंभावनयोः–गृह्णीयात् गृह्णीयाताम् गृह्णीयुः गृह्णीयाः गृह्णीयातं गृह्णीयात गृह्णीयाम् गृह्णीयाव गृह्णीयाम । आशीःप्रेरणयोः–गृह्णातु गृह्णीताद्वा गृह्णीतां गृह्णंतु ॥ हसादा-

आतोऽतइत्यत् एवंक्रीणतामक्रीणतेत्यत्रापि क्रीणैइत्यादौत्ववादेः पित्वादैत्वदीर्घौ ग्रहउपादाने उपादानं ग्रहणं स्वरितेत्त्वाद्विपदि ॥ ग्रहां ॥ ४ ॥ बहुवचनमन्येषामपिव्यवस्थितानां ग्रहणार्थमित्याह ग्रहितेत्यादि ग्रहउपादाने ज्या वयोहानौ व्यध् ताडने वश् कांतौ व्यच्व्याजीकरणे प्रच्छ ज्ञीप्सायां भ्रस्जो पाके ओव्रश्चूछेदने एषामित्यर्थः अत्रयजां यवरणामित्यतः संप्रसारणं कितीत्यनुवर्तत इत्याह कितिङितिचपरे संप्रसारणमिति येषां यकारवकाररेफाणां सस्वराणामिकारोकारऋकाराभवंति संप्रसारणार्थं इतिमत्वाह रेफस्येति ग्रहेत्यत्र वर्तमानस्येत्यर्थः चकारोयमधिकविधानार्थः सन्निविहितलक्षणंसर्वमपि संप्रसारणं साधयति विव्याधइति व्याधेत्यादौ पूर्वस्यप्रतिषेधति निपातानामनेकार्थत्वात् यजादौ ग्रहादौच यवराणां मध्ये पूर्वेषांसंप्रसारणनिषेधार्थत्वात् गृह्णातीति ग्रहधातोः प्राग्वत्तिबादिषु क्र्यादित्वान्नाप्रत्यये तस्यापित्तादिरितिङित्वात् ग्रहामिति रेफस्य संप्रसारणे पकारेलघूपधगुणाभावेच कुप्वेति णत्वे चैवं स्यादित्यर्थः गृह्णीतइति ईहस इतीत्वं गृह्णंतीति नातइत्यालोपः एवंपदद्वयेऽपि ङितोर्हसस्वरयोरित्वालोपौ

अपुष्णाः अपुष्णीतं अपुष्णीत अपुष्णां अपुष्णीव अपुष्णीम मुषस्तेयेमुष्णाति मुष्णीतःमुष्णंति विधिसंभावनयोः मुष्णीयात मुष्णीयातां मुष्णीयुः आशीःप्रेरणयोः मुष्णातु मुष्णीताद्वा मुष्णीतां मुष्णंतु मुषाण इत्यादि अनद्यतनेऽतीते अमुष्णात् अमुष्णीतां अमुष्णन् इत्यादि॥ सर्वत्रकर्तरिप्रक्रियाद्रष्टव्याः ॥ एतच्च विभक्तिचतुष्टयं सार्वधातुकसंज्ञकं परमार्धधातुसंज्ञकं पाणिनीयानां॥अथभावकर्मणोर्यक्प्रक्रिया॥ आद्भुविकर्मणि॥१॥ अकर्मकेभ्योधातुभ्यो भुविभावेसकर्मकेभ्यश्च कर्मण्यात्मनेपदंभवति येकर्मनिरपेक्षांक्रियामाहुस्तेऽकर्मकाः ॥ लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्था धातवएतेकर्मविहीनाः ॥ १ ॥ सत्ताशुद्धिसमृद्धिवृद्धिशयनस्थानासनेभासने । लज्जाजीवनरोदनेचहदनेनृत्येश्र-

श्रमहासंज्ञामंतरेण प्रवृत्तेः स्वशास्त्रस्य लाघवप्रतिपादनार्थं चोक्तं अथेति कर्तृप्रकरणानंतरं यक्विषयभूते उक्तविभक्तिचतुष्टये भावकर्मणोः प्रक्रिया निरूप्यते इत्यर्थः अत्र यक्ग्रहणं वक्ष्यमाणभावकर्मप्रकरणात्तस्य भेदं सूचयितुं कृतं तेन पृथक्करणांतरशंकानिरस्ता ॥ आद्भुवि ॥ १ ॥ कर्तरिपंचेति कर्तरिनियतमात्मनेपदं भावकर्मणोर्नप्राप्नोतीतिविध्यर्थमिदमारभ्यते तत्रधातवो द्विविधाः अकर्मकाः सकर्मकाश्च तत्र ये कर्तृगतमेव व्यापारमाचक्षते तेऽकर्मका आस्ते शेते तिष्ठत्यादयः येपुनः कर्तृकर्मोभयगतं व्यापारमाचक्षते ते सकर्मकाःपच्यादयः। तदुक्तं। विक्लेदाद्योदनादिस्थंकर्तृस्थं श्रपणादिकम्। द्वयोः सकर्मकाआहुर्व्यापारं कर्तृगंपरे । इति तदेवद्विविधेभ्योधातुभ्योऽर्थद्वयेप्यात्मनेपदं भवति अकर्मकेभ्यः कर्मणि न भवति असंभवात्तत्प्रयोगे कर्मणः तथासकर्मकेभ्योऽपि भावेपच्यते यवागुर्देवदत्तेनेत्यादौ

१ अथ भुविकर्मण्यात्वि वक्तुं विधेयस्य पश्चान्निर्देशःस्यादितिचेत् उच्यते आदिति योगविभागेनाऽन्यस्मादपि धातोराद्विधीयते तेन जिज्ञासते शुश्रूषते मुमूर्षतेदिदृक्षतइत्यादि सिद्धं ज्ञाश्रुस्मृदृशामित्यादि न भवति अथ भूकर्मणीत्येववक्तव्यं किंपृथङ्निर्देशेनउच्यते कर्तरीतियोगो विभज्यते भुवीति तु तृतीयया विपरिणम्यते कर्मणीत्यनेनकर्मस्था गृह्यते तुल्ये इति त्वध्याह्रियते कर्मस्थया भुवा क्रियया तुल्यक्रिये कर्तर्य्याद्भवति काष्ठंभिनत्तीत्यत्र काष्ठस्य या क्रिया विदारणाश्रयत्वरूपासैवकाष्ठं भिद्यते स्वयमेवेत्यत्र तस्मिन्कर्तृभूतेपि भवति यक्चतुर्ष्वित्यत्र यागिति प्रश्लोच्चारणाद्यगिति योगो विभजनीयः तत्र कर्मणि कर्तरीत्यनुवर्त्यकर्मकर्तरियगपि विधेयः लक्ष्यानुसाराद्योगविभागादिष्टसिद्धिरिति सिद्धांताच्चतुर्ष्वेवसः ॥

लापेक्कुधि ॥ संतुष्टौरुचिशोकदोषमरणस्पर्द्धाविहारेषुच । ज्ञेयोधातुरकर्मकोभयमदोन्मादप्रमादेषुच ॥ २ ॥ भूएध् आस्शीङ्प्रभृतयः ॥ यक्चतुर्षु ॥ २ ॥ धातोर्भावेकर्मणिच यक् प्रत्ययोभवति चतुर्षुपूर्वोक्तेषुपरतः ककारो गुणप्रतिषेधार्थः भावस्यैकत्वादेकवचमेवभवति ॥

न भवति अकर्मकेभ्यः कर्मणीत्यसंबंधात् कर्मणीत्यस्य वैयर्थ्यापत्तेस्तेनाकर्मकेभ्यो भावेसकर्मकेभ्यः कर्मणीत्येव क्रमोग्राह्य इत्यभिप्रेत्याह अकर्मकेभ्य इत्यादि ॥ १ ॥ ॥ २ ॥ भुवि भावइति एतेन सूत्रेऽत्र भवनं भूःभुवीतिनिर्देशः संपदादिषुभावे क्विप्विधौ लिंगंदर्शितं येत्विति येसदसद्वा कर्मनापेक्षते तेनैतदप्युक्तंभवति । धातोरर्थांतरेवृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोकर्मिकाक्रिया इति । तत्रार्थांतरवृत्त्या यथाभारंवहतीत्युच्यमाने सकर्मकस्य वहेर्नदी वहतीति श्रवणेऽकर्मकत्वं तथाकर्मणो धात्वर्थेनोपसंग्रहाज्जीवतीति अत्रप्राणिविशिष्टधारणार्थस्य जीवेः प्राणिनांकर्मभूतानां धातुनैवोपात्तत्वादकर्मकत्वं तथाप्रसिद्धेर्देवोवर्षतीति कर्मणोजलस्य नियतप्रतीतेर्न तेनसकर्मकत्वं वृषेः तथा कर्मणोविवक्षायां नेहपच्यत इति पचतेरकर्मकत्वं एवंसत्कर्मानपेक्षां असत्कर्मानपेक्षां चयेक्रियामाहुस्ते उभयेप्यकर्मका इत्यर्थः तत्रांत्यानाह भूएधेति ॥ यक् ॥ २ ॥ अत्रधातोरिति सूत्रमनुवर्त्ततइति आहधातोरिति यद्यप्यविशेषेण यग्विधीयते तथापि कर्त्तरिपरैश्शबादिभिर्बाधितत्वात् भावकर्मणोरेव भवतीत्याह भावेकर्मणिचेति भावेधात्वर्थे क्रियात्मके कर्मणिकार्ये कारकविशेषे यक्प्रत्यय इति ततश्च प्रत्ययप्रकरणात्कित्त्वेपि नागम इतिभावः ननुचात्र चतुर्ष्विति किमविशेषादनंतराणि ताध्वे ताहे तास्वहे तास्महे इतिचत्वारि वचनानि गृह्यंते अनंतरावादिब्णब्यात्तादयश्च तथाविभक्तयो गृह्यंते आद्याःतिप्यातुब्दिवादयः नाद्यः विभक्तिप्रकरणात् संकोचे कारणाभावात् न द्वितीयः अवादावीपितित्स्मीति ज्ञापकात् यथाहि अपूकर्त्तरीत्यादावप्यतएवचतुर्ष्वित्यनुवृत्तेर्दिवादिचतुष्के अपःसत्वादनब्विषयस्य वचोप्रसंगात् ब्रूनो

भूयते भवता एध्यते धार्मिकैः आसउपवेशने आस्यते सद्भिः सज्जनपुरुषैः शीङोऽयङ् यक्किवक्तव्यः शय्यते शूद्रेण अकर्मकोपि कदाचित्सकर्मतामनुभवति ॥ उपसर्गेण धात्वर्थो बलादन्यत्रनीयते ॥ प्रहाराहारसंहारविहारपरिहारवत् ॥ ३ ॥ सुखमनुभूयतेस्वामिना ये

गवादित्रयेऽपि तकारसकारमकारादेरभावात् दिवादौ कथमपि दिस्योस्ततसादित्वेपि नाप् पितोभावात् मकारोपादानमनर्थकंस्यात् नचयेननाव्यवधानं तेनव्यवहितेऽपि वचनप्रामाण्यादित्यकारव्यवधाने सत्यपि अमपिस्यादितिवाच्यं तथाच सति दिवादावडित्येव सिद्धे लाघवमप्येवं स्यादिति ज्ञापकार्थमेव मकारग्रहणमिति तृतीयपक्षमेवाश्रयति चतुर्षु पूर्वोक्तेष्विति ककारइति तेन यकः कित्वात् क्ङित्यद्व्युसीत्यस्योपस्थानाद्भूयत इत्यादौ गुण इतिगुणो न भवति ननुचासत्यपि ककारे अपित्तादिरिति ङित्वाद्गुणो नस्यात् एवंतर्हि इज्यत इत्यादौ यजांयवराणामिति संप्रसारणार्थः ककारोगुणाभावार्थोपिस्यादित्यभिप्रेत्योक्तं गुणप्रतिषेधार्थइति भावस्यैकत्वादिति तस्यत्वाख्यातवाच्यस्य साध्यरूपत्वेन निवृत्तभेदत्वात् संख्याद्ययोगात् द्व्यादिप्रतियोगिकैकत्वसंख्याभावेप्यभेदैकत्वात् औत्सर्गिकमेकवचनमेवस्यादित्यर्थः यदाह भाष्यकारः-एकवचनमुत्सर्गतः करिष्यत इति अतएवच तस्यैव त इत्यादिभिर्वाच्यत्वात् युष्मदस्मदोरसामानाधिकरण्येन मध्यमोत्तमयोरप्यभाव इत्याह प्रथमपुरुषस्येति भूयतइति भूसत्तायाम् आद्भुवीति भावे ते यकि तस्य कित्वान्नगुणः कर्तुराख्यातेनाभिधानाद्भवतेति तृतीया एवं भूयेत भूयतां अभूयत भवता त्वया मया वेत्यपि एधत इतितद्वदेधवृद्धावित्यतस्तेयकौ धार्मिकैरिति कर्तरितृतीया धर्मंचरद्भिरित्यर्थः एवमेध्येत एध्यतां ऐध्यत आसिति उपवेशनमासनं अयमदादिरनुदात्तत्वादात्मनेपदीच आस्यते इति प्राग्वत्तेयकौ एवमास्येताऽऽस्यतामास्यतेति सर्वत्राकर्मकेषु प्रथमपुरुषैकवचनं ज्ञेयं शय्यतइति शीङोत्रयक् शीङइतिवक्तव्यो व्याख्येयः-

तुकर्मसापेक्षा क्रियमाणा तुल्ये सकर्मकाः कटः क्रियते ॥ त्वं दुःखीक्रियसे रागैः विरागैः सुख्यहं क्रिये ॥ अयकि ॥ ३ ॥ ऋकारस्यरिङादेशो भवति अकारे प्रत्यये यकि परे ङ-

तथाहि नूपूशीङ्इत्येकयोगेपि शीङ्ग्रहणस्य ङिदर्थत्वेसिद्धेपि शीङ इति पृथग्योग-करणमन्यत्रापि यथाप्रयोगं शीङोगुणं ज्ञापयति इतिगुणे क्वचित्स्वरवदिति यकारस्य स्वरवत्वादयादेशः एवंयङि शाशय्यते शय्या इत्याद्यपि ज्ञेयं शूद्रेणेति कर्तरितृतीया एवंशय्येत शय्यतां अशय्यतेतिज्ञेयं अकर्मकोपीति कदाचिद्यदार्थांतरे वर्तते तदेत्यर्थः यथाभवतिः प्राप्त्यर्थः भवते लक्ष्मींप्राप्नोतीत्यर्थः अर्थांतरप्रवृत्तिस्तु कस्यचिदुपसर्गव-शादपि भवतीत्याह उपसर्गेणेति तदुक्तं ॥ धात्वर्थं बाधते कश्चित्कश्चित्तमनुवर्त्तते । तमेवविशिनष्ट्यन्योऽनर्थकोन्यः प्रयुज्यतइति । तथोदाहरति हरणार्थोपिहरतिः तत्रो-पसर्गवशात् प्रहरणार्थः एवमाहरणार्थः संहरणार्थः विहरणार्थः परिहरणार्थश्च सुख-मिति अनुपूर्वोत्रभवतिर्ज्ञानार्थः इति अकर्मकत्वात्कर्मण्यात्मनेपदम् आख्यातेनोक्तत्वा-न्मुख्येकर्मणि अन्योक्तइति प्रथमाकर्तुरनुक्तत्वात् स्वामिनेति तृतीयैव प्रक्रियातु प्राग्वदेव एवंकर्मणो द्वित्वादौ द्विवचनादिषु एधेते इत्यादिवत् सासाप्रक्रियाज्ञेया त्वंमित्यादुःखसाधनं रागः सुखसाधनं विरागः तत्रानुक्ते कर्त्तरि तृतीयात्वमहमिति युष्मदस्मदोः कर्मणोराख्यातवाच्यत्वात् प्रथमा नाम्निचेति मध्यमोत्तमौ एवंद्विवचन-बहुवचनयोरपि युवांक्रियेथे यूयंक्रियध्वे आवांक्रियावहे वयंक्रियामहे इतिज्ञेयं प्रथमेतु भवान् क्रियते भवंतौ क्रियेतां भवंतः क्रियंते इतिस्यात् तथाक्रियेत क्रियतां अक्रियते-त्यादीनिरूपाणि प्रक्रिया चात्रोत्तरत्रापि यगंते सकर्मकेषु सर्वत्राकर्म्मकेषु एकवचने एधवदेवज्ञेया विस्तरभयादिहनोच्यते ॥ अयकि ॥ ३ ॥ अत्र यक्चायक् अत्रऋतो रिङित्यनुवर्तते इत्याह ऋकारस्येति इहतिबादिचतुष्कनिमित्तेन यकारसाहचर्यात्तिबा-दिचतुष्टयनिमित्तोऽकारप्रत्ययोगृह्यत इति बिभृत्यत्र भृञोणबादिमध्यमबहुवचनाकारे न भवति अर्थवद्ग्रहणाच्च बिभ्रतीत्यत्रांतरावयवत्वादनर्थकेप्यकारे ननुनिर्दिष्टत्वा-

कारोव्यवधानार्थः । मृङ्प्राणत्यागे म्रियते । दृगतौ दान-मादि्रयते । हृञ्हरणे चौरेणह्रियतेधनं ॥ ये ॥ ४ ॥ यकारेपरे पूर्वस्यदीर्घोभवति क्ङितिपरे । इष्टकाश्चीयंते चिञ्चयने हूयतेऽन्नंवह्नौ ॥ दादेरिः ॥ ५ ॥ दादेराकारस्येकारादेशो

ङकारस्यैव रिङिसिद्धे किमर्थं ङकारग्रहणमित्याशंक्याह ङकारइति व्यवधानमंतरं तदर्थइत्यर्थः तेनाक्रियतइत्यत्र यक्रियइति यकारेपूर्वस्याव्यवहितस्य विधीयमानो दीर्घो न भवति ननुचैवं यङि चेक्रीयते मातरमात्मन इच्छतीति मात्रीयति पितेवाचरतीति पित्रीयति इत्यादावपि ऋतोरिङिति ङ्येदीर्घत्वं न प्राप्नोति सत्यं ऋतोरिङित्यनेन हि से दीर्घ इत्यतो दीर्घानुवृत्तेर्ऋतोरिङादेशो रिङश्चदीर्घोपि विधीयत इत्यदोषः इहतु योगांतरारंभात् सेदीर्घो नानुवर्तते येदीर्घस्तु ङकारव्यवधानान्नभवतीति सर्वसुस्थम् अंतादेशार्थेहि ङकारे चेक्रियत इत्यादौ येदीर्घे चेक्रीयते इत्यादौदीर्घाभावार्थं संज्ञापूर्वकोविधिरनित्यः इत्येवाश्रयणीयं स्यात् स्थानिनिर्देशाच्च वैयर्थ्यापत्तेश्च ङकारस्य केचित्तु अयकीतिसूत्रममन्यमाना इदमेव प्रमाणयंति मृङ्प्राणत्यागे प्राणत्यागो मरणं ङकारः कर्तरि आत्मनेपदार्थः अनिडयं म्रियत इति अकर्मकत्वाद्भावे तेयकौ रिङः ङकारव्यवधानाद्ये इति न दीर्घः मृङा तुल्योयम् आद्रियत इतिसकर्मकत्वात् कर्मणितेयकौ हृञ्हरणे हरणमपनयनं ञित्त्वादयमुभयपदी अनिट्च ह्रियतइति सकर्मकत्वात्कर्मणिप्रत्ययः ॥ ये ॥ ४ ॥ इहकस्मान्नभवति जुहुयात् इयादिति अविषयत्वात् अनयीतिहिचानुवर्तते अथवा यदयं नाम्नो य ईचास्येति यकारेदीर्घमिकारं शास्ति तज्ज्ञापयति न सर्वस्मिन् यकारेदीर्घ इति संज्ञापूर्वकस्य विधेरनित्यत्वाद्वा चीयंत इति यइति दीर्घः चिञ्चयने चयनं रचनाविशेषः अयमुभयपदी सकर्मकोऽनिट्च हूयतेइति जुहोतेः प्राग्वत् ॥ दा ॥ ५ ॥ ननु किमत्र दकार आदिरस्य दा धातुरादिरस्येति वा नाद्यः धात्वधिकारात् दादेर्घ इत्यत्र तु दानुवृत्तेर्ग्रहणं क्ङितिपरइति अपित्तादिर्ङित् णादिः किदित्युभयस्याप्यनुवृत्तेरितिभावः अत्रक्तोवेत्यतो व्यवस्थितार्थवानुवृत्तेरादनुदात्तेत्यर्थतोऽर्थात् सप्तम्यंतात्मनेपदसंबंधाद्वा

भवति क्ङितिपरे । वेदविदे अदो दीयते ॥ दीयेत दीयतां अदीयत इत्यादि निधीयते धान्यंभूमौ डुधाञ्धारणपोषणयोः माङ्माने मीयते मीयेते मीयंते मीयेत मीयतां अमीयत इत्यादि कैगैरैशब्दे ॥ संध्यक्षराणामा ॥ ६ ॥ संध्यक्षराणां धातूनामात्वंभवति अनपिविषये कीयते

आदंतामतः मायादित्यत्राप्रसंगः वेदविदइति दाञोप्रेरणेस्थामीदादेरिति षष्ठ्या इत्यंतादेशे यइति दीर्घः अदइत्युक्ते कर्मणिप्रथमा वेदविदइति संप्रदानेङे एवंनिधीयतामिति धाञः दादेरिः इत्यादिशब्दस्य व्यवस्थार्थत्वाद् दाप् लवने दैप्शोधने इत्येतयोरत्राग्रहणादीयते इत्येवंरूपं साध्यं इहधातोरित्यधिक्रियतइति गोभ्यां नौभ्यामितिनात्वं अम्शसोरात्वविधेरधातुव्यावृत्तादपि विशेष्यार्थमधिकृतेन धातुना विशेषणैः संध्यक्षरस्तदंतविधौसति संध्यक्षरांतानां धातूनामात्वविधेढौंक्ङ इत्यादौ मध्येवा संध्यक्षराणामात्वं न भवति आतोऽनपीत्यतोऽनपीत्यनुवृत्तेश्च प्रसज्यप्रतिषेधान्नयुक्तम् अनैमित्तिकमेतदात्वं प्रत्ययपरत्वमपि नापेक्षत इति ककारोपि न व्यवधायकः अतएवच सुग्ल इत्यादौ प्रागेवप्रत्ययोत्पत्तेर्भवदात्वं प्रकृतेराकारांतत्वादातो ड इति डप्रत्ययं जनयति चेतास्तोताइत्यादौ चिञ्स्तुतोः ताप्रत्ययेगुणेच संध्यक्षरस्य लाक्षणिकत्वाल्लक्षणप्रतिपदोक्तपरिभाषयानात्वं अनपीति विषयसप्तम्या अपिविषये आत्वनिषेधात् स्तनंधयादावुत्पत्तेःप्रागपिनात्वं आत्वाद्वा नित्यत्वेन प्रागेवाभवति अथवा ग्लायतीत्यादावप्येवमात्वप्रसंगाभावादनपीति निषेधो निर्विषयः सन् सर्वत्रापिविषये आत्वंनिवारयति ॥ संध्यक्षराणामा ॥ ६ ॥ संध्यक्षराणांवा धातूनामिति संध्यक्षरांतानामित्यर्थः कायतइति कैगैरैशब्दार्थाः तत्रत्रयाणामप्यात्वे सकर्मकत्वात्कर्मणितेयकौ गै इत्यस्य तुदादित्वाद्दादेरिति दीर्घः शोतनूकरणं निशातनं शायतइति आत्वं षोऽतकर्म्मणि अंतकर्मनाशः सीयतइति आदेःष्णः स्नः इतिसत्वे दादेरितिदीर्घः हीयतइति ओहाको दादित्वादित्वं हीयतइति हाङोङित्वाभावान्नेत्वं पीयतइति पिबते-

गीयते रीयते शीतनूकरणे । शीयते षींतकर्मणि सीयते ॥ ओहाक्त्यागे हीयते । पापाने पीयते । ष्ठागतिनिवृत्तौ । आदेःष्णः स्नः इतिषकारस्यसकारः निमित्ताभावेनैमित्तिकस्याप्यभावः इतिठकारस्य थकारः स्थीयते ॥ तनोतेर्नोवा ॥ ७ ॥ तनोतेर्नकारस्य वा अकारादेशोभवति यकिपरे । तायते तायेते तायंते तन्यते तन्येते तन्यंते इत्यादि तायेत तायेयातां तायेरन् तन्येत तन्येयातां तन्येरन् इत्यादि तायतां तायेतां तायंतां तन्यतां तन्येतां तन्यंतां अतायत अतायेतां अतायंत अतन्यत अतन्येतां अतन्यंत इत्यादि ऋगतौ ॥ गुणोर्तिसंयोगाद्योः ॥ ८ ॥ अर्तिसंयोगाद्योर्गुणोभवति किति ङिति

ईदित्वादित्वं ष्ठागतिनिवृत्तौगतिनिवृत्तिरवस्थानं स्थीयत इति षस्यात्र सकारे निमित्ताभावान्नैमित्तिकस्याप्यभावः स्थीयत उक्तं । नकारजावनुस्वारपंचमौ झलिधातुषु । सकारजः शकारश्चेर्षाट्टवर्गस्तवर्गजः इति । पंचमा ञमङणना । झलिहसेत्यर्थः चेचकारे षाद्रेफषकाराभ्याम् अकर्मकत्वाद्भावे तेयकौ इत्वंदीर्घः ॥ तनोतेः ॥ ७ ॥ तनोतेर्नकारस्याकारोवा वाच्यइत्यर्थः वाशब्दस्य व्यवस्थितविभाषार्थत्वाद्यकोन्यत्र न भवति तायतइति आत्वपक्षे तन्यतइति तदभावे तनोतइतिषष्ठ्यैवतस्यात्वे सिद्धे नावेति नकारग्रहणं नावेतियोगविभागेन तनोतेरन्यस्यापि जनसनखनां नकारस्य वाशब्दात् झसेक्ङिति सप्रत्यये किपिच नियमेन येविकल्पेनात्वविध्यर्थंजातः सातः खातः सिसासति अब्जः गोषा इंद्रोनृषाः असृक्पखाः विजावा अग्रेजावा आवेत्यपि विभजनीयं दधीक्रा अग्रेजा इत्याद्यर्थं जायते जन्यते जाजायते जंजन्यते इति भवति एवंसन्खनोरपि गुणे नोक्तमनित्यमितिक्ङित्यद्व्युसीति निषेधो न भवतीति भावः ॥ गुणोर्ति ॥ ८ ॥ अर्यते स्मर्यते इति ऋगतौ स्मृस्मृतौ आभ्यांयकिगुणोऽरित्कर्मेति हहि केचित्तत्र कर्मव्यापारोपसर्जनं कर्तृव्यापारमाचक्षते यथापच्याद्यो

च परे ऋकारस्य गुणोऽर् अर्य्यते स्मृञ्स्मरणे स्मर्यते यत्कर्म गुणसंयोगात्कर्तृत्वेन विवक्ष्यते स कर्मकर्ता तत्रापि एतदेवोदाहरणं पच्यते ओदनः स्वयमेव । भिदिर् विदारणे भिद्यतेकाष्ठं स्वयमेव भिद्येत भिद्यतां अभिद्यत इत्यादि लूञ्छेदने लूयते केदारः स्वयमेव

विक्लित्त्युपसर्जनं विक्लेदनंतत्र वक्तुर्विवक्षितधूर्विकाशब्दार्थप्रवृत्तिरिति यदाकर्मण सौकर्य्यातिशयप्रतिपादनार्थं कर्तृव्यापारो न विवक्ष्यते तदानिवृत्तप्रेषणं कर्मस्व क्रियावयवेस्थितं वर्तमाने कर्मत्वे स्वकर्तृत्वेऽवतिष्ठत इति कर्मणएवक्रियायां स्वातं त्र्येण कर्तृत्वाद्धातोरपि तदानीमनेकार्थत्वात् कर्मव्यापारमात्रवचनोभवतीति पच्यादिष्वोदनानां कर्तृत्वमेव न कर्मत्वगंधोपीत्यकर्मत्वात्सकर्मकस्यापि धातोः कर्तरिभावे वा प्रत्ययप्राप्तौ अन्यतरत्र यगाद्यप्रसंगे वक्तव्यमिदमारभ्यते यत्कर्मेति गुणस्य सौकर्यादेर्योगात् प्रतिपादनसंबंधाद्यत्कर्मकर्तृत्वेन विवक्ष्यते स कर्ताकर्मवद्भवति कर्मसंज्ञांलभत इत्यर्थः नचैतया कर्मसंज्ञया सकर्मकत्वाद्भिद्यते काष्ठेनभेत्तव्यं काष्ठेन काष्ठस्यवेति भावेप्रत्ययो नस्यादित्याशंक्य प्रत्ययाधिकारात् प्रत्ययस्यैवकर्तुः कर्मत्वविधानात् इहतुभावोवाच्यः अतएव काष्ठात् कर्मणि द्वितीयापि न भवतीति भिद्यतेकाष्ठं पच्यते ओदन इत्यत्रतु सत्यपि कर्मत्वे तस्याख्याताभिहितत्वादन्योक्तप्रथमैव काष्ठादिभ्यः स्यात् तथाधात्वधिकारोदे । धातोरित्यस्मिन्नेकत्वस्य विवक्षितत्वादेकस्मिन्नेव धातौ कर्तृत्वेन विवक्षितस्य कर्मत्वमिति पचत्योदनंदेवदत्त राध्यत्योदनः स्वयमेवेत्यत्र न भवति धातुभेदात्तत्रापीति कर्मत्वेन प्रक्रिया भेदाभावात् इति भावः पच्यतइति अकर्मकत्वात् प्राग्वत्तेयकौ ओदन इत्यत्राख्यातोक्तत्वादन्योक्तइति प्रथमा स्वयमिति तूदाहरणान्तरमपि कर्त्रितरव्युदसार्थं प्रत्युक्तं द्विकर्मकस्येति तेचधातवः ॥ दुह्याच्यर्थरुधिप्रच्छिचिब्रुशासिजि कर्मयुक् । नीञ्हृकृषमथवहदंडिग्रहमुषपचकर्मभागिति ॥ रामचंद्राचार्य्योक्ताज्ञेयाः नागरमिति नगरं निवासो येषां ते नागरिकाः केनेयेकाः इकः आदि

लूयेत लूयतां अलूयत ॥ क्रियमाणंतु यत्कर्म स्वयमेव हि सिद्ध्यति ॥ सुकरैः स्वगुणैर्यस्मात्कर्मकर्त्तेति तद्विदुः ॥ १ ॥ अथद्विकर्मकस्योदाहरणम् ॥ णीञ्प्रापणे नगरंनीयते नागरिकैः वनेचरः नीयेत नीयेतां अनीयत इत्यादि टुयाचृ याच्ञायां टुकारऋकारानुबन्धौ कार्यार्थौ भोजनं याच्यते यजमानो याचकेन प्रच्छज्ञीप्सायां ग्रहांक्ङितिचेति संप्रसारणं पृच्छते पंथानं पथिकेन पांथःशिष्येणाचार्यस्तत्त्वं पृच्छते इत्यादि ॥ दुह्याच्यर्थरुधिप्रच्छिचिब्रूशासिद्विकर्मयुग् । नीह्वहकृषिमंथिदंडिग्रहमुष्पचिद्विकर्मकाः ॥ १ ॥ इतिभावकर्मणो यक्प्रक्रियाः ॥ अथःपुनः कर्त्तरि

द्विर्वनेचरतीति चरेष्टाविति टः अलुक् क्वचिदितिङेरलुक् वनेचरे मुख्येत्र कर्मणि तेयकौ अन्योक्तत्वात् प्रथमा अथवा नगरेपि कस्मान्नभवति एकत्रैवविधेश्चरितार्थत्वात् कर्मणि त्वेकत्वस्य विवक्षितत्वात् एवमपि कदाचिन्नगरे प्राप्नोति न कर्तुः तेन प्रागसंबंधात् येनहि प्राक् कर्ता संबध्यते तत्रांतरंगत्वात् प्रायेणप्रत्ययः अतएवदुह्यते गौः पयोदेवदत्तेनेति गवि तथोक्तं गुणकर्मणि लादिविधिः पूर्वगुणकर्मणोर्भवति प्रयोगात् मुख्यंकर्मप्रेप्सु यस्माद्गव्येव यतते प्राक् तस्माच्छुद्धस्य दुहेर्भवति गवापूर्वमेव संबंधः गौर्दुहितापयसस्तु प्राक् तस्माल्लादयस्तस्मिन्निति एतदेवाभिप्रेत्योक्त अप्रधाने दुहादीनां प्रधानेवहनीह्व्यां । लादि कर्मणिचान्येषां नियमोनैव विद्यते । भोजनमिति इहापि याजकस्यपूर्वं यजमानेनैव संबंधात्तत्रप्रत्ययः प्रच्छ ज्ञीप्सायां ज्ञीप्सा जिज्ञासा पृच्छतइति पथा गच्छतीति पथिकः केनेयका इतीकः अणित्वाद्वृद्धिः पंथानंनित्यंगच्छतीति पांथः णितोवेति णः सहादित्वात् पांथादेशेवृद्धिः अत्रापि पथिकस्य पांथेन कर्मणा पूर्वं संबंधात् तत्र प्रत्यये

प्रणीयते ॥ परोक्षे ॥ १ ॥ णप् अतुस् उस् थप् अथुस् अ णप् व म ए आते इरे से आथे ध्वे ए वहे महे धातोः परोक्षे अतीतेकाले णबादयः प्रत्यया भवंति णकारो वृद्ध्यर्थःपकारः पित्कार्यार्थः ॥ द्विश्च ॥ २ ॥ णबादिसंयोगेधातोर्द्विर्वचनंभवति ॥ आभ्वोर्णादौ ॥ ३ ॥ पूर्वस्याकारस्य भूशब्दस्य चाकारो भवति णादौसति ह्रस्वः झपानांजबचपाः इतिबकारः ॥ भुवोवुक् ॥ ४ ॥ भुवोवुगागमोभवति णबादौपरे । बभूव बभूवतुः बभूवुः

यकिच ग्रहांचेति रेफस्य ऋकारः एवंशिष्येणेत्यापि पुनःकर्तरीति पूर्वकर्तरि तिबादयोदर्शिता इदानीं णबादयोपि कर्तरिप्रदर्श्यंत इत्यर्थः ॥ परोक्षे णबतुसुस् ॥ १ ॥ अत्रपरमक्ष्ण इतींद्रियमात्रवचनेनाक्षिशब्देन तत्पुरुषे क्वचिदमाद्यंतस्येति परप्रयुक्तादक्षिशब्दाट्टाडकाइति डेटिलोपे सहादित्वात् परस्भावेच जातस्य परोक्षशब्दस्यातींद्रियार्थे वृत्तौ सुप्तो किलविललापेत्यादौ प्रत्यक्षेऽपि कर्तरिवैचित्त्यात् परोक्षेणव्वमाः ज्ञेयाएवंच वैचित्त्यापह्नवयोरित्यत्रवैचित्त्यग्रहणं विस्पष्टार्थं क्षणप्रवाहस्य धात्वर्थस्य एकत्रक्षणेऽसंभवादिंद्रियाग्राह्यत्वेन पारोक्ष्येपि साधनशक्त्याश्रयरूपे फूत्कारसीत्कारादिविशिष्टे द्रव्ये प्रत्यक्षे धात्वर्थे एवलौकिकानां प्रत्यक्षाभिमान इति तन्निवृत्त्यर्थं परोक्षग्रहणं अत्रानद्यतनेऽतीतइत्यनुवर्तत इत्याह धातोरित्यादि अतीतानद्यतनपरोक्षवृत्तेर्धातोरित्यर्थः द्विइदंच प्रत्यासत्तेरनुवृत्तेर्वा णबादियोग एवभवतीत्याह ॥ द्विश्च ॥ २ ॥ णबादीति द्विर्वचनं द्विः प्रयोगो भवतीत्यर्थः एतच्च सस्वरआदिरिति सूत्रेप्रतिपादितं ॥ आभ्वोः ॥ ३ ॥ उसंतनिर्देशादिह न भूमात्रं गृह्यते अकारस्य चाप्यकारे प्रयोजनाभावादाकारस्य ह्रस्वविधिनैवसिद्धेरनारंभादकारस्याकारो विधीयत इत्याहपूर्वस्याकारस्येति बोभवीत्यत्र तु यङ्लुडंतस्य छांदसत्वान्नात्वं ॥ भुवो ॥ ४ ॥ अत्रक्वादेर्णादेरितिषष्ठ्यर्थात् सप्तमी स्यादित्याह णबादौ सतीति बभूवेति भूसत्तायामित्यपि भ्वादिरितिधातुसंज्ञायां धातोरितिसर्वत्र तिबादिप्रसंगेच वक्तुर्विवक्षितपूर्विकाशब्दार्थप्रवृत्तिरिति भूतानद्यतपरोक्षविवक्षायां णबादौ नवपं कर्तरिपंचेति परतोऽन्यदिति

॥ क्रादेर्णादेः ॥ ५ ॥ कृसृभृवृद्रुश्रुस्तु इत्येतस्मात्परस्य णबादेर्गणस्य वसादेरिण्नभवति अन्यस्माद्भवतीति नियमादिडागमः बभूविथ बभूवथुः बभूव बभूविव बभूविम बलिर्बलवान् बभूव डुपचष्पाके ॥ अत उपधायाः ॥ ॥ ६ ॥ धातोरुपधायाअकारस्य वृद्धिर्भवति ञिति णितिचपरतः । पपाच ॥ णादिःकित् ॥ ७ ॥ णादिरपित्किद्भवति ॥ लोपः पचांकित्येचास्य ॥ ८ ॥ पचादीनां

च कर्तरिपरस्मैपदे नाम्निचेति प्रथमाद्येकत्वादौ यथायथं णबादयः तत्र भू ण इतिस्थिते णस्येत्वाल्लोपे द्विश्चेतिद्वित्वे आभ्वोरिति आत्वेझपानामिति वर्ग्यो वर्ग्येणेति भस्य वे भुवो वुगिति कित्वादंत्ये वुकि धातोर्नामिनइति न वृद्धिः ॥ क्रादेः ॥ ॥ ५ ॥ अत्रानेकस्वरादित्यतोनिषेधोऽनुवर्ततेरुदादेरित्यतो वसादेरितिच तत्रक्रादीनां नैकस्वरादित्येव निषेधे सिद्धेनियमार्थोयमारंभ इतिमत्वाह अन्यस्मादित्यादि कृञो ऽत्र प्रथमनिर्देशः केवलस्य ग्रहार्थं इति ससुट्कस्य संचस्करिथेतीड्सिद्धोभवति बभूविथेति इटि वुक् ॥ अतः ॥ ६ ॥ धातोर्नामिनः इत्यतोधातोरित्यनुवर्तते आदिस्वरस्येत्यतोवृद्धिःञ्णितीतिचेत्यत आह धातोरित्यादि पपाचेति पचेर्णपिद्वित्वेवृद्धिराकारः धातोःकिं साम्नोपत्यं सामनः नोवेतिवाग्रहणाट्टिलोपाभावः अत किं भेदयति उपधायाः किं चकाशयति । णादिः ॥ ७ ॥ अपिदिति अपित्तादिरित्यतोनुवृत्तेः ङित्वे प्रकृते कित्वातिदेशः ईजतुः ॥ ईजुरित्यादौ संप्रसारणार्थः तद्विधौच ङितीत्युच्यमाने वक्तःस्वपितः इत्यादावपि संप्रसारणं प्राप्नोति जजागरतुरित्यादौ च सत्यपि कित्वेनोक्तमनित्यमिति गुणः एवं सस्मरतुः संचस्करतुरित्यादावपिज्ञेयं अथवा कित्वाभावोऽत्रैव कानविधौवक्ष्यते अपित्किं चकार इयाज ॥ लोपः ॥ ८ ॥ पचामिति बहुवचनं गणसंग्रहार्थमित्याह पचादीनामिति तत्रपचादयो येषां पूर्वरूपेणादिनिमित्तआदेशाःसंतिते असंयुक्तहसयोर्मध्यस्थाकारवंतः शसदद्वकारादिगुणभूताकारव्यतिरिक्ताः तृफलभजत्रपः हिंसार्थो राधः विकल्पे जॄ भ्रमु त्रस फणराज

अनादेशादीनांकितिणादौसति पूर्वस्यलोपोभवति अकारस्यैकारः । पेचतुः पेचुः ॥ वेट्थपः ॥ ९ ॥ क्रादिव्यतिरिक्तानामनिटांधातूनां थपइड् वाभवति सेटःकित्वं वा वक्तव्यं कित्वादेत्वपूर्वलोपौ अन्यत्कार्यं न भवति । तथोक्तं । अर्त्तिव्येदस्थपः स्यादिडथसृजदृशोर्वोपदेशे त्वतश्च नित्यानिट्तु स्वराश्च कृत्रुरहिताद्यम्तु तस्माच्च नस्यात् । कित्वंग्रन्थोक्तमस्मिन्भवति खलु तदप्येत्वलोपौ विधातुं नान्यत्कार्यं विधातुं प्रणिजगदुरिति

आजआसस्य मुखेनैते ज्ञेयाः इत्यभिप्रेत्याह अनादेशादीनामिति नास्त्यादेश आदौ पूर्वरूपंयेषांते तेषां आदेशाश्चणत्रादिनिमित्ता गृह्यंते तादृशामेव प्रयोगात् अतएव सेहेनेमुरित्यादेः ष्णः स्न इत्यादेशादित्वेप्येत्वपूर्वलोपौ पूर्वस्यहसादिरित्यतोऽनुवर्त्तते लोपोयं पूर्वांतस्य न भवति नानर्थकेऽलोंत्यविधिरितिन्यायात् अनर्थकंच पूर्वरूपं अवयवत्वात् अवयवाह्यनर्थकाः अकारस्येति एकौ असहायौ हसौ पूर्वापरत्वेन यस्य तथाविधस्येत्यर्थः अतएव ततसरुस्ततक्षुरित्यादौ न एतच्चसर्वं तादृशामेवप्रयोगाल्लभ्यतं चकारस्यानेकार्थत्वाद्वा पेचतुः पेचुरिति द्वित्वेनैव पूर्वलोपौ कितिकिं अहं पपच ॥ वेट्थपः ॥ ९ ॥ थपोवेति भवतीतिवक्तव्यं वाशब्दोऽयं व्यवस्थितविकल्पार्थः तेनात्यर्तिव्ययतिभ्यश्च वृञ्सृभ्यां तथावयः पाक्षिकेतथासेड्भ्यः शेषानिड्भ्यश्च नित्यानिडिति सिद्ध्यति तथा वृञ्व्यतिरिक्तानांक्रादीनामृदंतानांच नित्यं न भवति सृजिदृशोर्वा भवतीति च निपातानामनेकार्थत्वात् सेटः कित्वमिति इटासहितस्य थपः कित्वं क्वचिद्वक्तव्यमित्यर्थः अत्रापि वाशब्दः पूर्ववद्व्याख्येय इति पेचिथेत्येत्वपूर्वलोपौ प्रति तथा ददिथेत्यातोनपीत्यालोपंच प्रति कित्वंभवति बिभेदिथ इयजिथेत्यादौ गुणसंप्रसारणादिकार्यं प्रति कित्वं नभवति विपर्यस्तु नातिशयार्था शास्त्रप्रवृत्तिरिति व्याख्यानतोविशेषप्रतिपत्तेर्वा प्रयोगाद्वा न भवति कित्वादिति पेचिथेत्यत्रालोपः पचामित्यनेन पपक्थेति इडभावे-

स्पष्टमाद्या मुनींद्राः ॥ ९ ॥ पेचिथ पपक्थ पेचथुः पेच णबुत्तमो णिद्वद्वक्तव्यः । ततो विकल्पेन वृद्धिः पपाच पपच पेचिव पेचिम आत्मनेपदेऽपि पेचे पेचाते पेचिरे पेचिषे पेचाथे पेचिध्वे पेचे पेचिवहे पेचिमहे । डुकृञ् करणे ॥ रः ॥ १० ॥ पूर्वस्य ऋकारस्याकारो भवति । चकृअ इति स्थिते ॥ धातोर्नामिनः ॥ ११ ॥ धातोरंतभूतस्य नामिनो वृद्धिर्भवति ञ्णिति परे । चकार चक्रतुः चक्रुः चकर्थ चक्रथुः चक्र चकार चकर चकृव चकृम

नाकित्त्वादेत्वाद्यभावे चोःकुरिति चस्य कः पपचेति णित्वाभावे पित्वादकित्त्वान्नेत्वादि पेचिथेति क्रादेर्णादेरिति नियमादिट् उत्तमपुरुषेऽत्र वैचित्त्यात्परोक्षंज्ञेयं लोपादिपूर्ववदिति पेचे इत्यादावपि णादिःकिदिति किस्वात् पेचथुरित्यादिवल्लोपः पचामित्येत्वपूर्वलोपावित्यर्थः ॥ रः ॥ १० ॥ ऋ अ इतिच्छेदः तत्र ऋइति लुप्तषष्ठी पूर्वस्य हसादिरित्यतः पूर्वस्येत्यनुवर्त्तत इत्याह पूर्वेति कृतेद्वित्वे पूर्वरूपसंबंधिन इत्यर्थः चकृ अ इति कृञोणपि द्वित्वेऽरत्वे चुत्वेन कस्य चकारेकृते एवंस्थितेसतीत्यर्थः ॥ धातोः ॥ ११ ॥ अंतभूतस्य प्रान्तस्येत्यर्थः भूप्राप्त्यर्थोऽयम् अत्रादिस्वरस्येतोवृद्धिः ञ्णितीति चानुवर्तत इत्याह वृद्धिरित्यादि चकारेति ऋकारस्यात्र सावर्ण्यादार्जोतः धातोःकिं त्वष्टुरपत्यं त्वाष्ट्रः अण् नामिनः किंः उभयति भकारस्य माभूत् नेचादिस्वरस्येत्यतः स्वरस्येत्यनुवृत्तौ नात्रप्रसंग इतिवाच्यं संबंधादादेरप्यनुवृत्तेर्नयोगांतरारंभात् तत्रनाम्न इत्यनुवर्तत इतिचेन्मानुवर्तिष्ट विचकार व्याचकारेत्यादौ क्वचित् द्वयोर्न संधिय्वोर्युट्चेति तु क्वाचिद्ग्रहणान्न भविष्यति आंगिरसइत्यादि निवृत्त्यर्थं चातउपधाया इत्यत्र धातुग्रहणं करिष्यते एवंतर्हि धातोर्नामिनोवृद्धिरेव यथास्यात् परत्वादंतरंगत्वाच्च गुणोमाभूदिति नामिग्रहणं तेन चिरिजिजोर्हिंसार्थ-

आत्मनेपदे चक्रे चक्राते चक्रिरे चकृषे चक्राथे ॥ नामिनोऽचतुर्णां धोढः ॥ १२ ॥ नाम्यंताद्धातोरुत्तरस्य धकारस्य ढत्वं भवति चतुर्णां संबंधिनो न भवति । चकृढ्वे चक्रे चकृवहे चकृमहे । अस्भुवि पूर्ववत् णबादयः द्विर्वचने कृते सवर्णे दीर्घः सह आस आसतुः आसुः

योर्भूते सोर्णिप इतिणित्त्वात् वृद्धावचिरायीदजिरायीदित्यादि सिद्ध्यति अन्यथा गुणेकृते यांतत्वात् ह्रयंतक्षणेत्यवृद्धौ अचिरयीदजिरयीदितिविरुद्धमापद्येत यद्येवं स्वंकरोति प्रियंकरोति अत्रञ्णिडित्करणइति ञ्णौगुर्वादिरित्यत्र ञेरिकारस्यापि प्रश्लेषात् प्रादेशतो वृद्धिर्नप्राप्नोति माभूद्वृद्धिः आदंतः प्रादेशोभविष्यति स्वादेशश्च इष्टेमेयस्सुच प्रेष्ठ इत्यादावातोऽप्यइए इत्येत्वे नास्तिदोषः एवमर्थापयतीत्यादावपिज्ञेयमुत्तरसूत्रे वातउपधाया इत्यत्रातइति विभज्य ञ्णित्यनंतरस्यधातोरतोवृद्धिरितिव्याख्ययात्र सर्वत्रवृद्धिः अतएव चकशब्दादशब्दाचाचारक्विंताण्णपि वृद्धावातोणपृडावित्यौत्वे चकौ चकतुः चकुः उ अतु उरित्याद्यपिज्ञेयम् आम्प्रत्ययाभावं चात्र कासादिवक्ष्यामः चक्रतुरिति ऋरं चकर्थेति क्रादिनियमान्नेट् चकारेति णबुत्तमोवेत्यपिणित्त्वादवृद्धौ गुणः चकृवेति क्रादित्वान्नेट् चकृष इति किलादितिषत्वं च ॥ नामि ॥ १२ ॥ अत्रधातोरित्यनुवृत्तेर्धातोर्नामिनः परस्यधस्येत्यर्थः योहि धातोर्नामिनः परोधः अर्थादसौ नाम्यंताद्धातोः परइति मत्वाह नाम्यंताद्धातोरुत्तरस्येति ननुचैवं कृषिढ्वमित्यत्र षीशब्देन व्यवधानान्नस्यात् मैवं अचतुर्णामिति पर्युदासेनाक्षिप्तस्य प्रत्ययस्य संबंधिनो धस्येति व्याख्यानात् षीध्वं प्रत्ययोत्राप्यव्यवहित एव लुलुविढ्वे लुलुविध्वे इत्यत्रोदितोवेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेर्वा-ढत्वं अचतुर्णामिति प्रसज्यपक्षेपि नदोष इतिमत्वा व्याचष्टे चतुर्णामिति अत्रपक्षेऽधिकारात् प्रत्ययः प्रत्येतव्यःचकृढ्वेइति ढत्वं नामिनः किं एधिषीध्वं अचतुर्णां किं स्तुध्वं चतुः शब्दोयं व्याप्तेर्न्यायादत्र दिवादिपर्यंतांस्तिबादीन्नवचतुर आचष्टे यद्येवं चेताध्वं स्तोताध्वम् इत्यत्रापिप्राप्नोति न नामिन इत्यस्यावृत्त्या धस्यापि विशेषणत्वान्ना-

आसिथ आस्थ आसथुः आस आस आसिव आसिम ॥ कासादिप्रत्ययादाम् ॥ १३ ॥ क्रसूभूपरः कासादेर्धातोःप्रत्ययांताच्च आम्प्रत्ययो भवति णबादौ सच कृअसूभूपरः प्रयोक्तव्यः कास्ट शव्दकुत्सायां कासरोगइत्यर्थः ऋकार ऋत्कार्यार्थः कासांचक्रे कासांचक्राते कासांचक्रिरे कासांचकृषे कासांचक्राथे कासांचकृढ्वे कासांचक्रे कासांचकृवहे कासांचकृमहे कासामास इत्यादि

मिनः परस्य धस्येति अत्रहि आकारात्परो धः नतुनामिनः अस् भुवि भवनंभूः तत्र भुवि भावेइत्यर्थः अत्रवक्ष्यमाणेन कासादिसूत्रेणाम्विधौ अनुप्रयोगसामर्थ्यादृशादेर्भ्वादि असादेर्धातोः भूइत्यादिरादेशो भवत्यनपि विषये बभूव उवाचेत्यादि अनेनसूत्रेणास्तेर्भूरादेशो भवतीति दर्शयितुं भुवः कृञश्च रूपाणि दर्शयित्वा अस्तेरपि रूपाणिदर्शयति आसेत्यादि असोणबादौ द्वित्वे आभ्वोरित्यात्वे सवर्णदीर्घः आसिथेति वेट्थप इतिनित्यमिट् आसिथेति क्रादिनियमादिट् ॥ कासा ॥ १३ ॥ कास आदिर्येषांते कासादयः कासईहृदय्चकास्उषविद्जागृ एते पाक्षिकाः भीहुभृह्री एतेद्विरुक्ताः अन्येच यथाप्रयोगं ज्ञेयाः प्रत्ययग्रहणेप्रत्ययमात्रस्याप्रयोगात्तदंतग्रहणं णबादयश्चात्र क्रादेर्णादेरित्यतो निमित्तत्वेनानुवर्त्तत इतिसर्वं मत्वाह कासादेर्धातोरिति प्रत्ययांताच्च णबादाविति सचेति आमित्यर्थः ततश्चपूर्वं कासादयस्तत आम् ततः क्रादयस्ततो णबादय इत्येवंप्रयोक्तव्यमिति भावः तथोदाहरिष्यति अतएव क्रसूभूपर इतिबहुव्रीहिः तत्पुरुषेतु वैपरीत्यं संपद्येत ऋकारइति ऋत्कार्येतु नऋत इतिवक्ष्यते कासांचक्रइति अत्रकासधातोरात्मनेपदिनो णबाद्यात्मनेपदेपरे आमिजाते तस्यचादिषु पाठसामर्थ्याज्जाताया विभक्तेरव्ययत्वादव्ययादिति लुकिआमंतात्पदात् कृञिपरेतु प्रयुक्ते तेनैवात्मनेपदेन प्रक्रियापूर्ववत् अतएव उभयपदित्वेऽपि परस्मैपदं न भवति कास आत्मनेपदित्वात् यदात्वामंतोधातुरुभ-

चकासृ दीप्तौ चकासांचकार चकासांचक्रतुः चकासांचक्रुः चकासांचकर्थ चकासांचक्रथुः चकासांचक्र चकासांचकार चकासांचकर चकासांचकृव चकासांचकृम चकासामास चकासामासतुः चकासामासुरित्यादि जागृ निद्राक्षये जागरांचकार जागरामास इत्यादि एध वृद्धौ एधांचक्रे एधांचक्राते एधांचक्रिरे ईक्षांचक्रे ऊह वितर्के ऊहांचक्रे विद् ज्ञाने विदांचकार आमिविदेर्नगुणः विदांबभूव इत्यादिभागवत् ईहचेष्टायाम् ईहांचक्रे ईहांबभूव ईहामास ॥ इतिकासादयः ॥ प्रत्ययांतात् चिकीर्षा-

यपदी परस्मैपदीच तदंतिनैवोभयपदेन परस्मैपदेन च कृञः प्रक्रियाज्ञेया कासामास कासांबभूवेति अत्रकास आत्मनेपदित्वेपि णादौविवक्षित एवाम्विधौ अनुप्रत्ययोश्चा-स्भुवोः परस्मैपदित्वात्ताभ्यामुत्पद्यमानं पश्चात्परस्मैपदमेवोत्पद्यत इतिकाचित्क आत्मनेपदस्यापपाठो ज्ञेयः एवंसर्वत्राप्यम्विधौ कृञोयथाप्रयुक्तं उभयपदं असभूभ्यां परस्मैपदमितिज्ञेयं एतच्च सर्वप्रयोगाल्लभ्यते एवंकासांचक्राते कासांचक्रिरे कासामा-सतुः कासामासुः कासांबभूवतुः कासांबभूवुरित्यादिज्ञेयं मित्वंचामो न भवति कास आम्विधानात् मित्वे हि सति मिदंत्यादिति कासउपधायामामि सवर्णदीर्घेच सत्य-सतिवा आमि विशेषाभावात् कास आम् विधानं व्यर्थंस्यात् इदंच सूत्रकृतापि यस्यकस्यापि ग्रहणं मत्वा सूत्रेकासग्रहणं कुर्वता सूचितं चकासृजागृपरस्मैपदिनौ जागरांचकारेति अत्रामिगुण इतिगुणः अपित्तादिरिति ङित्वेन क्ङितीति प्रतिषेधो न भवति जागर्तेः कृतगुणस्यैवात्र पाठात् अपित्तादिरिति प्रतिषेधार्थं तादिगणे आम् पाठाद्वा कासादौ विदेरकारांतत्वस्य पाठाद्वा अन्यथा विदेरप्ये-वमगुणेसिद्धे किमदंतत्वपाठेन अतएव आमिविदेर्न गुणइत्येव वक्तव्यं आदिस्वरस्येतिसूत्राऽनुबंधकार्याणामनित्यत्वस्य ज्ञापितत्वाद्वा एवंसर्वत्राप्यामि गुणे ज्ञेयं एधांचक्रइति एध वृद्धौ आत्मनेपदी विदेतिपरस्मैपदी आमीति

चकार चिकीर्षामास चिकीर्षांबभूव पाल रक्षणे पालयांचकार पुत्रीयांबभूव पिपक्षामास वर्णयांबभूव लोलूयांचक्रे भीह्रुभृह्वीणां द्विरुक्तानामाम् वा वक्तव्यः ञिभी भये बिभयांचकार बिभयांचक्रतुः बिभयांचक्रुः इत्यादि आत्मनेपदेऽपि बिभयांचक्रे बिभयांचक्राते बिभयांचक्रिरे बिभाय बिभ्यतुः बिभ्युः बिभ्यिथ बिभेथ बिभ्यथुः बिभ्य बिभाय बिभय बिभ्यिव बिभ्यिम जुहवांचकार जुहवांचक्रतुः जुहवांचक्रुः जुहवांचक्रे जुहवांचक्राते जुहवांचक्रिरे इत्यादि जुहाव जुहुवतुः जुहुवुः जुहुविथ जुहोथ जुहुवथुः जुहुव जुहाव जुहुविव जुहुविम बिभरांचकार बिभरांचक्रतुः बिभरांचक्रुरित्यादि आत्मनेपदे बिभरांचक्रे इत्यादि बभार बभ्रतुः बभ्रुः

एतदेववक्तव्यमित्यनंतरमेवोपपादितं विदांबभूव गुणाभावोप्यत्रानंतरमेवोपपादित ईह आत्मनेपदी ईहामासेति अलघूपधत्वान्नगुणः पलायांचक्र इति परापूर्वादयगतावस्मादात्मनेपदी न आमिकृपोरोल इत्यत्र रोलइति विभज्यात्र लत्वंप्रत्ययांतादिति आमुदाह्रियत इतिशेषः चिकीर्षांचकारेति कर्तुमिच्छेत्यर्थे इच्छायामात्मनइति सप्रत्यये द्वित्वे कुहोरिति पूर्वस्यचुत्वे रइत्यत्वे यः सइतीत्वे नैकस्वरादितीडभावे नानिट् सइति गुणनिषेधे सेदीर्घ इतिदीर्घे कृतइति इरिति य्वोर्विहसे इतिदीर्घे क्विलादितिषत्वेसप्रत्ययांतत्वादामि कृञोऽनुप्रयोगे एवंस्यादित्यर्थः एवंचिकीर्षांबभूवेत्याद्यपिज्ञेयं पणायांचकारेति पणेःस्तुत्यर्थात् गुपूधूपविच्छिपणिपनिभ्यआय इत्यायप्रत्यये प्रत्ययांतादाम्यात्मनेपदनिमित्तस्य केवलंचरितार्थत्वादायांतादत्रपरस्मैपदं पुत्रीयामासेति पुत्रमात्मने इच्छेत्यर्थेनाम्नोय इति ये इत्वेआम् वर्णांयांबभूवेति वर्णधातुस्तुत्यर्थाच्चुरादेरिति निप्रत्ययांतादामि गुणायादेशौ लोलूयामासेति अतिशयेन लुनातीत्यर्थे

बभर्थ बभ्रथुः बभ्र बभार बभर बभृव बभृम ह्रीलज्जा-याँ जिह्रयांचकार जिह्रयांचक्रतुः जिह्रयांचक्रुः इत्यादि जिह्रयांचक्रे जिह्रयांचक्राते जिह्रयांचक्रिरे इत्यादि जिह्राय जिह्रियतुः जिह्रियुः जिह्रियिथ जिह्रेथ जिह्रियथुः जिह्रिय जिह्राय जिह्रिय जिह्रियिव जिह्रियिम ॥ सपरोक्षयोर्जेर्गिः ॥ १४ ॥ जिगाय जिग्यतुः जिग्युः जिगयिथ जिगेथ जिग्यथुः जिग्य जिगाय जिगय जिग्यिव जिग्यिम जि जये जिग्ये जिग्याते जिग्यिरे जिग्यिषे जि-

अतिशयेहस्वादिरितियङिङित्वे यङीति गुणेपकारस्य यङोङित्वाद्गुणे आमृयङो-ङित्वेप्यत्रासेरात्मनेपदाभावःकासामासेतिवज्ज्ञेय अत्रच नैकस्वरादित्यनुवर्तमानं नैकस्वरादिति प्रत्ययग्रहणस्य विशेषणं न कासादेः तेषांप्रत्येकं पाठात् तेन प्रत्ययां-तादेकस्वरादामिति क इव आचरतिस्म अइवाचरतीत्यर्थे कर्तुर्यङीत्यत्र नाम्नइ-त्यतोऽनुवृत्तस्य चकारस्यानेकार्थत्वात् क्विब्विधौ तलोपे धातुत्वाण्णवादौ चकौ चक्रतुः चक्रुः औ अतुः उरित्यादिज्ञेयं त्रिभृहु इतिवक्तव्यो व्याख्येयस्तद्व्याख्या-नंतु कासादिसूत्र एवकृतं वक्तव्येत्वस्मिन् यद्यपिद्वित्वं सिद्ध्यति तथापिबि-भरांचकारेत्यादौ पूर्वस्येत्वं भृत्रांलुकीति तु नैवसिद्ध्यति लुगभावात् बिभयां-चकारेति कासादिपुपाठात् बिभीत्यस्मादामिगुणः बिभायेति आमभावे णपि द्वित्वह्रस्वत्ववत्ववृद्धयः बिभ्यतुरिति णादिरिति कित्वादगुणे नुधातोरितियत्वं बिभयिथ बिभेथेति वेद्रथपइति वेटि उभयत्र गुणः सेटइति कित्वं नामिह्-णाग्नभवति बिभयेति णवुत्तमइति कित्वाभावेगुणः बिभ्यिवेति क्रादिनियमा-दिटि यः जुहुवतुरिति नुधातोरित्युव् बिभरांचकारेति कृतपूर्वेत्वस्य कासादौ पाठाद्वित्वं बिभर्थ बिभृवेति आमभावे क्रादिपुपाठान्नेट् जिह्रियतुरिति ह्रील-ज्जायामस्मादामभावे इय् शेषंसुगमम् ॥ सपरोक्षयोः ॥ १४ ॥ सइति अकार-स्वंत्रमितीच्छायामात्मनइति सप्रत्ययो गृह्यते जिगीषतीति न समात्रं जेष्य-

ग्याथे जिग्यिध्वे जिग्ये जिग्यिवहे जिग्यिमहे वैचित्त्याप-ह्नवयोरल्पकालेपि णादयोवक्तव्याः सुप्तोहं किलविललाप लप् परिभाषणे विललाप विलेपतुः विलेपुः विलेपिथ वि-लेप्थ विलेपथुः विलेप विललाप विललप विलेपिव विले-पिम मत्तोहं विचचार नाहंकलिंगं जगाम ॥ अंगवंगकलिंगेषु सौराष्ट्रमगधेषुच ॥ तीर्थयात्रां विना गच्छन्पुनः संस्कारम-र्हति ॥ १ ॥ गमांस्वरे ॥ १५ ॥ गम् हन् जन् खन् घस्इत्येतेषा मुपधायालोपोभवति किति ङिति चपरे गम्लृगतौ तुः ज-

तीति तत्रैकैव सप्तमीविषयभेदेन संबध्यते सप्रत्ययेपरे परोक्षेवाच्यइत्यर्थः जिगायेति ग्यादेशेद्वित्वे चुत्ववृद्ध्यादयः जिग्यतुरिति नुधातोरिति यः जिगयिथ जिगेथेतिवेट् थपइतिवेट्ङभवत्रगुणः आदिना जिग्यथुःजिग्यु: जिगाय जिगय जिग्यिव जिग्यि-मेति वैचित्त्येति वैचित्त्यं विचित्तता मनस्तापादि निश्चित्तव्याक्षेपः अपह्नवोऽत्यंता-पलापः अल्पकालोऽपारोक्ष्यं तत्रवैचित्त्ये विधानंतु णबुत्तमोवेति ज्ञापकानाश्रयणपक्षे सुप्तोहमिति वैचित्त्योदाहरणं कश्चित्स्वकृतमेवाजानन् पार्श्वस्थादेवं त्वयाकृतमिति श्रुत्वा प्रयुंक्ते सुप्तोहमिति किलेत्यज्ञानं सूचयति तत्रलपेर्णल्यतउपधायाइति वृद्धिः लेपतुः लेपुः लेपिथ लेपथुरित्यादि नाहमिति कलिंगो नाम कुत्सितोदेशः तत्रप्र-विश्य चिरकालं त्वयास्थितमिति कश्चिदुक्तः सन्नाहमिति अत्र नकेव-लमवस्थानमेव निषिध्यते किं तर्हि तद्धेतुभूतं गमनमपीति भवत्यत्यंतापलापः जगामेति द्वित्वचुत्ववृद्धयः ॥ गमां ॥ १५ ॥ आमत्र हनादीनामपि ग्रहायेत्याह गमहनेत्यादि उपधायाइति उपधायालघोरित्यतोऽनुवर्तते लोपइति नोलोपइ-त्यतः क्ङितीति क्ङित्यद्व्युसीत्यतः । गम्लृ लृकारो लित्पुषादेर्ङइत्यर्थः जग्म-तुरितिणादिरित्यतुसः कित्वादनेनात्रोपधालोपे श्लिष्टोच्चारणं जगमिथ जग-न्थेति वेट्थपइति वेट् इडभावे नश्चापदांत इतिमस्यानुस्वारेयमायपइति

ग्याथे जिग्यिध्वे जिग्ये जिग्यिवहे जिग्यिमहे वैचित्र्याप- ह्नवयोरल्पकालेपि णादयोवक्तव्याः सुप्तोहं किलविललाप लप् परिभाषणे विललाप विलेपतुः विलेपुः विलेपिथ वि- लेपथ विलेपथुः विलेप विललाप विललप विलेपिव विले- पिम मत्तोहं विचचार नाहंकलिंगं जगाम ॥ अंगवंगकलिंगेषु सौराष्ट्रमगधेषुच ॥ तीर्थयात्रां विना गच्छन्पुनः संस्कारम- र्हति ॥ १ ॥ गमांस्वरे ॥ १५ ॥ गम् हन् जन् खन् घस् इत्येतेषा मुपधायालोपोभवति किति ङिति चपरे गम्लृगतौ जुः ज-

तीति तत्रैकैव सप्तमीविषयभेदेन संबध्यते सप्रत्ययेपरे परोक्षेवाच्यइत्यर्थः जिगायेति ग्यादेशेद्वित्वे चुत्ववृद्ध्यादयः जिग्यतुरिति नुधातोरिति यः जिगयिथ जिगेथेतिवेट् थपइतिवेट्ऽभयत्रगुणः आदिना जिग्यथुःजिग्युः जिगाय जिगय जिग्यिव जिग्यि- मेति वैचित्र्येति वैचित्र्यं विचित्तता मनस्तापादि निश्चित्तव्याक्षेपः अपह्नवोऽत्यंता- पलापः अल्पकालोऽपारोक्ष्यं तत्रवैचित्ये विधानंतु णबुत्तमोवेति ज्ञापकानाश्रयणपक्षे सुप्तोहमिति वैचित्र्योदाहरणं कश्चित्स्वकृतमेवाजानन् पार्श्वस्थादेवं त्वयाकृतमिति श्रुत्वा प्रयुंक्ते सुप्तोहमिति किलेत्यज्ञानं सूचयति तत्रऌपेर्णल्यतउपधायाइति वृद्धिः लेपतुः लेपुः लेपिथ लेपथुरित्यादि नाहमिति कलिंगो नाम कुत्सितोदेशः तत्रप्र- विश्य चिरकालं त्वयास्थितमिति कश्चिदुक्तः सन्नाहमिति अत्र नकेव- लमवस्थानमेव निषिध्यते किं तर्हि तद्धेतुभूतं गमनमपीति भवत्यत्यंतापलापः जगामेति द्वित्वचुत्ववृद्धयः ॥ गमां ॥ १५ ॥ आमत्र हनादीनामपि ग्रहायेत्याह गमहनेत्यादि उपधायाइति उपधायालघोरित्यतोऽनुवर्तते लोपइति नोलोपइ- त्यतः क्ङितीति क्ङित्यद्व्युसीत्यतः । गम्लृ लकारो लित्पुषादेर्ङइत्यर्थः जग्म- तुरितिणादिरित्यतुसः कित्वादनेनात्रोपधालोपे श्लिष्टोच्चारणं जगमिथ जग- न्थेति वेट्थपइति वेट् इडभावे नश्चापदांत इतिमस्यानुस्वारेयमायपइति

श्चुत्वेन ञकारः जज्ञे जगज्जनार्दनात जज्ञाते जज्ञिरे ज-
ज्ञिषे जज्ञाथे जज्ञिध्वे जज्ञे जज्ञिवहे जज्ञिमहे खन खनने
रूपं चखान पूर्त्तिकृत चख्नतुः चख्नुः चखनिथ च-
खंथ चख्नथुः चख्न चखान चखन चखिव चखिम। घस्लृ अ-
दने घासग्रासं जघास गौः द्विवचनादौ उपधालोपेकृते
खसेचपाझसानामिति ककारः ॥ घसादेःषः ॥ १७ ॥ घसि-
शासिवशीनां सकारस्य षकारादेशोभवति । जक्षतुः
जक्षुः जघसिथ जघस्थ जक्षथुः जक्ष जघास जघस ज-
क्षिव जक्षिम अद्भक्षणे ॥ अदोघस् ॥ १८ ॥ अद्भक्षणे
धातोर्घसादेशो भवति णबादौषड्विभक्तिपरे । पूर्ववद्-
द्रूपं ॥ आतोणबृडौ ॥ १९ ॥ आकारान्ताद्धातोः परोणब्-
डौ भवति । डित्वाट्टिलोपः ॥ ददौ दानं तदा दाता पपौ

अत्रासादेर्भ्वादिरित्यनेन पाक्षिकोऽदोघस्लादेशो विधीयते सोपिस्थानिनोऽर्थेनादना-
द्इत्यर्थः नतु घसिः प्रकृत्यंतरमेतत्तस्यानेनादेशविधानेनासार्वत्रिकप्रयोगत्वज्ञापनाद्-
न्यथा अदेराद आदतुः घसेर्जघास ॥ घसादेःषः ॥ १७ ॥ इत्यनेन षेकृते जक्षतु-
रित्यादिसिद्धेः किमादेशविधानेन तथोक्तं पदमंजर्यां प्रकृत्यंतरस्यासर्वविषयत्वज्ञाप-
नार्थमिदं तेन यत्र लिंगं वचनं वा नास्ति तत्र तस्य प्रयोगो न भवतीत्यादि घासेति
घासस्तृणं तस्य ग्रासः कवलः घसादेरिति एतच्च किलादितिसूत्र एवोपपादितं जघ-
सिथेति प्राग्वन्नित्यमिद् ॥ आतो ॥ १८॥१९ ॥ इहाकारमात्रस्यधातोरभावात् सतो
वानेकं प्रयोजनं योगारंभं प्रयोजयतीति अशक्तत्वादसामर्थ्यात्तदंतग्रहणमित्याह
आकारांताद्धातोरिति एवंच सत्योऔ इत्यौत्वेनापि सिद्धे डित्करणमातोयुङ्निवृ-
त्त्यर्थं ददावित्यादि दाञ्णोणपि परत्वात् डौभावे टिलोपे स्थानिवद्भावात् द्वित्वेपूर्वस्य

पेयंमुद्रापुनः ॥ तस्थौप्रीतस्तदास्थाने धनं हित्वा वनंय-यौ ॥ आतोऽनपि ॥ २० ॥ अविद्यमानोऽप्प्रत्ययो यत्रा-सावनप्तस्मिन्ननपि क्ङितिस्वरेपरे आकारस्यलोपो भवति । ददतुः ददुः ददिथ ददाथ ददथुः दद ददौ ददि-व ददिम ष्ठागतिनिवृत्तौ आदेःष्णःस्नः स्थाइतिस्थिते पूर्ववद्द्विवचनं ॥ शसात्खपाः ॥ २१ ॥ द्विवचने कृते यत्पूर्व-रूपं तस्माच्छसादुत्तराः खपाःशिष्यंते न शसाः ह्रस्वत्व-खपादेशश्च । तस्थौ तस्थतुः तस्थुः तस्थिथ तस्थाथ त-स्थथुः तस्थ तस्थौ तस्थिव तस्थिम या प्रापणे ययौ ययतुः ययुः ययिथ ययाथ ययथुः यय ययौ ययिव

ह्रस्वत्वं अर्थः सुगम एव धातुस्तु मूलएवोदाहरिष्यति ॥ आतोऽनपि ॥ २० ॥ अत्र क्ङित्यद्धृश्युसीत्यतःक्ङितिगमांस्वरइत्यतःस्वरइतिचानुवर्तते अनपीति यद्यपि परे न भवतीति व्याख्यायते तदा यांतीत्यादावदादित्वादप् लुकि अनप्परत्वादलोपः प्रसज्येत तस्मादनपीत्यपोऽप्रसंगो लक्ष्यत इत्याह अविद्यमान इति अप्रसक्तइत्यर्थः तस्मिन्निति तिबादिचतुष्टयादन्यस्मिन्नित्यर्थः ददतुरिति णादिरित्यतुसादेःकित्वादा-लोपः ददिथेति वेट्थप इतिवेटिसेटःकित्वादालोपः ददिवेति क्रादिनियमादिटि आलोपः एवमात्मनेपदेपि ददे इत्यादावालोपः स्वरे किं ग्लायते स्थाऔ ष्ठागतिनि-वृत्ताविल्यस्माण्णबादौ आदेःष्णः स्न इतिषस्य से सन्नियोगशिष्टत्वात् ठकारस्यापि थकारे आतोणबिल्यौत्वे टिलोपे द्वित्वंप्रति तद्भावेन स्था औ इतिस्थिते सतीत्यर्थः द्विर्वचनमिति द्विश्चेति ॥ शसा ॥ २१ ॥ पूर्वस्य हसादिरिति शसानां शेषेप्राप्ते खपशेषोऽयमारभ्यमाणो येननाप्राप्तिन्यायेनोभयशेषस्यैकत्रासंभवादादिशेषस्य बा-धको भवतीत्याह न शसाइति शसात्किं पपाच खपाः किं सस्नौ चपा-देशश्चेति झपानांजबचपाइति प्रकृतेःथस्य त इत्यर्थः तस्थाविति द्वित्वेकृते सात्परस्य थस्य शेषः टिलोपः तस्थतुरित्यादि ददतुरित्यादिवद्रूपंज्ञेयं या प्रा-

**ययिम । ष्णा शौचे ॥ पूर्वस्य हसादिशेषः ॥ २२ ॥ पूर्वस्यादिर्हसः शिष्यते अन्योलुप्यते । सस्नौ सस्नतुः सस्नुः सस्निथ सस्नाथ सस्नथुः सस्न सस्नौ सस्निव सस्निम ष्टुञ् स्तुतौ आदेःष्णः स्नः द्विश्चकिलात्षः सः ष्टुभिः ष्टुः शसात्खपाः णपि धातोर्नामिनः औ आव् तुष्टाव तुष्टुवतुः**

पणे प्रापणं देशांतरसंबंधः ययावित्यादौ प्राग्वत्प्रक्रिया ष्णा शौचे शौचं शुचिता ॥ पूर्व ॥ २२ ॥ ननु हसादिरिति हसानामादिरितिषष्ठीतत्पुरुषोवा हसश्चासाबादिश्चेति कर्मधारयो वा हसेति लुप्तविभक्तित्वेनासमासो वा नाद्यः अक्षू व्याप्तौ आनक्षेत्यादौ स्वरादिषुप्रसंगात् हसादित्वस्य हसांतरापेक्षत्वान्नतुपूर्वरूपापेक्षत्वात् न द्वितीयः नीलोत्पलादिवद्विशेषणत्वादादिशब्दस्यपूर्वनिपातप्रसंगात् तथोक्तं पदमंजर्य्यां । कर्मधारयपक्षे स्यादादिशब्दस्य पूर्वता । षष्ठीसमासे त्वानक्षेत्यादौ शेषः प्रसज्यतइति तृतीयपक्षे त्वादिशब्दस्य पूर्वरूपापेक्षत्वान्नायंदोषः इतितमेवाश्रित्याह पूर्वस्यादिर्हसइति शिष्यत इत्यनेन सूत्रे शेषशब्दे कर्मणि घञ् दर्शितः शिष्यतेऽवस्थाप्यत इत्यर्थः नचैवमादेरवस्थानस्य स्वतएव सिद्धत्वत्वात् किमर्थं सूत्रमितिवाच्यं नियमार्थत्वात् आदिरेवशिष्यते नत्वनादिरिति तदेवमादिशेषनिमित्तोनादेर्लोपोऽनेन क्रियत इतिमत्वाह अन्योलुप्यतइति अन्योऽनादिर्हसो लुप्यत इत्यर्थः अत्रच जातिपक्षांगीकारात् पूर्वरूपजातावादेः शेषोविवक्षितो न प्रतिवक्तीति आटतुरित्यादावसत्यप्यादिहसशेषेऽनादेष्टकारस्य लोपो भवतीति नाशंक्यस्तदभावे दोषः अडिति समुदायस्यात्र द्वित्वंभवतीति तु सस्वरआदिरितिसूत्र एवोपपादितं सस्नाबित्यादि ष्णा अस्माण्णबादौ आदेः ष्णः स्नः इतिषस्यसत्वे निमित्ताभावान्नकारे द्वित्वे ह्रस्वेपूर्वस्येति न लोपो णबादौ सस्नतुरिति आतोनपीत्यालोपादि प्राग्वत् ष्टुञ् स्तुतौस्तुतिःस्तवनं तुष्टावेतिष्टुञोणबादौप्राग्वत्सत्वे तकारेद्वित्वेचशसात्खपात्तकारशेषे सलोपतः परस्य सस्य किलादितिषत्वे तद्योगात् टुत्वे धातोर्नामिन इतिवृद्धावावादेशः । तुष्टुवतुरिति स्तुधातोरित्युव् तुष्टोथेति क्रादित्वान्नेट्

तुष्टुवुः तुष्टोथ तुष्टुवथुः तुष्टुव तुष्टाव तुष्टुव तुष्टुम यज देवपूजासंगतिकरणदानेषु अकारः स्वरितेत् उभयपदार्थः यजद्विवचने पूर्वस्यहसादिशेषः ॥ णबादौ पूर्वस्य ॥ २३ ॥ णबादौपरे यजादीनां ग्रहादीनांच पूर्वस्य संप्रसारणं भवति यकारस्येकारः वकारस्योकारः रेफस्य ऋकारः । स इयाज जनार्दनं ॥ यजांयवराणांय्वृतःसंप्रसारणंकिति ॥ २४ ॥ यज् वच् स्वप् वह् वेञ् व्येञ् ह्वेञ् वप् वद्वशां यकारवकाररेफाणां य्वृतः इकारउकारऋकारा भवंति कितिपरे तेच संप्रसारणसंज्ञका भवंति

पित्वाद्गुणः आदिना तुष्टुवथुः तुष्टुव तुष्टाव तुष्टुव तुष्टुम तुष्टुवे तुष्टुवाते तुष्टुविरे तुष्टुपे तुष्टुवाथे तुष्टुध्वे तुष्टुवे तुष्टुवहे तुष्टुमहे यज अनिट् संगतिकरणं मैत्रीकरणं अकारइति ञित्स्वरितेत इत्यनेन णबादौ अकिदर्थोयमारंभः कितितु पूर्वं परस्य संप्रसारणेकृते पश्चाद्द्वित्वेनापीष्टं सिद्धयति पूर्वशब्दोयंपूर्वस्यहसादिरित्यादौ द्वित्वस्य पूर्वरूपे रूढइतीहापि तदेवाह ॥ णबादाविति ॥ २३ ॥ सप्तम्यैव पूर्वस्यधातोः प्रतीतेः सामर्थ्यादेवात्र द्वित्वस्य पूर्वरूपं पूर्वशब्दार्थः हसादिशेषापवादोयं यजादीनां ग्रहादीनांचेति यजांयवराणां ग्रहांकिङतीत्यतः उभयेषामपि विवक्षयानुवृत्तेः सइयाजेति पूर्वमीजिवानित्यर्थः यजोत्र णपिद्वित्वेपूर्वस्ययस्यानेनसंप्रसारणमित्वं ॥ यजां ॥ २४ ॥ बहुवचनमेतत्सामर्थ्यादन्यानपि गृह्णातीत्याह यजवचेत्यादि यजदेवपूजादौ वचपरिभाषणे ब्रूञादेशोपि वह प्रापणे ञिष्वपृशये व्येञ् संवरणे ह्वेञ् स्पर्द्धायां शब्देच वेञ् तंतुसंताने टुवप् बीजतंतुसंताने वद् व्यक्तायांवाचि वस निवासे टुओश्विइर्गतिवृद्धयोः एषांये यकारवकाररेफास्तेपामित्यर्थः यवयोश्चतद्विधौ प्रयोजनाभावात् य्वृत इतीकारोकारयोग्रहणमित्याह य्वृत इकारइत्यादि संप्रसारणमिति संज्ञानिर्देश इत्याह संप्रसारणसंज्ञेति य्वृतइत्येवसिद्धे संज्ञाविधानं पाणिनीयमतानुसरणार्थं तदनुसरणंच तदीयविधि-

सस्वरस्य संप्रसारणं ह्रस्वस्य ह्रस्वः दीर्घस्य दीर्घः ईजतुः ईजुः । इयजिथ इयष्ठ ईजथुः ईज । इयाज इयज ईजिव ईजिम आत्मनेपदे ईजे ईजाते ईजिरे ईजिषे ईजाथे ईजिध्वे ईजे ईजिवहे ईजिमहे वच् परिभाषणे परस्मैपदी उवाच ऊचतुः ऊचुः उवचिथ उवक्थ ऊचथुः ऊच उवाच उवच ऊचिव ऊचिम ॥ ब्रूञो वचिः ॥ २९ ॥ ब्रूञोधातोः वचिरादेशो भवति पूर्ववद्रूपंज्ञेयं । आत्मनेपदे ऊचे ऊचाते ऊचिरे इत्यादि ञिष्वप् शये सुष्वाप सुसुखं सखा सुषुपतुः सुषुपुः सुष्वपिथ सुष्वप्थ सुषुपथुः सुषुप सुष्वाप सुष्वप सुषुपिव सुषुपिम

प्रतिषेधाऽऽश्रयणार्थं तेनवेञोणबादौ ववौ ववतुः ववुः तथा वावश्यत इत्यादौ संप्रसारणं न भवति वेञ् नवश इत्यादिना तत्रप्रतिषेधात्सूत्रेयवराणामित्यकारः सस्वरस्य संप्रसारणार्थसूचनार्थं इतिमत्वाह सस्वरस्येति ईजतुरिति यजेरतुसादौ पूर्वस्य णबादाविति परस्यच यजामितीत्वे सवर्णदीर्घः इयजिथेति वेट्थप इतिवेट् इयष्ठेति इडभावे छशषेति षत्वेष्टुत्वं ईजिवेति क्रादिनियमादिट् एवमात्मनेपदेपिज्ञेयं वचउभयपदी अनिट्चउवाचेति णबादाविति पूर्वस्योत्वे उपधावृद्धिः ऊचतुरिति वयोर्द्वयोः पूर्ववदुक्तयोर्दीर्घः उवचिथ उवक्थेति प्राग्वदिटोभावाभावौ परत्र द्वौपरत्र चोःकुः ऊचिवेति क्रादिनियमादिट् ऊचे ऊचाते ऊचिरे इत्यादिसुगमं ॥ ब्रूञ्इति ॥ २५ ॥ असादेर्भ्वादिरित्यनेनेति शेषः उभयपदमिति ब्रूञो ञित्वात्तद्भावेन वचेरपीत्यर्थः अस्याप्युवाचेत्यादीनि प्राग्वद्रूपाणिज्ञेयानि ञिष्वप् शयनं शयः स्वापः अनिट्परस्मैपदीच ञिदित् ञितांतकिति विशेषणार्थः सुष्वापेति सुसुखमिति क्रियाविशेषणं स्वपोत्र णबादौ आदेःष्णःस्न इति सत्वे द्वित्वे पूर्वस्य वस्योत्वे किलादिति पुनःषत्वं सुषुपतुरिति यजादित्वात्परस्यापि वस्योत्वं तत्र कृतसंप्रसारणस्य सुपेः सुविनिर्दुःपूर्वस्यस्वादिषु पाठात् विपुषुपतुः सुषुषुपतुरित्यादौ षत्वं

॥ नुगशां ॥ २६ ॥ अशादीनांपूर्वस्य नुगागमो भवति णादौसति । अशूङ् व्याप्तौ आभ्वोर्णादौ इत्यात्वंभवति विपूर्वः व्यानशे विश्वं भगवान् व्यानशाते व्यानशिरे व्यानशिषे व्यानशाथे व्यानशिध्वे व्यानशे व्यानशिवहे व्यानशिमहे अंजू व्यक्तिम्रक्षणकांतिगतिषु आनंजाक्षिणी कज्जलेन काचित्स्त्री आनंजतुः आनंजुः आनंजिथ आनंजथुः आनंज आनंज आनंजिव आनंजिम आत्मनेपदे आनंजे आनंजाते आनंजिरे इत्यादि, अर्चपूजायां आनर्च आनर्चतुः आनर्चुः आनर्चिथ आनर्चथुः आनर्च आनर्च आनर्चिव आनर्चिम चिञ् चयने चिनोतेः सणादौ कित्वं वा वक्तव्यं । निर्पूर्वः निश्चिकाय चिरं राजा निश्चिक्यतुः निश्चिक्युः निश्चि-

सुष्वपिथेति वेट्थप इतिवेट् सुष्वपूथेति इडभावेरूपं ॥ नुग ॥ २६ ॥ अत्राभ्वोरित्यतो णत्रादौ पूर्वस्यहसादिरित्यतः पूर्वस्येत्यनुवर्तत इत्याह अशादीनां पूर्वस्येतिकृताऽऽत्वस्येतिशेषः आत्वस्याप्यनुवृत्तेः पूर्वस्यात्वेकृते इति व्याख्यानात् अन्यथापरत्वान्नुगात्वं बाधेत अशादिगणे चाश्नोतेरेवपाठान्नास्नोतेर्ग्रहणं अशूङ् ऊइत् वेडर्थः ङिदात्मनेपदार्थः आभ्वोरिति पूर्वस्येतिशेषः विपूर्वइति प्राग्धातोरित्यनेन व्यानशे इति अशेरे आते इत्यादिषु द्वित्वेपूर्वस्यात्वेऽनेन नुकि कित्वात्पूर्वस्यांते वेर्यत्वंव्याप्तवानित्यर्थः आदिनाव्यानशिषे व्यानशाथे व्यानशिध्वे व्यानशे व्यानशिवहे व्यानशिमहे अञ्जूव्यक्तिः प्रकटता म्रक्षणं घृतादिसेकः कांतिर्दीप्तिः परस्मैपदी सेड्वा आनंजेतिप्राग्वत् द्वित्वेआत्वनुकौ काचित्कावपीत्यर्थः आनंजिथेति वेट्थप इत्यनित्यमिट् आनंजिवेति क्रादिनियमान्नित्यमिट् चिनोतेरिति सेति लुप्तसप्तमीकोनिर्देशः णादिसंनिधानाच्चेष्टार्थोद्वित्वनिमित्तः सोगृह्यते कित्वमिति किरादेशइत्यर्थः निश्चिकायेति निश्चितवानित्यर्थः गुरुत्वात्कौ सर्वादेशे द्वित्वे कुहोरितिचुत्वे धातोरितिवृद्धावायादेशेच निरोरेफस्य विसर्ग-

कयिथ निश्चिकेथ निश्चिक्यथुः निश्चिक्य निश्चिकाय निश्चिकय निश्चिक्यिव निश्चिक्यिम पक्षे चिचाय चिच्यतुः चिच्युः चिचयिथ चिचेथ चिच्यथुः चिच्य चिचाय चिचय चिच्यिव चिच्यिम आत्मनेपदे चिच्ये चिच्याते चिच्यिरे चिच्यिषे इत्यादि ग्रहूउपादाने ग्रहांक्ङितिचेतिसंप्रसारणं जग्राह जगृहतुः जगृहुः जग्रहिथ ( जग्राठ चिंत्यं ) जगृहथुः जगृह जग्राह जग्रह जगृहिव जगृहिम आत्मनेपदे जगृहे जगृहाथे जगृहिरे इत्यादि व्येञ संवरणे संविव्याय स्वाज्ञानं सुज्ञः संविव्यतुःसंविव्युः संविव्येथ संविव्यथुः संविव्य संविव्याय

सत्वशकाराः निश्चिक्यतुरिति णादिरिति कित्वादगुणे नुधातोरितियत्वं निश्चिकयिथ निश्चिकेथेति वेट्थप इतिवेट् निश्चिकाय निश्चिकयेति णबुत्तमइति वा णित्वे वृद्धिगुणौ निश्चिक्यिवेति क्रादिनियमादिटियत्वं पक्ष इति क्यादेशाभावपक्ष इत्यर्थः चिचायेत्यादि किवर्जंप्राग्वदेव एवमातमनेपदेपि चिक्ये चिच्ये इत्यादौ सर्वत्र नुधातोरितियत्वं वसादौ क्रादिनियमादिट् ग्रहांक्ङितिचेति अनेन यवराणांग्रृत इत्यर्थः जग्राहेत्यादि पितिपूर्वरेफस्य ऋकारे रः इत्यत्वं कितिपरस्यापि रेफस्य ऋकारे शेषंसुगमं थपितुवेट् थपइतिनित्यमिट् वसादौ क्रादिनियमान्नित्यमिट् ईटो ग्रहामिति दीर्घाभावंतु तत्रैव वक्ष्यामः रूपाणितु पदद्वयेपि ज्ञेयानि व्येञ् संविव्यायेति चतुरः स्वीयमज्ञानं संवीतवानित्यर्थः वेञोऽत्र द्वित्वे पूर्वस्ययस्येत्वे वृद्धिरेकारस्यैकारस्तस्यायादेश आत्वाभावस्तु सिंहावलोकितन्यायेन विदोनवानामित्यतो व्यवस्थितार्थवाशब्दस्य संबंधाज्ज्ञेयः पूर्वस्यसंप्रसारणाभावस्तु ग्रहांक्ङितिचेत्यत्रोक्तएव विव्यतुरिति द्वयोरपि ययोरित्वं विवयिथेति नित्यमिट् अयादेशः विव्यिवेति इटियत्वं केचित्तुवेञ इवास्यापि परस्य संप्रसारणाभावे विद्धातोः

संविव्यय संविविध्यिव संविविध्यिम वेञ् तंतुसंताने ॥ वेञो वय अनपिस्वरे ॥ २७ ॥ वेञोधातोरनपि विषयेवय् आदेशो भवति स्वरेपरे ॥ उवाय ऊयतुः ऊयुः ऊवयिथ ऊयथुः ऊय । ऊवाय उवय ऊयिव ऊयिम । ह्वेञ्

विव्ययतुःविव्ययुरित्याद्यप्युदाहरंति एवं विव्ये विव्यये इत्याद्यपिज्ञेयं ॥ वेञो वयेति ॥ २७ ॥ एतच्चासादेर्भ्वादिरित्यत्र विदोनवानामित्यतः सिंहावलोकितन्यायेन व्यवस्थितार्थवाशब्दसंबंधाण्णबादौ पाक्षिकंज्ञेयं अतएव ववौ ववतुः ववुरित्याद्यपि भवति अत्रसंप्रसारणाभावस्तु तत्सूत्र एवोपपादितः उवायेति वयःपूर्वस्योत्वे वृद्धिः ऊयतुरिति यजादित्वात्परस्याप्युत्वे सवर्णदीर्घः उवयिथेति नित्यमिट् ऊयिवेति क्रादिनियमादिट् एवंऊये ऊयाते इत्याद्यपि विविधतुरिति ग्रहादित्वात्परस्यापीत्वं आदिना विव्यधिथ विव्यद्ध विविधिथुः विविध विव्याध विव्यध विविधिव विविधिम पप्रच्छेति संयोगोपधत्वान्नोपधावृद्धिः णबादाविति पूर्वस्यऋकारे रइत्यत्वं पप्रच्छेति वेट्थपइतीडभावे छपशेति षत्वष्टुत्वं णादेरिति एतच्चणादिः किदित्यतः परं ऋसंयोगान्नेति सूत्रमस्ति ततोऽवगम्यते अस्यार्थः ऋधातोःऋकारांतात्संयोगांताच्च परो णादि किन्नस्यात् ऋ आर आरतुः आरुः आरिथ आरथुः आर आर आरिव आरिम क्त्विस्यपूर्वमेव कित्वेनबाधितत्वात्तदाश्रयोपि गुणप्रतिषेधो न भवति कित्वनिषेधारंभसामर्थ्याद्वा उभयनिषेधाद्वा ऋकारांतात् कृ विक्षेपे चकार चकरतुः चकरुः चकरिथ संयोगांतात् पप्रच्छतुः अकित्वान्न संप्रसारणं हठपौनःपुन्ययोरिति एतच्चेदानींतनैः प्रक्षिप्तं क्वचिदपि लडादिभिरव्यवहारात् उदाहरणानुपपत्तेश्च हठपौनःपुन्ययोर्हि पदंद्विश्चेति पदस्यद्वित्वं तस्यैवधातोरनुप्रयोगश्चेति प्राप्नोति इदंतुयुक्तं लुनीहीत्येवायं लुलाव अथवासमुच्चयेपि भवतीति ज्ञापनार्थमेतदुदाहृतं अत्रहि सामान्यवचनस्य धातोरनुप्रयोगो भवति सचात्र यथा कथंचित् कृञःसमर्थनीयः।

आह्वाने अह्विरुक्तस्यधातोर्ह्वेञो णादौ सर्वत्र संप्रसारणं वक्तव्यम् आङ्पूर्व आजुहाव आजुहुवतुः आजुहुवुः आजुहविथ आजुहोथ आजुहुवथुः आजुहुव आजुहाव आजुहव आजुहुविव आजुहुविम आत्मनेपदेऽपि आजुहुवे आजुहुवाते आजुहुविरे इत्यादि व्यध ताडने विव्याध विविधतुः विविधुः विव्यधिथ विव्यद्ध विविधथुः विविध विव्याध विव्यध विविधिव विविधिम प्रच्छ ज्ञीप्सायां पप्रच्छ पप्रच्छतुः पप्रच्छुः पप्रच्छिथ पप्रष्ठ पप्रच्छथुः पप्रच्छ पप्रच्छिव पप्रच्छिम प्रच्छादेः संयोगान्नकित्वम् । हठपौनःपुन्ययोर्लोण्मध्यमपुरुषैकवचनांततानिपात्यते ॥ पुरीमवस्कन्दलुनीहिनंदनं मुषाणरत्नानिहरामरांगनाः ॥ विगृह्यचक्रे नमुचिद्विषावली यइत्थमस्वास्थ्यमहर्निशंदिवः ॥ १ ॥ इतिपरोक्षः ॥ आशिषि ॥ १ ॥ यात् यास्तां यासुस् याम् यास्तं यास्त यासं यास्व यास्म सीष्ट सीयास्तां सीरन् सीष्ठास् सीयास्थां सीध्वं सीय सीवहि सीमहि धातोराशिषियादादयो भवंति भूयात् भूयास्तां भूयासुः भूयाः भूयास्तं भू-

॥ आशिषि ॥ १ ॥ धातोराशिषि यादादयः इति अधिकारादेतल्लभ्यते भूयादिति भूसत्तायामस्मात्प्रागवद्यादादिनवकेसति प्राप्तस्य गुणस्य णादिः किदित्यादिना यादादिनवकस्यापि ग्रहणे कित्वान्निषेधः अतएव यजेरित्यादौ कित्वाश्रयं संप्रसारणमपि भवति सः श्रीमानिति नाम्निचेति प्रथमपुरुषः एवं त्वं श्रीमान्भूयाः अहं श्रीमान्भूयासमित्याद्यप्युदाहार्यं जीव सेट् परस्मैपदीच प्राणधारणं जीवनं शरद इति कालाध्वनो-

यास्त भूयासं भूयास्व भूयास्म सः श्रीमान्भूयात् जीव प्राणधारणे शतंशरदोजीव्याद्भवान् डुदाञ् दाने ॥ दादेरे ॥ २ ॥ दादेर्धातोराकारस्यैकारादेशोभवति यादादौपरे । देयात् धेयात् पा पाने पेयात् हेयात् मेयात् स्थेयात् गेयात् ॥ यादादौ ॥ ३ ॥ यादादौपरस्मैपदेपरे ऋकारस्यरिङादेशोभवति । क्रियात् क्रियास्तां क्रियासुः क्रियाः क्रियास्तं क्रियास्त क्रियासं क्रियास्व क्रियास्म केशा मंगलं वः क्रियासुः । आत्मनेपदे कृषीष्ट कृषीयास्तां कृषीरन् कृषीष्ठाः कृषीयास्थां कृषीढ्वं कृषीय कृषीवहि कृषीमहि विष्णुस्ते मंगलं कृषीष्ट ॥ उः ॥ ४ ॥ ऋकारस्यानिटोगुणो न भवति अन्य-

रिति शस् ॥ दादेः ॥ २ ॥ यद्यपिदादेरित्यस्माद्दादेरित्यनुवर्तते तथाप्यत्र तदन्येषामपिसंयोगादीनामादंतानां पाक्षिकः पाठोस्तीति पुनर्दादिग्रहणं तेन ग्लेयात् ग्लायात् म्लेयात् म्लायादित्याद्यपि सिद्ध्यति देयादिति दाञोऽत्र षष्ठीनिर्दिष्टत्वादाकारस्यैत्त्वं एवं धेयात् मेयात् गेयात् स्थेयात् पेयात् हेयात् सेयादित्यपिज्ञेयम् ॥ यादा ॥ ३ ॥ अत्रानड्विषयाधिकारात् आशिषि यादादयो गृह्यंते न पूर्वोपीति विभृयादित्यादौ रिङादेशो न एवमपि वृषीष्ट हृषीष्टेत्यादौ प्राप्तोरिङ्येइत्यनुवृत्तेर्यकारादौ यादादौविधानान्न भवति तदापि दासीष्ट धासीष्टेत्यादौ दादेरे इत्येत्वमपि इदमेवहि यादादिग्रहणं तत्राप्यनुवर्तते क्रियादिति कृञोयादादौ सर्वत्र ऋकारस्य रिङ् ये इतिदीर्घाभावस्तु अयक्तीत्यत्र प्रतिपादितः कित्वात् गुणो न केशाइति कश्च अश्च ईशश्च केशाः ब्रह्मविष्णुरुद्रा इत्यर्थः कस्यात्र ब्रह्मणः प्राधान्यात्पूर्वत्वे सवर्णदीर्घत्वेचकृते पश्चादेत्वं अथवा कश्च अश्च कौ तत ईशशब्देन द्वंद्वे एत्वं मंगलशब्दस्य नमःप्रभृतिषु पाक्षिकपाठात् व इति चतुर्थीषष्ठीवा कृषीष्टेत्यादि कृञः सीष्टादौ सिसतासीति प्राप्तस्येटोनैकस्वरादिति निषेधे षत्वं॥उः॥४॥अत्र नानिट्स इत्यस्माद

स्य च भवति चिञ् चयने: चेषीष्ट स्तोषीष्ट ॥ इत्याशिषि ॥ ६ ॥ श्वस्तने ॥ ५ ॥ ता तारौ तारम् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मम् ता तारौ तारम् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे श्वोभाविन्यर्थेंताद-योभवंति ॥ सिसतासीस्यपामिट् ॥ ६ ॥ धातोःपरेषां सिसतासीस्यप् इत्येतेषामिडागमोभवाति । भविता भ-वितारौ भवितारः भवितासि भवितास्थः भवितास्थ भवितास्मि भवितास्वः भवितास्मः श्वोभविता राज्य-

निट्निषेधे सिस्योरितिसूत्राच्च सिसीचानुवर्तते अनिडितिच सिस्योर्विशेषणं अतएव ऋ गताविविधातुर्न गृह्यते तद्ग्रहणे हि तस्यानिट्त्वान्निविशादेरित्यात्मनेपदेपि सिस्योरवश्यमनिट्त्वान्नास्ति अनिड्ग्रहणस्य व्यावर्तनमिति सर्वमालोच्याह ऋका-रस्येत्यादि उदाहरणंतु कृषीष्टेति दर्शितमेव ननु तत्रापित्तादिरितिङित्वादेवगुणो न भविष्यति एवं तर्हि ऋकारस्यैव यथास्यादन्यस्य माभूदिति नियमार्थोयं योग इत्यभिप्रेत्योदाहरति चेषीष्ट स्तोषीष्टेति अन्यत्रापि ङित्वाद्गुणो नस्यात् न च वाच्यं सिस्योरिति नियमार्थत्वाद्भविष्याति वृषीष्टेत्यत्राप्येवं गुणाभ्यनुज्ञानत्वादथवा सिस्यो-रिति नियमात्सर्वस्याप्यंतस्य गुणेप्राप्ते ऋकारस्यनिषेधार्थमिदं नियमस्यच सामा-न्यापेक्षत्वात् शयिषीष्टेत्यादाविड्विषयोपिगुणः सिद्ध्यति यदाषीष्टादीनपित्तादिगणे पठित्वा अपित्तादिरिति ङित्वाभावात्सर्वत्रापि गुणेप्राप्ते प्रतिषेधार्थं उः सिस्योरिति सूत्रद्वयमिति व्याख्यायेत तदासंगंसीष्टेत्यत्र मलोपार्थं यत्नांतरमारभ्यं स्यात् सतिपुनर्ङित्त्वे इदमपि सिद्ध्यति सीष्टादीनां तादावपाठाल्लाघवापत्तिश्च ग्रहिषी-ष्टेत्यादौ तु ङित्वात्प्राप्तसंप्रसारणादिदोषस्तु संज्ञापूर्वकस्य विधेरनित्यत्वादनुबंध-कार्यानित्यत्वाद्वा परिहर्तुंशक्यः ॥ श्वस्त ॥ ५ ॥ श्वोभवः श्वस्तनः तस्मिन् श्वसित्यव्ययमनद्यतने भाविनि कालेवर्तते तदुक्तममरेण अनागतेह्निश्व इति अत-आह श्वोभाविनीति ॥ सिसता ॥ ६ ॥ भवितेत्यादि भवतेः प्राग्वत्तादिष्वनेनेटि

भारः कुमारस्य ॥ नैकस्वरादनुदात्तात् ॥ ७ ॥ एकस्वरा-द्धातोर्धातुपाठे अनुदात्तइत्येवं पठितादिडागमो न भवति । पक्ता पक्तारौ पक्तारः पक्तासे पक्तासाथे पक्ताध्वे पक्ताहे पक्तास्वहे पक्तास्महे डुदाञ् दाने दाता पाता चेता नेता स्तोता होता कर्त्ता हर्त्तेत्यादि ॥ इति ॥ ॥ ७ ॥ स्यादौभविष्यतिस्यप् ॥ १ ॥ धातोर्भविष्यति काले स्यप् प्रत्ययोभवति तिबादिष्वष्टादशसुपरेषु भवि-ष्यति भविष्यतः भविष्यंति भविष्यसि भविष्यथः भविष्यथ भविष्यामि भविष्यावः भविष्यामः यज् देवपूजासंगतिकरणदानेषु यज् स्यप् इतिस्थिते छशष-राजादेः षः इति षत्वं ॥ षढोः कस्से ॥ २ ॥ धातोः षकारढ-कारयोः कत्वं भवति सकारेपरे किलादितिषत्वं कष-संयोगे क्षः यक्ष्यतेऽसौ राजादेवान् यक्ष्येते यक्ष्यंते यक्ष्य-

गुणावादेशौ ॥ नैक ॥ ७ ॥ नैकः स्वरोयास्मिन् सनैकस्वरस्तस्मान्नैकस्वरादुदा-त्तोनास्तीत्यनुदात्तस्मादनुदात्तत्वं चौपदेशिकं गृह्यतइत्याह धातुपाठ इति उप-देशग्रहणंतु न कृतं उत्तरकालमिह शास्त्रेऽनुदात्तत्वाविधानात् व्यावर्त्याभावात् इडागमइति सिसतासीत्यतोनुवृत्त इत्यर्थः अनिटश्च सुखप्रतिपत्त्यर्थं कारिकाभिः संगृह्यते ॥ एकस्वरांतादृदृदंतिमाञ्श्लिडी शीश्विक्षुरुक्ष्णोति युणुस्तुवृन्वृङः ॥ हित्वानिटोविद्धि तथाशकिंघसिंसजिचमस्जिवसतिं रभिंलभिं ॥ १ ॥ यम्यन्नमी-न्मन्यतिहन्नमीन्गमिंदिहिंवहीन् मिहलिहदुहरहीन् रुहिं ॥ दंशिंदिशिंमृशदशिरि-श्विशीन् रुशिंस्पृशिंलिशिंकुशरुधिराधियुधिव्यधीः ॥ २ ॥ साधिंक्षुधिंसिद्ध्यति बुद्ध्यतिंक्रुधिंबंधिंशुधिंशिपृप्रिषिपुष्यतीन्क्लुषिं ॥ श्लिष्विपूत्विषीन्तुषद्विषिकर्षतीन्कृषिं

से यक्ष्येथे यक्ष्यध्वे यक्ष्ये यक्ष्यावहे यक्ष्यामहे ॥ हनृतःस्यपः ॥ ३ ॥ हंतेर्धातोः ऋकारांताद्गमेश्च पेपरस्मैपदे परे स्यपइडागमोभवति । हनिष्यति हनिष्यतः हनिष्यंति करिष्यति करिष्यतः करिष्यंति हरिष्यति

दुष्याप्तपितिप्वपिलिपूलुपीन्स्वपिं ॥ ३ ॥ क्षिपूशप् सृपीन् क्षुप्छिदिभिद्यतीन् हृदिस्कंदिंक्षुदिं स्विद्यतिपद्यतिंतुदिं॥ विनत्ति सद्विद्यति तुद्खिदीन् शदिंपचिंवचिंविचि प्रच्छिनिञ्जिचिं सिचिं ॥ ४ ॥ मुचिं भजियज् रंजियुजिं रुजिभुजित्यजिं भ्रस्जसभजिस्वंजिमस्जखजीन् ॥ पक्तेति पचेस्तादौ खिसतासीत्यनेन निषेधे चोः कुरिति चस्यकः दातेति प्राग्वन्नेट् चेतेत्यादि इटोनिषेधेऽपित्तादिरिति ङित्वाभावाद्गुणः एषिता एष्टेत्यादौ चागमानित्यत्वात्पक्षे इडभावः ॥ त्यादौ ॥ १ ॥ अत्र यक्चतुर्षु इत्यनुवर्तमाने पुनस्त्यादिग्रहणात्तिवादयोऽष्टादशैव गृह्यंते इत्यभिप्रायेणाह तिबादिष्वष्टादशस्विति अतएव स्यव्विधेर्ज्ञापकाद्भविष्यति काले तिबादयः स्यपः पकारोङित्वाभावार्थः भविष्यतीति भवतेस्तिबादौस्यपिसिसतासीतीटि स्यपः पित्वादङित्वात् गुणावादेशः भविष्यंतीति अंतौ अदेरित्यलोपः भविष्यामीत्यादि त्रिष्वपिवमोरित्यात्वं यक्ष्यते इतीति आत्मनेपदेऽत्र यजेः स्यप्रत्यये नैकस्वरादितीडभावे छशषेति षत्वमित्यर्थः ॥ षढोः ॥ २ ॥ षसयोरकारो मुखसुखार्थः यक्ष्यते इति अनेनात्र षस्यकत्वे किलादितिस्यपःसस्यषत्वे कषसंयोगेक्षः यक्ष्येते इति आदाथइरित्यात इत्वेएत्वं यक्ष्यंतइति अदेइत्यलोपः इत्यादि यक्ष्यसे यक्ष्येथे यक्ष्यध्वे यक्ष्ये यक्ष्यावहेयक्ष्यामहे इति से किं पिनष्टि लेढि ॥ हनृ ॥ ३ ॥ अत्र सामर्थ्याद्दृदंतोगृह्यते नहिऋमात्रात् स्यबस्ति ऋधातोः तपरकरणानर्थक्यप्रसंगात्तदंतग्रहणमत आह ऋकारांतादिति वृत्तौतु गमेश्च स्यपइति क्वचित्कोपपाठः गमेरननुवृत्तेः तस्यतु नैकस्वरादित्यत्रोदितोवेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेरनात्मनेपदे सर्वत्रेट् सिद्ध्यति गमिष्यति अगमिष्यत् जिगमिषतीति अतएव अस्तावीत् असावीदित्यादिसिद्धिः निपातानामनेकार्थत्वाच्च सर्वत्रापीट् व्यवस्थितवानुवृत्तिरेवकर्तव्या विस्तरभयादिहनोच्यते हनिष्यतीति इतिकृते षत्वं हरिष्यतीति इटिकृते गु-

से यक्ष्येथे यक्ष्यध्वे यक्ष्ये यक्ष्यावहे यक्ष्यामहे ॥ हनृतःस्यपः ॥ ३ ॥ हंतेर्धातोः ऋकारांताद्गमेश्च पेपरस्मैपदे परे स्यपइडागमोभवति । हनिष्यति हनिष्यतः हनिष्यंति करिष्यति करिष्यतः करिष्यंति हरिष्यति

दुष्याप्तपिंतिपृवपिलिपूलुपीन्स्वपिं ॥ ३ ॥ क्षिपृशप् सृपीन् क्षुपछिदिभिद्यतीन् हृदिंस्कंदिंक्षुदिं स्विद्यतिपद्यतिंतुदिं॥विनत्ति सद्विद्यति तुद्खिदीन् शदिंपचिंवाचिंविचि प्रच्छिनिञ्जिचिं सिचिं ॥ ४ ॥ मुचिं भजियज् रंजियुजिं रुजिभुजित्यजिं भ्रस्जस्भजिस्वंजिमस्जखजीन् ॥ पक्तेति पचेस्तादौ खिसतासीत्यनेन निषेधे चोः कुरिति चस्यकः दातेति प्राग्वन्नेट् चेतेत्यादि इटोनिषेधेऽपित्तादिरिति ङित्वाभावाद्गुणः एषिता एष्टेत्यादौ चागमानित्यत्वात्पक्षे इडभावः ॥ त्यादौ ॥ १ ॥ अत्र यक्चतुर्षु इत्यनुवर्तमाने पुनस्त्यादिग्रहणात्तिवादयोऽष्टादशैव गृह्यंते इत्यभिप्रायेणाह तिबादिष्वष्टादशस्विति अतएव स्यविधेर्ज्ञापकाद्भविष्यति काले तिबादयः स्यपः पकारोङित्वाभावार्थः भविष्यतीति भवतेस्तिबादौस्यपिखिसतासीतीटि स्यपः पित्वादङित्वात् गुणावादेशः भविष्यंतीति अंतौ अदेरित्यलोपः भविष्यामीत्यादि त्रिष्वपिवमोरित्यात्वं यज्स्यते इतीति आत्मनेपदेऽत्र यजेः स्यप्रत्यये नैकस्वरादितीडभावे छशषेति षत्वमित्यर्थः ॥ पढोः ॥ २ ॥ षसयोरकारो मुखसुखार्थः यक्ष्यते इति अनेनात्र षस्यकत्वे किलादितिस्यपःसस्यषत्वे कषसंयोगेक्षः यक्ष्येते इति आदाथइरित्यात इत्वेएत्वं यक्ष्यंतइति अदेइत्यलोपः इत्यादि यक्ष्यसे यक्ष्येथे यक्ष्यध्वे यक्ष्ये यक्ष्यावहेयक्ष्यामहे इति से किं पिनष्टि लेढि ॥ हनृ ॥ ३ ॥ अत्र सामर्थ्याद्दंतोगृह्यते नहिऋमात्रात् स्यबस्ति ऋधातोः तपरकरणानर्थक्यप्रसंगात्तद्दंतग्रहणमत आह ऋकारांतादिति वृत्तौतु गमेश्च स्यपइति काचित्कोपपाठः गमेरननुवृत्तेः तस्यतु नैकस्वरादित्यत्रोदितोवेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेरनात्मनेपदे सर्वत्रेट् सिद्ध्यति गमिष्यति अगमिष्यत् जिगमिषतीति अतएव अस्तावीत् असावीदित्यादिसिद्धिः निपातानामनेकार्थत्वाच्च सर्वत्रापीट् व्यवस्थितवानुवृत्तिरेवकर्तव्या विस्तरभयादिहनोच्यते हनिष्यतीति इतिकृते षत्वं हरिष्यतीति इटिकृते गु-

पुष् पुष्टौ पोक्ष्यति इत्यादि ॥ इति भविष्यत्यष्टमो लकारः ॥ ८ ॥ स्यप् क्रियातिक्रमे ॥ १ ॥ क्रियाया अतिक्रमेकुतश्चिदनिष्पत्तौ सत्यां दिवादिपरः स्यप् प्रत्ययोभवति । यदि सुवृष्टिः सुराज्यं चाभविष्यत्तदा सुभिक्षमभविष्यत् अभविष्यतां अभविष्यन् अभविष्यः अभविष्यतं अभविष्यत अभविष्यं अभविष्याव अभ-

इतिसेट्त्वादिटि षत्वं शयिष्यतइति इट् गुणाय्षत्वानि हास्यतीति हाकः दास्यतीति दाञः उभयत्र नैकस्वरादितिनेट् चेष्यतीति चिञोगुणेषत्वं भोक्ष्यतीति भुजपालनाभ्यवहारयोरस्मात् स्यपिइट् निषेधे उपधायागुणे चोःकुरिति जस्य गकारे खसेचपाइति गस्य कः किलादिति षे कषसंयोगे क्षे रूपं पालयिष्यतीत्यर्थः अभ्यवहारेत्वात्मनेपदं वक्ष्यतइति भोक्ष्यतइत्येव तत्रभवति इत्यादि एषांस्यबंतानां परस्मैपदिनां प्रक्रियाभवातवदात्मनेपदिनामप्येधतिवदन्येषांच एवं रीत्या यथायथंरूपाणि ज्ञेयानीत्यर्थः ॥ स्यप् क्रिया ॥ १ ॥ क्रियायाः अतिक्रमः क्रियातिक्रमस्तस्मिन्नतिक्रमोनामानभिनिर्वृत्तिरनिष्पत्तिरितियावत् सचातिक्रमः कारणंविनानुपपद्यमानोहेतुमाक्षिपति हेतुश्च सापेक्षत्वाद्धेतुमंतं ततश्च हेतुहेतुमद्भावेक्रियातिक्रमे सतिभवति भविष्यतीति च त्यादौभविष्यतीत्यतोनुवर्तते दिवादावडित्यतो दिवादाविति च तदनुवृत्तिसामर्थ्याच्च भविष्यति क्रियातिक्रमेच तद्विधानामिति सर्वमालोच्याह क्रियाया अतिक्रम इत्यादि दिवादिपरइति एवं विधेऽर्थे विहिता ये दिवादयस्तत्पर इत्यर्थः दिवादयः परे यस्मात्तान्वा परयति पराकरोतीति दिवादिपरः विधुरः प्रत्ययोपनिपातः कारणांतरं वैकल्पं वा वैगुण्यं यदीति अत्राभविष्यन् सुभिक्षहेतुभूतं तद्धेतुभूतां वा सुवृष्टिंसुराज्यंच लिंगमनुबुध्य तदनिष्पत्तिं च प्रमाणांतरादवगम्य वक्ता वाक्यं प्रयुंक्ते यदीति एवमन्यत्राप्युक्तं भवतेरत्र दिप्स्यप् अडिट् गुणाव्षत्वानि अभोक्ष्यतेति भुजोत्राभ्यवहारे तनादौ स्यपिनैकस्वरादितीडभावेकुत्वचपषत्वक्षाः प्राह्वालिष्यदिति ह्वलतेरिट्षत्वे ह्वल दीप्तिःदीपनं परस्मैपदीसेट्च अहनि-

त्रिष्याम अभोक्ष्यद्भवान् यद्यागमिष्यत अपक्ष्यद्भवान् यद्यग्निः प्राह्लिष्यत ह्लल दीप्तौ अहनिष्यद्भवान् यद्यशक्ष्यत् शक्ल शक्तौ ॥ इतिक्रियातिक्रमे नवमो लकारः ॥ ९ ॥ भूतेसिः ॥ १ ॥ धातोर्भूतमात्रे सिः प्रत्ययो भवति दिवादिपरः । इकारः सेरिति विशेषणार्थः दिवादावट् अभूमन इति स्थिते ॥ दादेः पे ॥ २ ॥ परस्मैपदे परेदाधास्था

ष्यादिति हंतेरनिटोपि हनृतः स्यप इतीट् अयक्ष्यदिति नैकस्वरादिति इड्निषेधे षत्वे च इत्यादिना एषामपराणि अन्येषांसर्वाण्यपि रूपाणि यथायथमूह्यानि ॥ भूते ॥ १ ॥ अत्र धात्वधिकारात् स्वार्थेगुणीभूतस्य धातोर्विशेषणासंभवात् सामर्थ्यात् भूत इतिधात्वर्थविशेषणंविज्ञायते तत्रापि विशेषानभिधानात् भूतसामान्यंगृह्यते इत्याह धातोर्भूतमात्रइति दिवादिपरइति भूतमात्रे ये विहिता दिवादयस्तत्पर इतिवृत्तौ व्याख्येयं अनुवृत्तिसामर्थ्यादेवास्मिन्नर्थे दिवादयोभवंति अन्यथाहि अनद्यतने भूतविशेषविहितास्तेऽत्र न स्युः ज्ञापकाच्च यदयं सेरिति दिस्योरिडागमं शास्ति तज्ज्ञापयति आचार्यो भवत्यत्र दिवादयः अन्यथाभूतसामान्ये: दिस्योरभावात् कस्येडागमः स्यात् भूतइतिवा सूत्रे योगविभागः कार्य इकार इति अन्यथा सकारमात्रादिडागमोविधीयमानः चकास्तेरपि दिप्यचका इत्यत्रापि स्यात् अर्थवद्ग्रहणपरिभाषया समात्रस्यावयवस्यानर्थकत्वात् अददास्त्वमित्यत्रापि निरनुबंधकग्रहण इति सिलोपो न स्यात् नचव्यतिपूर्वादस्तेः कर्मव्यतिहारे आत्मनेपदेव्यतिस्तेऽत्रलोपो ह्रस्वादितिसलोपः स्यादितिवाच्यं इदमेवहि सग्रहणं तत्राप्यनुवर्ततइति अलुकस्तद्भावात् ह्रस्वांताद्धातोर्विधानाद्वा एवमभवस्त्वमित्यत्राप्यप्रसंगः एवं तर्हि प्रतिपत्तिगौरवापत्तिपरिहाराय विशेषणार्थत्वमिकारस्य दिवादावडिति अर्थभेदेपि कार्यभेदोनाशंकनीय इतिभावः । यद्येवमपृक्तरीत्यवपि प्राप्नोति नैवं सिना बाधितत्वात्तत्रचाचतुर्पु इत्यनुवृत्तेरनद्यतनेतीत इत्येव विहितानां दिवादीनां ग्रहणात् एवंभविष्यतीत्यत्रापि परिहर्तव्यं दादेः ॥ २ ॥ आदिशब्दोयं व्यवस्थार्थः इति दाधास्था इण् गतौ इक् स्मरणे पापाने भू एषांग्रहणं अभूदिति गुणस्तु न भवति नानिटिसे

इण्भूपिबतिभ्यः परस्य सेर्लोपो भवति । अभूद्वृष्टिः अभूतां ॥ भुवः सिलोपे स्वरे वुग् वक्तव्यः ॥ अभूवन् अभूः अभूतं अभूत अभूवं अभूव अभूम अदात अदातां ॥ स्याविदः ॥ ३ ॥ सेराकारांताद्विदश्चोत्तरस्यान उस् भवति ॥ उस्यालोपो वक्तव्यः ॥ अदुः अदातं अदात अदां अदाव अदाम अधात् अधातां अधुः अस्थात् अस्थातां अस्थुः ॥ घ्राशोछोषोधेटां वा सिलोपो वक्तव्यः ॥ अघ्रात् अघ्रासीत् अशात् अशासीत् । यमिरमिनम्याकारांतानामिट् सक्च । अघ्रासिष्टां अघ्रासिषुरित्यादि अछात् अछासीत् अ-

इत्यत्र नेतियोगविभागात्संज्ञापूर्वकस्य विधेरनित्यत्वाद्वा अतएव सूते सुवै सुवावहै सुवामहै वेविजानि नेनिजानीत्याद्यपि सिद्धयति भुवइति वक्तव्योव्याख्येयः सचैवं भुवोवुगित्यत्रोदित्यत्रोदितोवेत्यतो वानुवर्तते सचात्र व्यवस्थितविकल्पार्थः तेनात्रापि स्वरे वुक् सिद्धयति अभूवन्निति सिलोपेवुक् कित्वादंत्यः सेरभावान्नोस् अभूवमिति स्वरेवुक् अदादिति दादः पेइति सिलोपः स्याविदइति अयंभावः किंत्वद्व्युषीत्यत्र द्व्युसीति द्विशब्दोपादानमन्यत्राप्यन उशादेशं ज्ञापयति अन्यथाऽन उसित्युसः द्विरुक्तादेव तथाणबतुसुसित्यपि द्विश्चेति द्विरुक्तादेव वेद विदतुः विदुरित्यस्यलाक्षणिकत्वादेवाग्रहणमितिव्यावृत्त्यभावात् द्विग्रहणमनर्थकंस्यात् ततश्चान उसित्यत्रोर्वे मोवेत्यतो व्यवस्थितार्थ वानुवृत्तेः सेः परस्य तथासिलोपे आदंतादेव तथोत्वे अव्लुकि आदंतादपि अनउसादेशो भवतीति अयमेवचार्थो बालावबोधायोच्यते ॥ स्याविदः ॥ ३ ॥ इति केचित्तु कल्पनागौरवमिदं परित्यज्य वक्तव्यमिदं मन्वते अदुरिति उसोङित्वादातोनपीत्यालोपः अधादिति प्राग्वदेवप्रक्रियेत्यर्थः इण् इतिवक्तव्यो व्याख्येयः तथाहि असादेर्भ्वादिरित्यनपि यथाप्रयोगं इणोविधीय-

सात् असासीत् अधात् अधासीत् इण गतौ ॥ इणः सिलोपो गा वक्तव्यः ॥ अगात् अगातां अगुः इत्यादि अपात् अपातां अपुः ॥ मेटः ॥ ४ ॥ माशब्दे प्रयुज्यमाने अटो लोपो भवति । घट चेष्टायां माघटिष्ट अरे मागा साध्वसं मागा गर्वितमंदिरं स्मयोगेऽपीच्छन्ति एवं स्म भूत् ॥ वर्त्तमानार्थाया अपि विभक्तेःस्मयोगे भूतार्थता च वक्तव्या ॥ आह स्म हारीतः यजति स्म युधिष्ठिरः

माने गादेशः पदद्वयेप्यत्र भवति अतएवात्र सिलोपइत्युपलक्षणं अगादिति दिवादौ सौ गादेशे सिलोपेऽट् अगुरिति प्राग्वद्न उस्यालोपः आत्मनेपदेपि अगायिभवता इणवदिक इति वक्तव्यादिकोप्येवमेव रूपाणि ज्ञेयानि ॥ मेटः ॥ ॥ ४ ॥ अत्र सिंहावलोकितन्यायेन ङित्यदुरिति वक्ष्यमाणात् ङितीतिसंबध्यत इतिमाङोग्रहणं अट इति जातावेकवचनं तेनस्वरादिषु द्वितीयस्यापिलोपः माघटिष्टेति घट चेष्टायां अस्मादात्मनेपदिनः सेटोपि तनादौ सौइटिपरत्वे दिवादावटोलोपः माघटिध्वमिति ध्वेचसेर्लोपः इतिशेषः अरेमागा इत्यादि इणोमध्यमोत्तमयोः प्राग्वत् गादेशसिलोपयोरटोलोपः साध्वसंभयं गर्वितस्य मंदिरं गृहं सर्वत्रात्र सवर्णेदीर्घेणापि सिद्धौ मासंघटिष्ट मानुगाइत्याद्यर्थमटोलोपविधिः तथाचप्रयोगः कालिदासीयोरघुवंशे अलैप्रयत्नेन तवात्रमानुगाइति अत्र से इति योगविभागः कर्तव्यः तत्रभूते सिरित्यनुवर्तते तेनमाङ्योगे धातोर्दिवादिपरे भूतेसिरेवभवति इतिनियमःसिद्ध्यति यथाह भगवान्पाणिनिः माङिलुङिति माभवत्वित्यादेस्तु माशब्दप्रयोगान्निर्वाहः स्मयोगेपीति अटोलोपमितिशेषः अयंभावः ओर्वाहेरित्येव वाशब्दो व्यवस्थितविकल्पार्थः दादेः पे मेटः ओर्वेति त्रयाणांयोगानांशेषः तेन घ्रा गंधोपादाने अघ्रासीत् धेट् पाने अधासीदित्याद्यपि सिद्ध्यति एवममाङ्योगेपि छंदसिबहुलमटो लोपो भवति वर्तमानार्था इति तिबादिरित्यर्थः भूतार्थतेति भूतानद्यतनार्थते-

१ स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षणत्वम् ।

दहति स्म त्रिपुरं हरः ॥ णित्पे ॥ ९ ॥ पे परस्मैपदे परे

त्यर्थः तथाह पाणिनिः लट्स्मेपरोक्षेचेति आहस्मेति ब्रुव आहश्चेति ब्रूतिपोराहरणयोः उवाच अब्रवीच्चेत्यर्थः ॥ णित् ॥ ५ ॥ अत्र भूते सिरनुवर्तते णिदिति तस्यणित्वं विधीयतइत्याह सेर्णिदिति णित्कार्यकृदित्यर्थः णित्त्वादिति धातोर्नामिनः अतउपधाया यथायथंवृद्धिरित्यर्थः अकार्षीत् इतिस्थित इतिकृञोदिवादौ सौ षत्वेच सेर्णित्वाद्वृद्धौ च कृतायामितिशेषः ननुचात्र सिमात्राश्रयांतरंगो गुणो वृद्धिं बाधित्वा स्यात् नचापित्त्वादिरिति ङित्वात्तन्निषेध इतिवाच्यं तादौ सेरपिनिवेशात् अन्यथा अग्रहीदप्राक्षीदित्यादौ संप्रसारणस्यापि दुर्वारत्वात् सिस्योरत्रापि सेरग्रहणदोषप्रसंगाच्च सेर्नियमार्थत्वे त्वस्तोष्टेत्यत्र गुणनिषेधस्य तादवस्थ्यात् सिस्योरित्यत्रैकदेशस्य सेरावर्तितुमशक्यत्वात् गौरवापत्तेश्चोभयनियमार्थस्य त्वस्यदुर्लभत्वात् अस्तु तर्हि गुणः अतउपधायाइति वृद्ध्यापिसिद्धत्वात् अस्तावीत् अलावीदित्यादेरप्येवमेव सिद्धिः अतउपधायाइत्यत्र तूदितोवेत्यतो व्यवस्थितार्थवानुवृत्तेरिडादौ सौपरस्मैपदे हसादेर्लघोरकारस्य अराणीदरणीदित्यादौ पक्षे भवति वृद्धिर्निपातानामनेकार्थत्वान्नित्यंभवति यथा अदालीत् अक्षारीत् अवादीदित्यादौ यथा अग्रहीदित्यादौ ह्यंतक्षणश्वस्जागृहसादीनांन भवति यद्येवं चिनीप्रभृतिभ्यो यङ्लुङंतेभ्यः चिरिजिरिभ्यांच भूतेसौप्राग्वत् गुणे अयादेशेच यांतत्वात् वृद्धिनिषेधे अचेचायीदनेनायीदचिरायीदजिरायीदित्यादि न सिद्ध्यति तस्मात्सौवृद्धिरंतरंगमपि गुणंबाधत इतिवाच्यं एवंचधातोर्नामिनइति नामिग्रहणमप्युपपद्यतइति तत्रैवस्फुटितं रारोऽझसेदृशामित्यत्रतु अश्चआश्चऔ ताभ्यांसहितो र आर तस्यार इतिव्याख्यातव्यं तत्राकाराकाराभ्यामेकतरस्य साहित्यं न भवतीति सामर्थ्यात् प्रत्येकंगृह्यत इत्यरारोः रादेशोविधीयतइति द्रक्ष्यति अद्राक्षीदित्युभयत्रापि गुणवृद्ध्योरादेशः सिद्ध्यति अन्यथा यदि रेफाकारात् ऋकारेणसह ऋ अरित्यारा ऋकारं निर्दिश्य तस्यैवरादेशः क्रियेत तदा अदृक्षातां अदृक्षतेत्यत्रापि प्राप्नोति अर एवं चेदद्राक्षीदित्यत्र न प्राप्नोति सिस्योरिति गुणनिषेधात् अनिटोनामिवत इति वृद्ध्याबाधितत्वाच्च अरएवाभावात् आरोरेफविधानंच दृशादेः सिसद्भावेज्ञापकमपि भवतीति दृश-

सेर्णिद्भवति । णित्वाद् वृद्धिः अकार्षीत् ॥ सेः ॥ ६ ॥ सिश-न्द्रात्परयोर्दिस्योरिडागमो भवति । आविर्पूर्वः आविरकार्षीत आविरकार्ष्टाम् आविरकार्षुः आविर-कार्षीः आविरकार्ष्ट आविरकार्ष्ट आविरकार्षं आ-विरकार्ष्व आविरकार्ष्म । पर्यहार्षीत् निराकार्षीत् । वद् व्यक्तायां वाचि ॥ इट ईटि ॥ ७ ॥ इट उत्तरस्य सेर्लोपो भवति ईटि परे । सेर्लोपः अवादीत अवादिष्टां अवादिषुः व्रज गतौ प्राव्राजीत् ॥ ह्म्यंतक्षणश्वस्जागृहसादिवर्जवृ-द्धिः ॥ ८ ॥ हकारांतान्मकारांतायकारांतात्क्षणश्वस्

पांतादित्यत्र हशिवर्जयित्वेति वक्ष्यमाणमप्येवमुपपद्यते तदेवं साधूक्तं णित्वाद्वृद्धि-रिति ॥ सेः ॥ ६ ॥ दिस्योरिति दिस्योर्हसादित्यतोनुवर्तमानयोः इडागमइति अस्तेरीडित्यतोनुवर्तमानः पृथग्योगकरणंतु सेरेवोत्तरत्रानुवृत्त्यर्थं आविरकार्षीदिति ईटिटित्त्वादादीकृते प्राग्धातोरिति प्रागाविरुपसर्गः अकार्ष्टमिति सेः षत्वेतस्यष्टुत्वं पर्यकार्षीदिति परेःप्राक्प्रयोगः एवंनिराकार्षीदिति निराङोः सेटःपरस्मैपदीच सिप्र-त्ययेति भूतेसिरितिसिः तस्यणित्व इति णित्वम् अट् वृद्धिरिति धातोर्नामिनः इति उकारस्यौकार इत्यर्थः इडागमइति सिसतासीत्यनेन ईडागमइति सेरित्यनेन ॥ इटईटि ॥ ७ ॥ ईइटीतिच्छेदः इश्चइश्चईईटासाहचर्यादागमएव गृह्यत इत्याह इटउत्तरस्येति सेरिति सेरित्यतोऽनुवृत्तस्य लोपइति लोपोहस्वादित्यतोऽ-नुवर्त्त्यदीर्घत्वमिति सिलोपेकृते द्वयोरिडीटोः सवर्णदीर्घत्वमितिभावः अरावीदिति उक्तप्रक्रियायां कृतायामेवंस्यादित्यर्थः इटः इतिकिं अकार्षीत् ईटीति किम् अराविष्टां अराविष्टमिति षत्वष्टुत्वे अराविपुरिति प्रागवदुसिषत्वे अरा-वीरिति प्राग्वदिडीटोः सिलोपेदीर्घः आदिना अराविष्टं अराविष्ट अराविषं अराविष्व अराविष्म अवादीदिति वदेर्दिवादौ सौ तस्यणित्वे अतउपधायाइति नित्यं वृद्धौ ईटीति सिलोपे सवर्णदीर्घः अवादिष्टां अवादिषुरित्यादि ब्रूञ्सेट् परस्मै-पदीच प्राग्वत्प्रक्रिया ॥ ह्म्यंतेति ॥ ८ ॥ ह्म्यंताः हकारमकारयकारांतास्तथा

जागृ हस आदिशब्दाच्छिष्टेभ्यःपरस्यसेर्णित्त्वं न भवति । ग्रह् उपादाने ॥ ईटोग्रहां ॥ ९ ॥ ग्रहादीनां इट ईकारो भवति अणबादौ परे । अग्रहीत् अग्रहीष्टां अग्रहीषुः अग्रहीः अग्रहीष्टं अग्रहीष्ट अग्रहीषं अग्रहीष्व अग्रहीष्म । हस हसने अहसीत् अजागरीत् जागृ निद्राक्षये अश्वसीत् । टुवम् उद्गिरणे अवमीत यम उपरमे अयमीत् ॥ लोपोह्रस्वाज्झसे ॥ १० ॥ ह्रस्वादुत्तरस्य सेर्लोपो भवति झसेपरे । न गुणः अकृत अकृषाताम् अकृषत अकृथाः अकृषाथां अकृढ्वं अकृषि अकृष्वहि अकृष्महि । डुदाञ् दाने अदित अदिषातां अदिषत इत्यादि अधित अधिषातां अधिषतं इङो वागीसौ इङ् अध्ययने अधिपूर्वः अध्यगीष्ट अध्यगीषातां अध्यगीषत

क्षणु हिंसायां श्वस् प्राणने जागृ निद्राक्षये हस हसने इत्यादीन्वर्जयित्वा सौवृद्धिर्भवति व्याख्येयमित्यर्थः तथाच णितप इत्यत्र व्याख्यातमेव आदिना एदितः एयंताः टुओश्वि गतिवृद्ध्योरित्यादिरविहितवृद्धिनिषेधलक्षणो धातुः केचिदविमव्योरप्यत्र ग्रहणमिच्छंति माभवानवीत् माभवान् मवीदिति अग्रहीदिति ग्रहेः प्राग्वत् प्रक्रियायां अतउपधाया इति वृद्धिर्न अग्रहीष्टां अग्रहीषुरित्यादि अत्रेट ईटोग्रहामिति दीर्घो वक्ष्यते एवमश्रमीदित्यादावपि न वृद्धिः प्रक्रियातु दीर्घवर्जं ग्रहिवदेव अजागरीदिति जागर्तेर्वृद्धिनिषेधे गुणेसेरङिन्त्वान्निषेधाभावस्तु णितपइत्यत्रोपपादितः अनेकस्वरादेवसेट् एकस्वरस्यहि नैकस्वरादितिनिषेधः ॥ लोपो ॥ ९ ॥ ॥ १० ॥ अकृतेति सेरत्रलोपो ङरितिनिषेधान्न तद्भावेनापिगुणः अकृषातामिति अनउसपरत्वान्न सिलोपः ङरिति न गुणः अकृषतेति आतोंतोदनतइत्यत् आदिना अकृथा अकृषाथां अकृढं अकृषि अकृष्वहि अकृष्महि आदितेतिदादेरित्यत्र क्तो

अध्यगीष्ठाः अध्यगीषाथां अध्यगीढ्वं ॥ ध्वे च सेर्लोपो वक्तव्यः ॥ अध्यगीषि अध्यगीष्वहि अध्यगीष्महि पक्षे अध्यैष्ट अध्यैषातां अध्यैषत । अध्यैष्ठाः इत्यादि । रु शब्दे सिप्रत्ययादिकं पूर्ववत् वृद्धिरिडागमरीडागमश्च अराविस् इति स्थिते इटईटि इतिसेर्लोप अरावीत् अराविष्टां अराविषुः अरावीः अराविष्टं अराविष्ट अराविषं अराविष्व अराविष्म ॥ झसात् ॥ ११ ॥ झसात्परस्य सेर्लोपो भवति झसेपरे । अपक्त अपक्षातां अपक्षत अपक्थाः अपक्षाथां अपग्ध्वं अपक्षि अपक्ष्वहि

वेत्यतोऽनुवृत्तस्य वाग्रहणस्य निपातत्वात्पूर्वमेव तनादिष्वित्वं पश्चाल्लोपोह्रस्वादिति सिलोपः तस्य च तद्वद्भावेपि नानिट् स इत्यत्र नेतियोगविभागान्नगुणः संज्ञापूर्वकस्यविधेरनित्यत्वाद्वा पूर्वमेवङित्त्वेन प्रतिषिद्धाद्वा एवमदिषतामित्यादावपि न गुणः षत्वं आदिषतेति आतोंतइत्यत् एवमधितेत्यादावपिज्ञेयं इङोवेति एतच्चासादेर्भ्वादिरित्यतोलभ्यते अध्यगीष्टेति इङ् अध्ययन इत्यस्मादनिट आत्मनेपदिनश्च तनादौ सौ वागी आदेशे अटिच घेर्यत्वं नानिट्स इत्यत्र नेतियोगविभागात् गुणेनिषेधे सेः षत्वे तेन ष्टुत्वं अधेश्चात्रनियतः प्राक्प्रयोगः इङिकावध्युपसर्गतो न व्यभिचरत इत्युक्तत्वात् अध्यैष्टेति ग्यादेशाभावेऽत्र सौ पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति पूर्वं दिवादावट् एत्वे स्वरादेरिति द्वितीयेनाटा ऐत्वे पश्चादधिना योगे षत्वे शेषंप्राग्वत् अध्यैषतेति आतोंतइत्यत् अध्यैष्ठाः अध्यैषाथां अध्यैढ्वं अध्यैषि अध्यैष्वहि अध्यैष्महि ॥ झसात् ॥ ११ ॥ अत्रसेरित्यतः सेरितिलोपो ह्रस्वादित्यतो लोपोझसेइति चानुवर्त्ततइत्याह सेर्लोपइत्याह अपाक्षीदित्यत्र दिप्परे सौसेरितीटि णित्प इति णित्त्वाद्वृद्धौ चोरितिकुत्वे षत्वे कषसंयोगे क्षः अपाक्तामिति झसादिति सिलोपे चोःकुत्वं अपाक्षुरिति प्राग्वत् उस् अप्राक्षीदिति पृच्छतेरत्रानिटि छशषेतिषत्वे अतउप-

अपक्ष्महि अपाक्षीत् अपाक्तां अपाक्षुः अपाक्षीः अपाक्तं अपाक्त अपाक्षं अपाक्ष्व अपाक्ष्म अप्राक्षीत् अप्राष्टां अप्राक्षुरित्यादि झसादिति किं ऐधिष्ट ऐधिषातां ऐधिषत ऐधिष्ठाः ऐधिषाथां ऐधिध्वं । ध्वेचसेर्लोपो वक्तव्यः । ऐधिषि ऐधिष्वहि ऐधिष्महि अशयिष्ट अ-

धाया इतिवृद्धौ षढोरितिकत्वे कषसंयोगेक्षः नच वाच्यं छकारस्य द्वित्वेन एकस्य षत्वे अपरस्य विद्यमानत्वादनुपधात्वाद्वृद्धिर्नस्यादिति द्वित्ववत एव छस्यषत्वविधौ व्याख्यानतो ग्रहणात् एवमप्यराङ्क्षीत् षंज संगे असांक्षीदित्यादौ न प्राप्नोति संयोगोपधत्वेनानुपधात्वादेवंतर्हि अनिटोनामिवत इत्यत्राकारप्रश्लेशोद्रष्टव्यः अनामिवतइति अश्च नामिनश्च अनामिनस्तद्धातोर्नामिवतः यद्येवं स्वरवत इत्येवंवाच्यं वैशद्यार्थंच एतावंतोहि स्वरा अवर्णोनामिनश्च मैवं एवंह्युच्यमाने अरौत्सीत् अभैत्सीत् इत्यादावसंयोगोपधाप्राप्तैव स्वरग्रहणस्य चरितार्थत्वादरांक्षीदित्यादौ संयोगोपधस्य वृद्धिर्न स्यादेव नामिग्रहणेतु अरौत्सीदित्यादावपि सिद्ध्यति अपाक्षीदित्यादावसंयोगोपधस्य अतउपधाया इत्यनेनैव सिद्धत्वादिहाकारग्रहणं संयोगोपधार्थमित्यरांक्षीदित्यादौ संयोगोपधस्यापि सिद्ध्यतीति न कश्चिदिहानुपपत्तिलेशोपि संभवति ननु चैवमपि णित्वमेवसिद्ध्यति न पुनर्वृद्धिः अनिटोनामिवत इत्यनेन णित्वस्यैव विधानात् तत्रहि णित्प इत्येवानुवर्तते न पुनर्वृद्धिःसत्यं णित्वविधिसामर्थ्याच्च अतउपधाया इत्यत्र योगविभागः क्रियते तत्रचधातोर्नामिन इत्यतोनामिग्रहणमप्यनुवर्तते तेन धातोर्नामिनो अतश्चवृद्धिर्भवति णितिपरे इतितत्रार्थः स्यात् अत्र नामिग्रहणमुपधानाम्यर्थं अद्ग्रहणं संयोगोपधार्थं अन्यत्र धातोर्नामिन अतउपधाया इत्येवसिद्धत्वात् नचातिव्याप्तिराशंक्या योगविभागस्येष्टासिद्ध्यर्थत्वात् अप्राष्टामिति झसादितिसिलोपे प्राग्वच्छकारद्वयस्य षत्वे ष्टुत्वं अप्राक्षुरिति प्राग्वदन् उसि वृद्धिषत्वकत्वक्षत्वानि शेषमुक्तप्रक्रियमेव

शयिषातां अशयिषत इत्यादि ॥ इरितो वा ॥ १२ ॥ इरितो धातोर्वा ङप्रत्ययो भवति दिवादिपरः सेरपवादः ॥ अरुधत् अरुधतां अरुधन् अरुधः अरुधतं अरुधत अरुधं अरुधाव अरुधाम पक्षे ॥ अनिटो नामिवतः ॥ ॥ १३ ॥ नामिवतोऽनिटो धातोः परस्मैपदे सिप्रत्यये परे वृद्धिर्भवति । अरौत्सीत् अरौद्धां अरौत्सुः अरौत्सीः अरौद्धं अरौद्ध अरौत्सं अरौत्स्व अरौत्स्म अच्छिदत् अछिदतां अछिदन् अच्छैत्सीत् अछैत्तां अछैत्सुः अछैत्सीः अछैत्तं अछैत्त अछैत्सं अछैत्स्व अछैत्स्म अदे-

रोहिष्टेति इहतस्तानादौ सौइति षत्वे ष्टुत्वे वाङ्भ्यामेत्वैत्वे हकारोऽत्र न झसांतर्गत इति न सिलोपः ननु इटोव्यवधानादेवात्र न भविष्यति एवंतर्हि सर्वविधिभ्यो लोपविधिर्बलवान् इति इटः प्रागेवलोपः प्राप्नोतीति प्रत्युदाहर्तुरभिप्रायः न चेटा प्रत्युदाहरणं धातोरित्यधिकारात् एवंसन्निपातलक्षणपरिभाषया वा एवमशयिष्टे-त्यत्रापि गुणः ॥ इर् ॥ १२ ॥ इर् इत् यस्य स इरित् तस्मादिरितः अतएवज्ञाप-कादिति समुदायस्येत्संज्ञाकार्यायेदित्यत्र हि वर्णाधिकारः ङप्रत्ययइति लिटपुषादे-रित्यतोऽनुवर्तमानः अतएव ङित्वविचारस्तत्रैवकरिष्यते दिवादिपरइति सेरपवाद-त्वात् भूतसामान्ये विहिता ये दिवादयस्तत्परइत्यर्थः अरुधदिति प्राग्वदिवादिषु सेरपवादे ङ तस्यङित्वात् क्ङित्यद्व्युसीति न गुणः इत्यादि अभवदित्यादिवत् प्रक्रियेतिशेषः ॥ अनिटो ॥ १३ ॥ अनामिवत इतिछेदः नामिवतइतिछेदे तु गुणदोषौ अनंतरमेव स्पष्टीकृतौ वृद्धिर्भवतीति यद्यपि णित्प इत्यनुवर्तते तथापि णित्वविधेर्वृद्धिफलत्वादेवमुक्तं तत्वतस्तु परस्मैपदेसेर्णिद्भवतीत्यर्थः एतच्चानंतरमे-वोपपादितं अरौत्सीदिति ङप्रत्ययाभावे सौ नैकस्वरादितीडभावः सेरितीट् अनिट इति सेर्णित्वेऽनंतरोक्तेन प्रकारेण वृद्धिः खसेचपाइति धस्य तः अरौद्धा-मिति झसादितिसेर्लोपः तथोरिति तस्य धः झबेजबाइति पूर्वधस्य दः

वीत् अदेविष्टां अदेविषुः षिवु सेवायां असेवीत् असेविष्टां असेविषुः नोक्तमनित्यं दृशिर् प्रेक्षणे अदर्शत् अदर्शतां अदर्शन् अदर्शः अदर्शतं अदर्शत अदर्शं अदर्शाव अदर्शाम अङभावपक्षे ॥ रारोऽझसे दृशाम् ॥ १४ ॥ दृशादीनां अरो रो भवति झसेपरे । अद्राक्षीत् अद्राष्टां अद्राक्षुः अद्राक्षीः अद्राष्टं अद्राष्ट अद्राक्षं अद्राक्ष्व अद्राक्ष्म स्पृश् स्पर्शने अस्प्राक्षीत् अस्प्राष्टां अस्प्राक्षुः मृश् मर्शने पराम्राक्षीत् ॥ सिस्योरनिटोः ॥ १५ ॥ धातोरुपधाया गुणो न भवति अनिटोः सिस्योः परयोः । अभित्त अभित्सातां अभित्सत अभित्थाः अभित्साथां

अरौत्सुरिति प्राग्वदन उस् शिष्टं स्पष्टं अत्र केवलपरस्मैपदोदाहरणप्रदर्शनेनेरितोवेत्यत्र णित्प इत्यतः परस्मैपदानुवृत्तेरात्मनेपदे ङप्रत्ययो नभवतीति सूचितम् अच्छिददिति छिदिर् द्वैधीकरणे इरित्वादिरितोवेतिङ ङित्वान्नगुणः अच्छैत्सीदिति ङस्याभावे अरौत्सीदितिवत् प्रक्रिया अनिटइतिकिमिति इटोव्यवधानात् सेटो न प्राप्स्यतीति प्रश्नः अदेवीदिति इटः सेर्भक्तत्वादव्यवधायकत्वात् प्राग्वा इडागमात् णित्वंप्राप्नोतीतिभावः दीव्यतेरत्र सौ इडीटोः इटीतिसिलोपः गुणः सवर्णेदीर्घः एवं षिवु तंतुसंताने इत्यस्यादेः ष्णः इतिषत्वे असेवीदित्यपिनोक्तमनित्यमिति एतच्चादिस्वरस्येत्यत्र पुषादीत्यत्र च प्रतिपादितं अदर्शदिति दृशिर् इरितोवेतिङेऽत्रउपधालघोरिति गुणोऽर्एवं पुषादित्वात् ङेऋ गतावित्यादेरार् न इत्याद्यपिज्ञेयं ॥ रारो॥ ॥ १४ ॥ रआर्इतिच्छेदः अरइतिच्छेदे दोषस्तु णित्प इत्यत्रोपपादित अद्राक्षीदिति दृशेर्ङभावे सौ इटिनैकस्वरादितीडभावे अनिटोनामित्वतइति णित्वेन गुणं बाधितत्वाद्वृद्धौ आरोरादेशे पुनरतउपधाया इतिवृद्धौ छशषेति शस्यषत्वे षढोःकःसि कत्वे षत्वे च क्षः हशषांतादिति सगभावंतु तत्रैव वक्ष्यामः अद्राष्टामिति प्राग्वद्वृद्धौ

अभिद्धं अभित्सि अभित्स्वहि अभित्स्महि वृतु वर्त्तने अनिटोरिति किं अवर्त्तिष्ट अवर्त्तिषातां अवर्त्तिषत इत्यादि ॥ लित्पुषादेर्ङः ॥ १६ ॥ लकार इद्यस्य स लित्तस्य धातोः पुषादेश्च ङः प्रत्ययो भवति । दिवादिपरः सेरपवादः अगमत् अगमतां अगमन् अगमः अगमतं अगमत अगमं अगमाव अगमाम सृप्लृ गतौ असृपत् असृपतां असृपन् अमुचत् अपुषत् अपुषतां अपुषन्नित्यादि अद्युतत् अद्युततां अद्युतन् । ङे वचेरुमागमो वक्तव्यः । वच् परिभाषणे अवोचत् अवो-

पत्वेष्टुत्वं अद्राक्षुरिति प्राग्वदुस् शिष्टं स्पष्टं स्पृश् आनिट् परस्मैपदीच अस्प्राक्षीदिति अम्राक्षीदित्यादिवत् प्रक्रिया एवं मृशोप्येतादृशो अम्राक्षीदित्यादि सौ गुणो न भवतीति सेरङित्वात् प्राप्तः अङित्वंच णित्प इत्यत्रोपपादितं अनिटोरिति अनिट्ग्रहणं नानिट्स इत्यतोनुवर्त्तन अभित्तेतिभिदेस्तनादौ सौउपधायालघोरिति प्राप्तगुणनिषेधः ततोझसादितिसेर्लोपे खसेचपाइति दस्य तः एवं अभित्सातामभित्सत अभित्थाः अभित्साथां अभिद्धं अभित्सि अभित्स्वहि अभित्स्महि एवमरुद्ध अवित्तेत्यादिज्ञेयं अनिटो किं अवर्तिष्ट ॥ लित्पु ॥ १५ ॥ १६ ॥ लृइत्यस्यासौ लित् पुष् आदिर्यस्यासौपुषादिः लिच्चपुषादिश्च लित्पुषादिः तस्माल्लित्पुषादेरिति द्वंद्वैकत्वेछांदसं पुँस्त्वं आगमानित्यत्वाद्वा न नुम् लिदिति पंचम्यर्थे प्रथमांतं वा पृथगेवपदं पुषादिश्च दिवाद्यंतर्गणो गृह्यते इरितोवेत्यत्र हि वाशब्दउभयोर्योगयोः शेषः सचनिपातत्वादनेकार्थः क्रादयश्चपुषादयो न गृह्यंते द्युतादयश्च पुषादिषु गृह्यंते अस्यत्यादय अस्यतेश्चांतर्गणकार्यं ङे थुगागमः वचेरुमागमः पतेः पुगागमः आस्थत् अवोचत् अपप्तत् इतिज्ञेयंऋदृशोर्ङेगुणः इतिकेचित् शासु अनुशिष्टौ लिप उपलेपे सिच् क्षरणे ह्वेञ् स्पर्द्धायां सर्वत्रात्र णित्प इत्यतः परस्मैपदानुवृत्तेः तत्र नित्यं ङ इदितां जृस्तंभुम्रुचु ग्लुचु म्लुचु ग्रुचु श्वीनांच परस्मैपदेपि वाङ लिपूसिचूह्वामात्मनेपदे वा मृगृप्तासा-

चतांअवोचन् ॥ हशषांतात्सक् ॥ १७ ॥ हकारांताच्छकारांतात्षकारांतान्नाम्युपधादविद्यमानेटोधातोर्दिवादिपरः सक् प्रत्ययोभवति । सेरपवादः दुह् प्रपूरणे अधुक्षत् लिह् आस्वादने अलिक्षत् विश् प्रवेशने प्रोपसर्गः प्राविक्षत् प्राविक्षतां प्राविक्षन् कृष् विलेखने अकृक्षत् अकृक्षतां अकृक्षन्नित्यादि ॥ इतिषड्विभक्तिःकर्त्तुक्तौ ॥ अथ भावकर्मणोरेता विभक्तयो निरूप्यंते ॥ तत्राद्भुवि कर्मणीति नियमादात्मनेपदमेव प्रयुज्यते सुखमनुबभूवे देवदत्तेन अनुबभूवाते अनुबभूविरे अनुबभूविषे अनुबभूवाथे अनुबभूविध्वे अनुबभूवे अनुबभूविवहे अनुबभूविमहे पेचे तेने मन ज्ञाने मेने ददे ष्णा शौचे सस्नेहं सविलासया ग्लै हर्षक्षये जग्ले म्लै गात्रविनामे मम्ले ॥ स्वरांतानां धातूनां हन्ग्रहदृशां भावकर्मणोः सिसतासीस्यपां णिद्वा वक्तव्यः ॥ आशिषि सीष्टादयः णित्वादवृद्धिः सुखमनुभाविषीष्ट भवता अनुभंविषीष्ट

मात्मनेपदेपीङित्यादिसर्वं वाशब्दाद्वेदितव्यं श्रेरङ्द्विश्चेत्यङि प्रकृते ङग्रहणं अङसन्नियोगशिष्टद्वित्वाभावार्थं अङिलघावित्यस्य ग्रहणाभावार्थंच अपित्तादिरिटोवत् ङित्वे सिद्धे पुनर्ङित्करणं भूतेसिः परमिदं न प्रवर्ततइति ज्ञापनार्थमिति गोपायतीत्याये गुणो भवति अनुबंधकार्याणां अनियमाच्चागमदित्यत्र गमांस्वर इत्युपधालोपो न भवति अगमदिति गमेर्लृदित्वात् ङ अपुषदिति ङित्वान्नगुणः अद्युतदिति पुषादित्वात् ङ ङेवचेरिति एतच्चानंतरमेवोपपादितं अवोचदिति वचेर्ब्रूञादेशस्य वापुषादित्वात् ङे उमि मित्वाद्वकारात्परेसति उओइत्योत्वं इत्यादि अभवदित्यादि वद्रूपाणिप्रक्रियाचेतिशेषः ॥ हशः ॥ १७ ॥ इहानिटोनामिवत इत्यनुवर्तते हका-

अनुभाविषीयास्तां अनुभाविषीरन् अनुभाविषीष्ठाः अनुभाविषीयास्थां अनुभाविषीढ्वं अनुभाविषीय अनुभाविषीवहि अनुभाविषीमहि णित्वाभावे गुणः अनुभविषीष्ट अनुभविषीयास्तां अनुभविषीरन् अनुभविषीष्ठाः अनुभविषीयास्थां अनुभविषीढ्वं अनुभविषीय अनुभविषीवहि अनुभविषीमहि शयिषीष्ट शायिषीष्ट देवदत्तेन डुकृञ् करणे अनिट्स्वरांतोयं विकल्पेन इट् कारिषीष्ट कारिषीयास्तां कारिषीरन् कारिषीष्ठाः णित्वाऽभावे कृषीष्ट कृषीयास्तां कृषीरन् स्वस्तने अनुभाविता अनुभावितारौ अनुभावितारः णित्वाऽभावे गुणः अनुभविता अनुभवितारौ अनुभवितारः इत्यादि

रागांतश्च नामिवाननिट् च नास्युपधा एवास्ति नान्य इत्याह नाम्युपधादिति अविद्येति अनिट इत्यर्थः दिवादीति सेरपवादत्वादिति भावः दृशं वर्जयित्वेति एतच्च णित्य इत्यत्रोपपादितं इरितोवेति व्यवस्थितविकल्पार्थो वा शब्दः सिंहावलोकितन्यायेन योगविभागेन वा हशषांतात्सक् नेरङ्श्विश्च लिटयुपदेके इत्येतैरपिसंबध्यते तेन दृशेःसक् न भवति क्रशमृशस्पृशतृपादिभ्यः पाक्षिकोभवति तथा अभवदित्यादावङ् अचोतिष्टेत्यादौ च्लेश्च न भवति भूतेसेः परमपित्तादिरिति न प्रवर्तत इत्यस्यानंतरमेवोपपादितत्वात् सक् कित्करणं अधुक्षदिति दुहदिवादौ सकि कित्वाद्गुणाभावे इडभावे च दादेर्घ इतिहस्य घे आदिजबानामिति दस्यैव खसेचपाइति घस्य के किलादितिपत्वे चाभवदित्यादिवत् प्रक्रिया अलिक्षदिति लिहेर्होढ इति ढत्वे षढोरितिकत्वे प्राग्वत् छशषेति विशःशकारस्येति शेषः षढोरित्यनेनकत्वमित्यर्थः प्राविक्षदिति प्राग्धातोरिति पूर्वं प्रः अक्रुक्षदिति षढोरितिषस्यके शिष्टं स्पष्टं प्राग्वत् ॥ इतिकर्त्रधिकारः ॥ अथेति एताइति

भविष्यति अनुभाविष्यते अनुभाविष्येते अनुभाविष्यंते अनुभाविष्यसे अनुभाविष्येथे अनुभाविष्यध्वे अनुभाविष्ये अनुभाविष्यावहे अनुभाविष्यामहे णित्वाऽभावे अनुभविष्यते अनुभविष्येते अनुभविष्यंते इत्यादि अन्वभाविष्यत अन्वभाविष्येतां अन्वभाविष्यंत अन्वभाविष्यथाः अन्वभाविष्येथां अन्वभाविष्यध्वं अन्वभाविष्ये अन्वभाविष्यावहे अन्वभाविष्यामहे

णबतुसित्यारभ्यैतत्पर्यंता इत्यर्थः तत्रेति तयोर्भावकर्मणोरित्यर्थः अनुबभूवेति अनुपूर्वादनुभवनार्थात्सकर्मकाद्भवतेः कर्मण्याद्भुवि कर्मणीति परोक्षेणबादीनामात्मनेपदेष्वेआते इत्यादिषु कृतेषु द्विश्चेति द्वित्वे आभ्वोरितिपूर्वस्यात्वे ह्रस्वे झपानामिति भस्यबे भुवोवुगिति वुकि चैवंस्यादित्यर्थः कर्मण उक्तत्वात् सुखमितिप्रथमा कर्तुरनुक्तत्वात् देवदत्तेनेति तृतीया अर्थांतरावृत्त्याचाकर्मकस्यापि सकर्मत्वमित्यभिप्रेत्य द्विवचनादावुदाहरति अनुबभूवाते इत्यादि वसादौतु क्रादेर्णादेरिति नियमादिटि मध्यमैकवचने सस्य षत्वं पेचइत्यादि णादिः किदिति किन्त्वाल्लोपः पचामिति सर्वत्र एत्वपूर्वलोपौ एवंतनु विस्तार इत्यस्य तेन इत्यपि ददे इतिददातेरातोनपीत्यालोपः सस्ने इति पूर्वस्यहसादिरिति सस्यशेषे नस्य लोपः कर्मतुधातोरकर्मकत्वात् नोदाहृतं अतएव भावस्यैकत्वादेकवचनमेव भवति प्रथमपुरुषस्य भावस्योक्तत्वाच्चानुक्तेकर्तरितृतीयाहंसविलासयेति हंसस्यविलास इवविलासो यस्याः सा तथाजग्ले इति संध्यक्षराणामित्यात्वे आलोपः स्वरांतानामिति अंतग्रहणमुपदेशप्रतिपत्त्यर्थं तेनोपदेशे ये स्वरांताः तेषां तथा हनादीनां भावकर्मविषये सिसतासीस्यपः तेषां णित्कार्यक्रदिट् वा वाच्य इत्यर्थः अनुभाविषीष्टेत्यादौइटोणित्वाद्धातोर्नामिनइति वृद्धावपि षत्वं अनुभविषीष्टेत्यादि णिदिडभावे सिसतासीटि गुणः एवं शायिषीष्टेत्यादावपि णिदिट्पक्षेवृद्धिः तदभावे

णित्वाऽभावे अन्वभविष्यत अन्वभविष्येतां अन्वभविष्यंत इत्यादि त्वया तत्त्वं यद्यश्रोष्यत अन्वभूतइति स्थिते भूतेसि ॥ इण्तन्यकर्त्तरि ॥ १ ॥ धातोस्तनिपरेकर्तृवर्जितेऽर्थे भावे कर्मणिचेण् प्रत्ययो भवति । सेण्पवादः ॥ लोपः ॥ २ ॥ इण संयोगेतनो लोपो भवति । अन्वभावि भवो भवता द्विवचनादौ वाणिदिट् पूर्ववत् अन्वभाविषातां अन्वभाविषत अन्वभाविष्ठाः अन्वभाविषाथां अन्वभाविढ्वं अन्वभाविषि अन्वभाविष्वहि अन्वभाविष्महि णित्वाऽभावे अन्वभावि अन्वभविषातां अन्वभविषत अन्वभविष्ठाः अन्वभविषाथां अन्वभविढ्वं अन्वभविषि अन्वभविष्वहि अन्वभविष्महि अकारि अकारिषातां अकारिषत इत्यादि पक्षे अकारि अकृषातां अकृषत इत्यादि निराङ् पूर्वः निराकारि हृञ् हरणे अहारि अहारिषातां

धातोः सेट्त्वादिटि गुणःकृपीष्टेति णिदिट्भावे नेकस्वरादितीट् निषेधे उरितिगुणाभावः अनुभाविता अनुभवितेत्यादौ सीष्टवत् वृद्धिगुणौ ज्ञेयौ त्वयायद्यश्रोष्यत तर्हितत्त्वमन्वभाविष्यतेत्येव क्रियातिक्रमे स्यपि शिष्टं स्पष्टं ॥ इण्त ॥ १ ॥ अकर्तरीति पर्युदासात्कर्तुरन्यस्मिन्नर्थे विधिरयमिति मत्वाह भावेकर्मणिचेति सेरपवादइति तद्विषयएवारभ्यमाणत्वात् ॥ लोपः ॥ २ ॥ तनीति सप्तम्यंतमपि पूर्वसूत्रादनुवृत्तमादेशापेक्षयार्थात्षष्ठ्यंतंस्यादित्याह तनोलोपः इति अन्वभावीति इणो णित्वाद्वृद्धौ तलोपः अन्वभाविषातां इत्यादौ सेर्णिदिट्पक्षे वृद्धिः अन्यत्रेटि गुणः

अहारिषत पक्षे अहारि अहृषातां अहृषत इत्यादि अपाचि अपक्षातां अपक्षत अपक्थाः अपक्षाथां अपग्ध्वं अपक्षि अपक्ष्वहि अपक्ष्महि अभोजि अभुक्षातां अभुक्षत अभुक्थाः अभुक्षाथां अभुग्ध्वं अभुक्षि अभुक्ष्वहि अभुक्ष्महि धृञ् धारणे निराङ्पूर्वः निराधारि निराधारिषातां निराधारिषत अधारि अधृषातां अधृषत इत्यादि पद् गतौ प्रतिपूर्वः प्रत्यपादि प्रत्यपत्सातां प्रत्यपत्सत प्रत्यपत्थाः प्रत्यपत्साथां प्रत्यपद्ध्वं प्रत्यपत्सि प्रत्यपत्स्वहि प्रत्यपत्स्महि रण् गतौ अराणि अभाणि अवादि । सेटश्च सेर्णित्वं वा वक्तव्यः । ग्रह् उपादाने अग्राहि अग्राहिषातां अग्राहिषत पक्षे अग्राहि अग्रहीषातां अग्रहीषत इत्यादि णीञ् प्रापणे निर्पूर्वः निरणायि निरणायिषातां निरणायिषत पक्षे निरणायि निरणेषातां निरणेषत इत्यादि

अकारीति कृञोऽत्र इणि वृद्धौ तलोपः अकारिषातामिति स्वरांतत्वाण्णिदिट् अकृषातामिति तद्भावे उरिति न गुणः एवमहारिषातां अहृषातामित्याद्यपिज्ञेयम् अपाचीति णित्वादतउपधायाइति वृद्धिः अपक्षातामित्यादौ चोः कुत्वे सस्य षत्वे क्षः अभोजीति भुजेरिणि उपधागुणः निरवारीति वृञो णित्वाद्वृद्धिः अपत्सातामिति अनिट्त्वात् इण्निषेधे खसेचपाइति दस्य तत्रंसेटश्चेति स्वरांतानामित्यनेन इति शेषः अग्राहिषातामिति स्वरांतानामिति णिदिटि वृद्धिः इटोग्रहामिति दीर्घाभावंतु तत्रैव वक्ष्यामः पक्षेत्वग्रहीषातामित्यादौ सिसतासीतीटिदीर्घः निरणायीति प्रादेश्चेतिणत्वं अनायिषातां अनेषातामित्यादौ णिदिडनिट्पक्षयोः क्रमेण वृद्धिगुणौ सेर्ङित्त्वा-

॥ आतोयुक् ॥ ३ ॥ आकारांताद्धातोर्युगागमोभवति ञिणिणिनिष्परे । अदायि अदायिषातां अदायिषत पक्षे अदायि अदिषातां अदिषत अपायि अपायिषातां अपायिषत पक्षे अपासातां अपासत इत्यादि न्यधायि न्यधायिषातां न्यधायिषत पक्षे न्यधायि न्यधिषातां स्ना शौचे अस्नायि अस्नायिषातां अस्नायिषत ॥ पदादेः कर्त्तर्यऽपीण् वक्तव्यः ॥ पद् गतौ उत्पूर्वः उदपादि उदपत्सातां उदपत्सत उदपत्थाः उदपत्साथां उदपद्ध्वं उदपत्सि उदपत्स्वहि उदपत्स्महि अबोधि अभुत्सातां अभुत्सत अजनि अजनिषातां अजनिषत अवधि अवधिषातां अवधिषत जनिवध्योर्न वृद्धिः ॥ इतिभावकर्मोक्तिः ॥ इदानीं प्र-

भावस्तु णिषेध इत्यत्रोपपादितएव ॥ आतो ॥ ३ ॥ ञिणतीति आदिस्वरस्येत्यतोनुवर्तमानइत्यर्थः अदायीति दाञ् इणियुक न्यधायिषातामिति स्वरांतानामिति णिदिटि युक पक्षे न्यधिषातामित्यादौ प्राग्वदादेरितीत्वे गुणाभावः पदादेरिति इण्तनीति योगविभागात् व्याख्येय इत्यर्थः अपादीति सस्यामितिशेषः अपत्सातां इत्यादाविणिनषेधे चपः अबोधीतिशास्त्रं देवदत्त इतिशेषः अङित्वाद्गुणः अभुत्सातामित्यादौ सौ नैकस्वरादितीणिनषेधे सिस्योरित्यगुणे आदिजबानामिति तत्वे खसेचपाः अजनीति अत्रसंज्ञापूर्वकस्यविधेरनित्यत्वाद्वृद्धिर्न भवतीत्याह जनिवध्योरिति विधिरयमसादेर्भ्वादेरिति विहितो हनादेशः इण्तनीतियोगविभागे इरितोवेति वानुवृत्तेः पक्षे अजनिष्ट अवधीष्टेत्याद्यप्युदाहार्यं योगविभागस्य चेष्टसिद्ध्यर्थत्वान्नातिप्रसंगः । इदानीमिति तिबादिदशकं निरूप्य यङाद्यंतेभ्योपि धातुसंज्ञापूर्वकं तएव निरूप्यंत

त्ययांतेभ्यस्तिबाद्योयोज्यंते ॥ अतिशयेहसादेर्यङ् द्विश्च ॥ १ ॥ हसादेर्धातोरतिशयेर्थे यङ् प्रत्ययोभवति स-तितस्मिन्धातोर्द्विर्वचनम् ॥ यङि ॥ २ ॥ यङिपरेपूर्वस्यनामि-नोगुणोभवति । बोभूय इति स्थिते ॥ सधातुः ॥ ३ ॥ यङा-

इत्यर्थः ॥ अतिशये ॥ १ ॥ द्विश्चेति यद्यपि सामान्येन द्वित्वंविधीयते तथापिधा-तोरेवभवति यङोहि द्विरुच्चारणेनैव सिद्धे द्विश्चेतिव्यर्थस्यात् व्रमजपांनुगिति यङिधातोःपूर्वस्यनुग्विधेर्लिंगाच्चेत्यभिप्रेत्याह धातोर्द्विर्वचनमिति ॥ यङि ॥ २ ॥ विषयसप्तमीयमिति यङ्लुक्यपि भवति पूर्वस्येति पूर्वस्यहसादिरित्यतोनुवृ-त्तस्यगुणः इति निजां गुण इत्यतः नामिनइति अरेदोनामिनइति प्रतीतस्य बोभूयइतिस्थिते भू इत्यस्माद्धातोर्यङिद्वित्वे ह्रपानामिति जवेपरस्य ङ्कित्यद्व्युसीति गुणनिषेधे पूर्वस्य यङीतिगुणः ओकारेकृतेसतीत्यर्थः ॥ सधातुः ॥ ३ ॥ तच्छब्दोयंपूर्वप्रक्रांतयङादिप्रत्ययविशिष्टायाः प्रकृतेःपरा-मर्शार्थः इतिमत्वाह यङादिप्रत्ययांतशब्दइति धातुत्वादिति धातोरित्यनेन

---

१ अथ कथं यङंतादात्मनेपदं भवति कथंच न स्यात् ङितो धातोरात्मनेपदमुच्यते यश्चाऽत्र धातुः न स ङिच्चाऽयं समुदायस्यानुबंधः यश्च ङित्प्रत्ययो नासौधातुः यत्र चावयवे कृतं लिंगमचरितार्थं तत्र समुदायस्य विशेषकं भवति अयं ङकारस्तु बेभिद्यते इत्यादौ गुणनिषेधादौ चरितार्थः कश्चिदाह क्रियासमभिहारेऽयङित्यकारोऽत्र प्रश्लिष्यते स चानुदा-त्तोऽनुनासिक इतिज्ञायते तत्रानुदात्तत्वमवयवेऽचरितार्थं समुदायस्य विशेषकं भवति अनुदात्तेतश्च हलादेरिति युक् न भवति चंक्रम्येत्यत्र चंक्रम्य–दंद्रम्य–ग्रहणाल्लिंगादिति स वक्तव्यः अथ कथं ऋतेरियङंतादात्मनेपदं भवति सोपि हि ङकारो गुणनिवृत्तौ चरितार्थ इति स चेत् ब्रूयात् तस्याप्यादित इकार ईकारो वाऽनुदात्तः प्रश्लिष्यत इति प्रतिब्रूयादिति चेन्न इकारे नुम्प्रसज्येत ईकारेश्वीदितो निष्ठायामितीण्निषेधः स्यादिति नैष दोषः नुम्विधौ गोः पदांत इत्यतोऽतग्रहणमनुवर्तते नाते इकार इत्संज्ञको येषां तेषां नुम् श्वीदितो निष्ठा-यामित्यत्राप्येकाच इत्यनुवर्तते सत्यं प्रतिविदितमायुष्मतां मुधा पुनरयं प्रयासः ।

दिप्रत्ययांतःशब्दोधातुसंज्ञोभवति । धातुत्वात्तिबादयः ङानुबंधत्वादात्मनेपदं अप्कर्त्तरि अदेइत्यकारलोपः अतिशयेनभवतीति बोभूयते बोभूयेते बोभूयंते बोभूयसे बोभूयेथे बोभूयध्वे बोभूये बोभूयावहे बोभूयामहे भुज् पालनाभ्यवहारयोः । बोभुज्यते मुह् वैचित्ये मोमुह्यते लिह् आस्वादने लेलिह्यते जोहूयते विद् ज्ञाने वेविद्यते ॥ आतः ॥ ४ ॥ यङिसति पूर्वस्याकारस्यचाकारादेशो भवति डुपचष् पाके पापच्यते पठ व्यक्तायांवाचि

तिबादय इत्यादिना यात् तुप् दिप् णप् यात् ता इत्यादयो दशापिगृह्यंते ङकारेति यङ्इतिशेषः शेषंतु आदनुदात्तेत्यत्रैवविचारितं अप्कर्तरीति अनेनाबितिशेषः अदेइत्यकारे परे सर्वत्र यङोकारलोपः उच्चारणंतु अटाट्यत इत्यादौ द्वित्वार्थं अतिशयेनेति केचित्तु पौनःपुन्यमप्यातिशयं मन्वानास्तत्र यङं विदधति अपरेतु क्ताबित्यतोऽनेकार्थवाशब्दानुवर्तनात् पौनःपुन्येति गत्यर्थात् कौटिल्य एव लुपादिभ्योधात्वर्थगर्हायामेव सर्वत्रापिच पक्षेवाक्यमपि भवतीत्याहुः बोभूयतइति उक्तप्रक्रियायां कृतायामेवं स्यादित्यर्थः बोभूयेते इति आदाथइरितीत्वे एत्वं बोभूयंतइति अदेइत्यलोपः बोभूयसइत्यादि एधसे इत्यादिवत् प्रक्रियाज्ञेया बोभूयते बोभूयतां अबोभूयत बोभूयांचक्रे बोभूयिषीष्ट बोभूयितासे बोभूयिष्यते अबोभूयिष्यत अबोभूयिष्ट बोभुज्यतइति भुजेर्द्वित्वादिपूर्ववत् बोभुज्येत बोभुज्यतां अबोभुज्यत बोभुजांचक्रे यतइति यलोपं वक्ष्यति बोभुजिषीष्ट बोभुजितासे बोभुजिष्यते अबोभुजिष्यत अबोभुजिष्ट सर्वत्राऽनेकस्वरत्वात् यङंतस्येटियलोपः मुहेति वैचित्यं मोहः लेलिह्यतइति लिह् आस्वादन इत्यस्य जोहूयत इति हु दानादनयोरित्यस्य येइतिदीर्घः वेविद्यत इतिविदः रूपं ॥ आतः ॥ ४ ॥ आ अतइतिच्छेदः तत्रात इतिपूर्वस्य हसादिरित्यतोऽनुवृत्तस्यपूर्वस्येत्यस्य विशेषणं तत्राकारमात्रं पूर्वरूपं नास्ति इतिसामर्थ्याददं-

पापच्यते । स्वरादावटादीनांयङ्वक्तव्यः ॥ स्वरादेः परः ॥ ॥ ५ ॥ स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति अट गतौ अतिशयेन अटतीति अटाट्यते धृष्टः अश् भोजने अशाश्यते ऋ गतौ अरार्यते ऊर्णुञ् आच्छाद-

तंपूर्वरूपं गृह्यते अतएव यंयम्यत इत्यत्र नुकिकृतेनाकारः पूर्वतुनुका बाधितत्वान्न भवति यङीति यङीतिसूत्रेऽतोनुवर्तते पापच्यतइति आत्वविधिसामर्थ्यान्न ह्रस्वः अतिशयेन पचतीत्यर्थः पठेतिव्यक्ता मनुष्यवाक् स्वरादावित्यद्र अशूरूर्णुसूचिसूत्रिभ्य इत्यादिशब्दाज्ज्ञेयः सूच्यादीनामत्रग्रहणंतु पूर्वेणयङेकस्वराद्विधीयतइति ज्ञापनार्थं ॥ स्वरा ॥५॥ स्वरआदिरस्यासौ स्वरादिस्तस्येतिधातुविशेषणमिदमिति मत्वाहस्वरादे-र्धातोरिति अथवा स्वरादेरिति कर्मधारयात्पंचमी स्वरश्चासौ आदिश्च स्वरादिस्तस्मा-त्स्वरादेः अत्रपक्षे धातोरादेः स्वरात्परइति वृत्त्यर्थोव्याख्येयः परग्रहणंतुविस्पष्टार्थं पंचम्येवप्रतीतेः यत्रवा आदेः स्वरात्परा नदराः संयोगादयो भवंति तत्रतेभ्यः परस्य द्वित्वार्थं उंदिदिषति अंदिदिषति अर्चिचिषति एतच्चप्रयोगाद्विवेच्यं पूर्वद्विवचनाप-वादोयमितिप्रथमद्विवचनमत्र नप्रवर्तते परशब्दार्थमाह द्वितीयोऽवयवइति द्वितीय इत्युपलक्षणं बाल्यात्परं वृद्धत्वमितिवत् व्यवहितेपि परशब्दस्य वृत्तेः पर इतियोग-विभागात्तृतीयश्चतुर्थोपीत्यर्थः कंडूयिषति पुत्रीयिषति अशिश्वीयिषति दिद्रियिषति अद्विरुक्तइत्यादि एतच्च सस्वरआदिरित्यनुवृत्तेर्लभ्यते अटाट्यतइति स्वरादावटादीना-मित्यट् गतावित्यस्माद्यङिद्वित्वेच स्वरादेरिति ट्यशब्दस्यकृते पूर्वस्येति यङोऽकारेण सह टशब्दस्यशेषेयलोपे आतइति पूर्वस्यात्वे सधातुरिति धातुत्वात्तिबाद्यात्मनेपदेषु पूर्ववत्प्रक्रिया धृष्टोविपातः अशाश्यतइति अशूङ् व्याप्तौ अश् भोजन इत्युभयोरपि प्राग्वत् अरार्यतइति ऋ गतावित्यस्माद्यङि क्ङित्यद्व्युसीत्यस्मान्नित्यत्वा द्गुणेर्यश-ब्दस्य द्वित्वं रेफस्य तु द्वित्वनिषेधो यकारपरस्य न भवति प्रयोगशरणत्वादस्यशास्त्रस्य

ने ऊर्णोनूयते ॥ ञमजपांनुक् ॥ ६ ॥ ञमांतस्य जपादीनांच पूर्वस्य नुगागमो भवति यङि सति । जंगम्यते तुरगः भ्रमु चलने बंभ्रम्यते जंहन्यते । आदेशिना आदेशो निर्दिश्यते । हंतेर्हिंसायांघ्नीवक्तव्यः । जेघ्नीयते दंदह्यते दह भस्मीकरणे जपजल्प व्यक्तायांवाचि जंजल्पते पंपश्यते यभ मैथुने यंयभ्यते दंश दशने ॥ नोलोपः ॥ ७ ॥ धातोरुपधाभूतस्य नकारस्य लोपोभवति । दंदश्यते दंदश्येते दंदश्यंते मशकाः भंजो आमर्दने बंभज्यते मत्तो दंती तरूनित्यादि ॥ चरफलोरुच्चास्यकिति ॥ ८ ॥ चरफलोर्यङि पूर्वस्य नुगागमो भवति अकारस्योकारः । चंचूर्यते पंफु-

॥ ञम ॥ ६ ॥ ञमेति प्रत्याहारः जपामिति बहुवचनं जपादिप्रतिपत्त्यर्थमित्यत आह ञमांतस्येति पूर्वस्येति कृतेद्वित्वे पूर्वरूपस्येत्यर्थः एतच्च पूर्वस्यहसादिः शेषइत्यतोनुवृत्तेर्लभ्यते यङिसतीति यङीत्यतोऽनुवृत्तेश्च जंगम्यतइति नुकिनश्चेत्यनुस्वारेकृते कचित्पदांतताश्रयणीयेति पदांतत्वात्पक्षे यमायपस्येति यमोङः योल्पीयस्य ध्वनिगता गतानिकरोति सकुटिलांगतिं संपादयन्नेव मुच्यते जंघन्यत इति गतौहंतेर्यङ् यथात्रघत्वंस्यात्तथाहनोघ्नइत्यत्रोपपादितं ततोझसपरत्वादनुस्वारः हंतेरिति एतच्चाधिकाराद्यङ्विपयमेव जेघ्नीयतइति पूर्वघ्नीभावे ततोद्वित्वेयङीति पूर्वस्यगुणएकारः यंयभ्यतइति यभतेर्यङि द्वित्वे जपादित्वात् पूर्वस्यनुक् अझसपरत्वादनुस्वारप्राप्तेराह आदेशिनेति आदेशोयस्यास्तीत्यादेशीस्थानी नुकोनकारः तेनादेशोनुस्वारः अमिति निर्दिश्यते सूत्रकृतासूत्रेऽनुस्वारो दुरुच्चारइति तदुपलक्षणार्थं नकारोनिर्दिष्टइति भावः ॥ नो ॥ ७ ॥ उपधाभूतस्येति उपाधायालघोरित्यनुवृत्तेः उपधाभूतः प्राप्तः इत्यर्थः भूप्राप्ताविप्यस्य क्तांतं भूत इतिरूपं क्ङित्यद्व्युसीत्यतोऽनुवर्तते दंदश्यतइति दंशेर्यङि नलोपे द्वित्वे पूर्वस्य जपादित्वान्नुक्यनुस्वारे पदांतत्वमाश्रित्य पक्षे यमो न दंती हस्ती तरून्वृक्षानतिशयेन भुनक्तीत्यर्थः ॥ रीगृदुपधस्येति

त्यते ॥ रीगृदुपधस्य ॥ ९ ॥ ऋदुपधस्य धातोर्यङि सति पूर्वस्यरीगागमो भवति । नृती गात्रविक्षेपे नरीनृत्यते नटः वृतु वर्त्तने वरीवृत्यते वार्त्तासु चित्तं । पद् स्रंस् ध्वंस् भ्रंस् वञ्च् कस् पत् स्कंदां यङि सति पूर्वस्यनीगागमो वक्तव्यः ॥ पद् गतौ इदं नोपपनीपद्यते स्रंस्ध्वंस् अधःपतने सनीस्रस्यते दनीध्वस्यते वंच् गतौ कौटिल्ये च वनीवच्यते कस् हिंसायां चनीकस्यते भ्रंस् पतने बनीभ्रश्यते पत्लृ पतने पनीपत्यते स्कंन्दिर् गतिशोषणयोः चनीस्कद्यते ॥ ऋतोरि ॥ १० ॥ ऋकारांतस्य धातोरि आदेशो भवति यङि सति । पश्चाद्द्विर्वचनं किक्रियते इति स्थिते पूर्वस्यहसादिशेषः चुत्वं गुणः येदीर्घः अतिशयेन करोतीति चेक्रीयते हृञ् हरणे जेह्रीयते वृञ् संवरणे वेव्रीयते मृङ् प्राणत्यागे मेम्रीयते डुदाञ् दाने दादे-

॥ ८ ॥ ९ ॥ रीगृदुपधा यस्यासौ ऋदुपधस्तस्यपूर्वरूपस्येति पूर्वरूपस्येत्यर्थः नृती गात्रविक्षेपे विक्षेपो नर्तनं नरीनृत्यत इति अतिशयेन नृत्यतीति यङ्द्वित्वेर इति पूर्वस्यात्वे रीक् पदेति दनीध्वस्यत इति नो लोपः इति नलोपः इत्यादिना वनीभ्रस्यते वनीवच्यते चनीकस्यते पनीपत्यते चनीस्कद्यते ॥ ऋतो ॥ १० ॥ पश्चादिति परत्वान्नित्यत्वाच्चेति भावः द्विर्वचनंतु पूर्वं ऋदंतस्य प्राप्नोति पश्चादिदंतस्येति शब्दांतरप्राप्त्या अनित्यं पूर्वस्येति अनेन ककारशेष इति भावः चुत्वमिति कुहोश्चुरित्यनेन गुण इति यङीति पूर्वस्यैकारः इत्यर्थः येदीर्घ इति यङ्पकारेपरे इतिशेषः विचारविशेषस्त्वयकीत्यतोवगंतव्यः चेक्रीयतइति उक्तप्रक्रियायां कृतायामेवंस्यादित्यर्थः जेह्रीयतइति अतिशयेन हरतीत्यर्थः वेव्रीयत इति अतिशयेन वृणोति वृणुते

रिनीकारादेशे कृते पश्चाद्द्विर्वचनं देदीयते पेपीय्-ते । घ्राध्मोरीयङिवक्तव्यः । जेघ्रीयते ध्मा शब्दाग्निसंयोगयोः देध्मीयते ॥ इति यङन्तप्रक्रिया ॥

वान्यत्र ॥ १ ॥ लुगनुवर्त्तते । अन्यत्रेत्यूकप्रत्ययसंयोगं विनापिवायङोलुग्भवति ॥ अनपिचहसात ॥ २ ॥ हसादुत्तरस्ययङोलुग्भवति अनपि विषये लुकि सति । पितितिस्मि वा ईकारो वक्तव्यः द्वेः स्वरे ॥ ३ ॥

वेत्यर्थः प्रक्रिया तु प्राग्वत् दादेरितीति परत्वान्नित्यत्वाच्चेति शेषः द्विवचनं तु प्राग्वदनित्यं देदीयते पेपीयते इति अतिशयेन ददाति पिबतिवेत्यर्थे दापोयाङि दादेरितीत्वे यङीति पूर्वस्य गुणे यइतिदीर्घः ॥ वान्य ॥ १ ॥ लुगनुवर्त्तते इतिलुगिति सूत्रादितिशेषः अन्यत्रशब्दार्थमाह उकप्रत्ययेतिपूर्वं हि यायजूक इत्यादौ लुगिति सूत्रेण उकप्रत्यये यङोलुगुक्तः ततोऽन्यस्मिन्नपीत्यर्थः अतएव परीमृज इति पचादेरपिलुग्भवति लुकीति त्सीति तकारसकारमकारादौ पितीत्यर्थः द्वेः स्वर इति एतच्च नानिट्स इत्यत्र नेति योगविभागाल्लभ्यते यङ्लुङंतमिति ह्वादिवत्वातिदेशोऽपोलुगर्थः द्वित्वंतुयङ्लुकः स्थानिवत्वेनापि सिद्ध्यति लुक्यपि कचित्तन्निमित्तंभवतीति तु इयं स्त्रियामित्यत्रोपपादितं केचित्तु द्वित्वमपि ह्वादित्वातिदेशादेव मन्यंते उभयथा यङीत्यादीनि तुकार्याणि विषयसप्तमीनिर्दिष्टानीति भवंत्येव संबोभवीति ईकाराभावे प्राग्वत् संबोभूत इति अपित्तादिरिति ङित्वात् क्ङितीति न गुणः संबोभुवतीति द्वेरित्यति नुधातोरित्युव् य्वौ वेति वानुवृत्तेर्वा न संबोभवीषि सादौपितीकारेषत्वं इत्यादि संबोभोषि संबोभूयात् संबोभवामि संबोभोमि संबोभूवः संबोभूमः संबोभूयातां सम्बोभूयुरित्यादि संबोभवीतु संबोभोतु संबोभूयात् संबोभूहि संबोभवानि समबोभवीत् समबोभोत् समबोभवुः अन उसित्युसिगुणनिषेधस्तु अद्व्युसीत्युक्तेर्न समबोभवं संबोभवाञ्चकार केचित्तु आमनेच्छंति तन्मते धातुग्रहणे यङ्लुकिवेति केचिदिति संबोभूवेति बुकि तदभावे च वृद्धौ सं-

द्विरुक्तस्यधातोः पिति स्वरेपरे उपधाया लघोरिति प्राप्तोगुणो न भवति। यथा बोभुजीति अबोभुजं हसादौ तु बोभोक्ति यङ्लुगंतपरस्मैपदं ह्वादिवच्च द्रष्टव्यं पापचीति पापक्ति पापक्तः पापचाति पापचीषि पापक्षि पापक्थः पापक्थ पापचीमि पापच्मि पापच्वः पापच्मः वद् व्यक्तायांवाचि अतिशयेन वदतीति वावदीति वावत्ति वावत्तः वावदति वावदीषि वावत्सि वावत्थः वावत्थ वावदीमि वावद्मि वावद्वः वावद्मः घट चेष्टायां संपूर्वः संजाघटीति संजाघट्टि संजाघट्टः संजाघटति संजाघट्सि संजाघटीषि संजाघट्ठः संजाघट्ठ संजाघट्मि संजाघट्वः संजाघट्मः भू सत्तायां संपूर्वः संबोभवीति संबोभोति संबोभूतः संबोभुवति संबोभवीषि संबोभोषि संबोभूथः संबोभूथ संबोभवीमि संबोभोमि संबोभूवः संबोभूमः। ऋकारांतानां ऋदुपधानां च यङि लुकि सति पूर्वस्य रुग्रिग्रीगागमो वक्तव्यः। चर्करीति चरिकरीति

बोभावेत्यादिज्ञेयं संबोभूयात् संबोभविता संबोभविष्यति समबोभविष्यत् समबोभवीत् समबोभविष्टां समबोभविषुरित्यादिज्ञेयं पापचीति पापक्तीति आतइति पूर्वस्यात्वं पाक्षिकं चोःकुत्वं पापक्षीति इकाराभावे चोःकुत्वेषत्वेच कषसंयोगे क्ष आदिना पापच्यात् पापचीतु पापक्तु पापग्धि अपापचीत् अपापक् दिस्योर्हसाद्विति लुक् पापचांचकार पापच्यात् पापचिता पापचिष्यति अपापचिष्यत् अपापचीदित्यादि प्रयोगानुसाराज्ज्ञेयं एवं वावदीति वावत्तीत्याद्यपिज्ञेयं संजाघटीति ष्टुत्वं ऋकारांतानामिति पूर्वस्येतिद्वित्वेकृते पूर्वरूपस्येत्यर्थः चर्करीत्यादि ईकारपक्षे पूर्वस्यचुत्वे रइत्यत्वे रुगादयः। तद्विधिसामर्थ्याच्च गुणो न भवति रिक्रीकोर्भेदेनोपपादनाच्च चर्कर्तीति इकाराभावे प्राग्वत्

चरीकरीति चर्करीति चरिकर्ति चरीकर्ति चर्कृतः चरि-कृतः चरीकृतः चर्कृति चरिकृति चरीकृति चर्कर्षि च-रिकर्षि चरीकर्षि चर्कृथः चरिकृथः चरीकृथः चर्कृथ चरिकृथ चरीकृथ चर्कर्मि चरिकर्मि चरीकर्मि चर्कृवः चरिकृवः चरीकृवः चर्कृमः चरिकृमः चरीकृमः वृतु वर्त्तने वर्वृतीति वरिवृतीति वरीवृतीति वर्व-र्त्ति वरिवर्त्ति वरीवर्त्ति इत्याद्यूह्यम् ॥ इति यङ्लुगंत-प्रक्रिया ॥ कर्त्तुर्यङ् ॥ १ ॥ कर्त्तुरुपमानादाचारार्थे यङ् प्र-

एवमृदुपधस्य वर्वृतीति इत्यादौ प्राग्वद्रुगादिष्वीकारपक्षे ह्रस्वरइति नोपधागुणः दिपितु ईकाराभावे दिस्योर्हसादिति लोपेगुणे अवर्वर्तदित्यादौ संयोगान्तलोपाभावस्तु तत्रैवोपपादितःइत्यादिप्रयोगानुसाराज्ज्ञेयम् ॥ २ ॥ ३ ॥ इतियङ्-लुगंताः ॥ कर्तुः ॥ १ ॥ आचारउपमानादित्यतः आचारइत्यनुवर्त्तत इति तदपेक्ष्य ततोऽनुवृत्तस्योपमानस्य कर्तृत्वं विज्ञायत इत्याह कर्तुरुपमानादिति उपमीयते अनेनेति उपमानं श्येनादि उपमीयत इत्युपमेयं काकादि । ङकार आत्मनेपदार्थः श्येनायतइति श्येनशब्दाद्यङियेइतिदीर्घे सधातुरिति धातुत्वात्तिबाद्यात्मनेपदेपि अदेइत्यलोपे एधवत्प्रक्रिया एवंपंडित इवाचरति पंडितायत इत्यपि यङीति कर्त्तुरितिशेषः अत्रकर्तुरित्यर्थात्षष्ठ्यासचषष्ठीनिर्दिष्टस्येत्यंतस्य भवन् सांते-पर्यवस्यति अप्सरायतइति अप्सरसइवाचरतीति यङिसलोपे दीर्घः एवमोजायतइत्यपि ओजःशब्दोवृत्तौ तद्वतिवर्तते पयःसरस्वति पयायतइति सलोपपक्षेसेदीर्घः पयस्यतइति सलोपाभावे व्यवधानान्नदीर्घः उभयत्रापि तक्रंपय इवाचरतीत्यर्थः अत्रोदाहरणपर्यालोचनया ओजोप्सरसोर्नित्यंपयसो वासलोपोनेत्यस्य यशःप्रभृत्याचार्याणामभिप्रायो लक्ष्यते पदमंजरीकारस्तु पयोग्रहणं सकारांतोपलक्षणार्थं मन्यते यशायते यशस्यत इत्युभयमप्युदाहरन्सलोपो वा ओजोप्सरसोर्नित्यमिति रचयंत वार्तिककार-

त्ययो भवति काकः श्येन इव आचरति श्येनायते पंडितायते मूर्खः । यङि सलोपो वक्तव्यः । अप्सरायते कुरूपा ओजायते दुर्बलः पयसस्तु विभाषया पयायते पयस्यते वा तक्रम् ॥ आचार उपमानात् ॥ २ ॥ उपमानाद्यः प्रत्ययो भवति आचारेऽर्थे अकारस्येकारो भवति । पुत्रीयति शिष्यमुपाध्यायः प्रासादीयति कुट्यां भिक्षुः ॥ इतियङादिप्रक्रिया ॥ इच्छायामात्मनः सः ॥ १ ॥ धातोरिच्छायामर्थे सप्रत्ययो भवति सा चेत्स्वसंबंधिनी द्विश्च । भवितुमिच्छति बुभूषति बुभूषतः बुभूषंति इत्यादि भव-

मनुसरति अत्रयङीति योगविभागः कर्त्तव्यः तेनार्थांतरेपि यङ्भवति तथार्थांतरं प्रयोगादवगंतव्यं तथाहि अभृशो भृशोभवति भृशायते लोहितायते पटपटायते कष्टायकर्मणि क्रमते कष्टायते रोमंथं वर्तयति रोमंथायते बाष्पमुद्वमति बाष्पायतइत्यादि तथा क्योवेत्यतो वाग्रहणमनुवर्त्तते नाम्नोय इति च तेनलोहितायतीत्यपि भवति अत्रायप्रत्यय इति नाम्नोय इत्यतोनुवर्त्तमानः पुत्रीयतीति पुत्रमिवाचरतीत्यर्थः ॥ आचारेति ॥ २ ॥ आचारक्रियायाः प्रत्ययार्थत्वात्तदपेक्षयैवोपमानस्य कर्मता यप्रत्यये समासप्रत्यययोरित्यमो लुक् सधातुरिति धातुत्वादत्र तिबादिषु परतोन्यदिति परस्मैपदं प्रासादीयतीति प्रासाद इवाचरतीति अत्रकुट्यामित्युपसमीपे सप्तमीश्रवणादुपमानादपि सप्तम्यंतात् यः सामान्यविहितोपि यः प्रत्ययः प्रयोगवशात् कर्माधिकरणाभ्यामेव भवति ॥ इच्छायां ॥ १ ॥ अत्रधातोरित्यधिक्रियत इत्याह धातोरिति इच्छायामित्यर्थनिर्देश इत्याह इच्छायामर्थइति आत्मनः इति च प्रकृत्यर्थविशेषणं कर्मणिषष्ठीयं तेन सप्रकृतेर्धातोर्थे कर्त्राइष्यमाण इत्यर्थः संपद्यते एवंच इच्छतेः कर्मभूतो धातुः प्रकृतिंपर्यवस्यति इत्यभिप्रेत्याह साचेदिति स्वसं-

१ भवनेनेच्छतीत्यत्रापि सोऽस्तु करणस्याऽपि क्रियायामपेक्षणादिति चेन्न वैषम्यात्कर्मेति प्रथममपेक्षणादंतरंगमव्यभिचाराच्च करणं तु विपरीतं अंतरंगेणैवविधेराकांक्षापूर्तौ बहिरंगे प्रवृत्तिरयुक्ता किं चाऽनभिधानादपि न ।

निवृत्त्र्ज्ञेयं ॥ वृ:से ॥ २ ॥ उश्च ऋश्च वृ तस्मादुवर्णांतादृव-र्णान्ताच्च ग्रहगुहोश्च से परे इडागमो भवति ॥ नानिटिसे ॥३॥इड्वर्जिते सप्रत्यये परे धातोर्गुणो न भवति॥से दीर्घः॥४॥

त्वीनिर्णीति यस्मात्सप्रत्ययोभवति तदर्थसंबंधिनी इच्छाचेद्भवतीत्यर्थः ननु चैवमपि देवदत्तस्य भोजनं इच्छति यज्ञदत्त इत्यत्रापि नैष दोषः इह हि सिंहावलोकितन्या-येन वक्ष्यमाणात्कर्तुर्यङ् इत्यतः कर्तुरित्यभिसंबध्यते साचकर्मषष्ठी व्याख्यायते एकत्वं चात्रविवक्ष्यते ततश्चैकस्य कर्तुः पक्षे एकेन कर्त्रा आत्मनइच्छायां प्रकृत्यर्थे इष्यमाणइत्यर्थोभवति इह तु भुजेः कर्त्ता देवदत्तः यज्ञदत्तश्चेच्छतेरिति कर्तृभेद इति न भविष्यति तथाह भगवान्पाणिनिः धातोः कर्मणः समानकर्तृकादिच्छायां वेति द्विश्चेति एतच्चातिशये हसादेर्यङ् द्विश्चेत्यतोऽनुवर्तते तेन सति तस्मिन्धातोर्द्वि-वचनमित्यर्थः अत्रच द्विश्च चकारः पूर्वतः आदनुदात्त ङितः निविशादेः ञित्स्वरि-तेतउभे परतोन्यदितिच सर्वमाकर्षतितेनसप्रत्ययांतादनुदात्तेतोङितश्च निविशादेश्चा-त्मनेपदं भवति ञित्स्वरितेतश्च सप्रत्ययांतादुभयपदं भवति अन्यतः सप्रत्ययांता-त्परस्मैपदंभवतीत्यर्थोऽवगम्यते अतएव तथोदाहरिष्यति तथाचाह पाणिनिः पूर्ववत्सनइति बुभूषतीति क्त्वोवेत्यतो वानुवृत्तेः पक्षेवाक्यमपि भवति अथभवितु-मिच्छतीत्यर्थः इच्छतेः कर्मभूताद्भवतेः सप्रत्ययेद्वित्वे पूर्वस्यह्रस्वे झपानामितिबत्वे षत्वे सिसतासीतिप्राप्तमिटं निषेधति ॥ वृःसे ॥ २ ॥ अत्रवुरित्युवर्णऋवर्णयोर्ग्रहण-मित्याह उश्चेति तस्मादिति अनेन ङसेरस्य ऋतोङउरित्युत्वे टिलोपः सूचितः ग्रहगु-होश्चेति अनेनसूत्रे सइति योगविभाग उदितोवेत्यतोऽनेकार्थवानुवृत्तेरत्रापि यथाप्रयो-गमिटोनिषेधः सूचितः न भवतीति नैकस्वरादित्यतोनिषेधोऽनुवर्तते अनिटस्तेनैव सिद्धेः सेडर्थमिदं वुरितिकिं शिशयिषते ॥ नानिटीति ॥ ३ ॥ सस्यविशेषणमित्याह इड्वर्जित इति अविशेषादंत्योपधालक्षणो द्वितीयोपि निषिध्यते अतएव बुभूषति बि भित्सतीत्युभयत्र गुणाभावः अनिटीति किं शिशयिषते ननुनाप्राप्तेगुण आरभ्यमाण-त्वाद्येननाप्राप्तिन्यायेनगुणं दीर्घएव बाधिष्यत इतिकिं निषेधेन कृतेतु दीर्घे तद्विधिसामर्थ्यान्नगुणः प्राप्नोतिदीर्घस्तु दीर्घांतेष्वपि गुणबाधाय प्रवर्त्ततइति लुलू षतीत्यादावपि गुणो न भविष्यति सिंहावलोकितन्यायेन ग्रहोर्विंहसइति हसे ग्रह णस्येहापिसंबंधाद्दीर्घविधौद्विसकारनिर्देशाद्वाहसादौसकारादौवा ॥ सेदीर्घः ॥ ४ ।

सेपरे धातोः पूर्वस्य दीर्घो भवति । चिनोतेः सणादौ कित्वं वा वक्तव्यं । चिचीषति चिकीषति जि जये ॥ सपरोक्षयोर्जेर्गिः जेतुमिच्छति जिगीषति यु मिश्रणे युयूषति होतुमिच्छति जुहूषति रु शब्दे रुरूषति ॥ ॥ यः से ॥ ५ ॥ इश्च अश्च यः पूर्वस्याकारस्य ईकारो भवति सेपरे ॥ गुणः प्रकृत्यर्थोऽन्यत्रसात् ॥ ६ ॥

शिश्रयिषतीत्यादौ न गुणोबाध्यते दीर्घाश्रयत्वाच्च चिकीर्षति तितीर्षतीत्यादौ ऋत-इरपि न बाध्यते तदेवं गुणवज्ञीप्सतीत्यादौञिलोपे माबाधीति गुणनिषेध आरभ्यते सेपरइति हसादावित्यर्थः एतच्चपूर्वसूत्र एवोपपादितं सेइत्यकारस्तंत्रं तेन चक्षइति न दीर्घः सानुबंधकत्वाच्च हशषांतात्सकोप्यग्रहणं उणादौ कषेः सः कंसः इत्यत्रतु सदोणादयइति सदाशब्दस्य बहुलार्थत्वादग्रहणं अथवा इच्छायामित्यनुवृत्तेरनिष्टार्थत्वादिह न भवति अतएव च जुगुप्सत इत्यादौ स्वार्थेसेऽपि न भवति एवमप्यसादेर्भ्वादिरित्यदोघसो जिघत्सति संजिगंसते वत्सोमात्रइत्यादौ क्तोवेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेर्नदीर्घः अतएव च तनोतेस्तितांसति नानिडिति गुणनिषेधे षत्वेऽनेनदीर्घः एवंजिगीषतीत्यर्थः दारायि जेः सपरोक्षयोरिति युयूषतीति वुः सइतीण्निषेधः एवंरुरूषतीति रुशब्दे जुहूषतीति हु दानादनयोः ॥ यः ॥ ५ ॥ इअइतिच्छेदः इ इतिलुप्तसिनिर्देशः पूर्वइति अवयवे समुदायोपचारादेवमुक्तं पूर्वस्येत्यर्थः एतच्च पूर्वस्यहसादिरित्यतोऽनुवर्त्तते अतएवषष्ठीनिर्दिष्टत्वादंत्यस्यातो भवति॥ गुणः ॥ ६ ॥ सादन्यत्र प्रकृत्यर्थो गुणः अप्रधानं प्रधानंतु प्रत्ययार्थः सप्रत्ययेतु प्रकृत्यर्थः प्रधानमिति तथोदाहरति काष्ठेनेति अन्यथा इच्छांप्रतिकाष्ठानां करणत्वाभावात्तृतीयानोपपद्यते पचेरत्रसे द्वित्वे यः सः इति पूर्वस्येत्वे चोःकुत्वे षत्वे क्ष पिपासतीति पातुमिच्छतीत्यर्थः तित्यक्षतीति त्यक्तुमिच्छतीत्यर्थः विवक्षतीति वक्तुमिच्छतीति वचेः प्राग्वत् जिघृक्षतीति ग्रहीतुमिच्छतीति ग्रहेः से द्वित्वे कुहोरितिचुत्वे इत्वे वुःसइति इडभावे होढइति ढत्वे आदिजबानामिति झभेधकारे ग्रहिज्क्ङितिचेति चकारात्संप्रसारणे नानिटीति गुणप्रतिषेधे षढोरितिढस्यकत्वे षत्वं एवं पिपृक्षतीत्यत्र प्रष्टुमिच्छतीति प्रच्छेर्व्रश्चादिना षत्वे प्राग्वत् जिघांसतीति हंतुमिच्छतीति सेसेदीर्घः इतिदीर्घः घत्वंतु हनोघ्न इत्यत्र प्रतिपादितम् अतएव ॥ हन्तेः सो-

सेपरे धातोः पूर्वस्य दीर्घो भवति । चिनोतेः सणादौ कित्वं वा वक्तव्यं । चिचीषति चिकीषति जि जये ॥ सपरोक्षयोर्जेर्गिः जेतुमिच्छति जिगीषति यु मिश्रणे युयूषति होतुमिच्छति जुहूषति रु शब्दे रुरूषति ॥ ॥ यः से ॥ ५ ॥ इश्च अश्च यः पूर्वस्याकारस्य ईकारो भवति सेपरे ॥ गुणः प्रकृत्यर्थोऽन्यत्रसात् ॥ ६ ॥

शिश्रयिषतीत्यादौ न गुणोबाध्यते दीर्घाश्रयत्वाच्च चिकीर्षति तितीर्षतीत्यादौ ऋतइरपि न बाध्यते तदेवं गुणवज्ज्ञीप्सतीत्यादौञिलोपे माबाधीति गुणनिषेध आरभ्यते सेपरइति हसादावित्यर्थः एतच्चपूर्वसूत्र एवोपपादितं सेइत्यकारस्तंत्रं तेन चक्षइति न दीर्घः सानुबंधकत्वाच्च हशषांतात्सकोप्यग्रहणं उणादौ कषेः सः कंसः इत्यत्रतु सदोणादयइति सदाशब्दस्य बहुलार्थत्वादग्रहणं अथवा इच्छायामित्यनुवृत्तेरनिष्टार्थत्वादिह न भवति अतएव च जुगुप्सत इत्यादौ स्वार्थेसेऽपि न भवति एवमप्यसादेर्भ्वादिरित्यदोघस्रो जिघत्सति संजिगंसते वत्सोमात्रइत्यादौ क्त्वोवेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेर्नदीर्घः अतएव च तनोतेस्तितांसति नानिडिति गुणनिषेधे षत्वेऽनेनदीर्घः एवंजिगीषतीत्यर्थः दारायि जेः सपरोक्षयोरिति युयूषतीति वुः सइतीण्निषेधः एवंरुरूषतीति रुशब्दे जुहूषतीति हु दानादनयोः ॥ यः ॥ ५ ॥ इअइतिच्छेदः इ इतिलुप्तसिनिर्देशः पूर्वइति अवयवे समुदायोपचारादेवमुक्तं पूर्वस्येत्यर्थः एतच्च पूर्वस्यहसादिरित्यतोऽनुवर्त्तते अतएवषष्ठीनिर्दिष्टत्वादंत्यस्यातो भवति॥ गुणः ॥ ६ ॥ सादन्यत्र प्रकृत्यर्थो गुणः अप्रधानं प्रधानंतु प्रत्ययार्थः सप्रत्ययेतु प्रकृत्यर्थः प्रधानमिति तथोदाहरति काष्ठेनेति अन्यथा इच्छांप्रतिकाष्ठानां करणत्वाभावात्तृतीयानोपपद्यते पचेरत्रसे द्वित्वे यः सः इति पूर्वस्येत्वे चोःकुत्वे षत्वे क्षे पिपासतीति पातुमिच्छतीत्यर्थः तित्यक्षतीति त्यक्तुमिच्छतीत्यर्थः विवक्षतीति वक्तुमिच्छतीति वचेः प्राग्वत् जिघृक्षतीति ग्रहीतुमिच्छतीति ग्रहेः से द्वित्वे कुहोरितिचुत्वे इत्वे वुःसइति इडभावे होढइति ढत्वे आदिजबानामिति झभेधकारे ग्रहिज्यादिना किङतिचेति चकारात्संप्रसारणे नानिटीति गुणप्रतिषेधे षढोरितिढस्यकत्वे षत्वं एवं पिपृक्षतीत्यत्र प्रष्टुमिच्छतीति प्रच्छेर्व्रश्चादिना षत्वे प्राग्वत् जिघांसतीति हंतुमिच्छतीति सेसेदीर्घः इतिदीर्घः घत्वंतु हनोघ्न इत्यत्र प्रतिपादितम् अतएव ॥ हन्तेः सो-

स्यचलोपः सस्तोनपीति सकारस्य तकारः दित्सति धित्सति प्रमित्सति डुलभष् प्राप्तौ स्वसेचपाझसानां स्कोराद्योश्चेति सलोपः लिप्सति लिप्सते रभ राभस्ये रिप्सति ॥ पतोवेट् ॥ ११ ॥ पत्लृपतने इत्यस्माद्धातोः इट् वाभवति । पित्सति पिपतिषति ॥ आप्नोतेरी ॥१२॥ आप्नोतेराकारस्येकारादेशोभवति पूर्वस्यचलोपः । ईप्सति ॥ अशेरनायोवा ॥ १३ ॥ अशेर्द्धातोरिच्छायांवा अनायप्रत्ययो

मनुवर्त्तमानमत्रजिघृक्षितान् दादीनादत्ते तदाह दादीनामिति स्वरस्येति लोपःपचामित्यतोस्येत्यनुवृत्तेः पूर्वस्येति पूर्वस्य हसादिरित्यतस्तत्रपूर्वस्य सर्वस्येत्यर्थः नांतस्यानर्थकत्वात् षष्ठीनिर्दिष्टेत्यत्रह्यर्थवद्ग्रहणपरिभाषया अर्थवत्वेत्वव्यापारः पूर्वरूपं ह्यनर्थकम् अवयवत्वान्नचस्वरूपस्य द्वित्वादुभयोरर्थवत्वं समानमितिवाच्यं अभ्यासविकारेष्वप्रक्षालनादानोत्सर्गान् विधीन्बाधंतइति हसादिशेषे शिष्टस्यावयवत्वात् दित्सतीति दातुमिच्छतीति दाञः सेद्वित्वे अस्येत्यतो यिग्रहणादात इसिपूर्वलोपे सस्यच ते धातुत्वात्तिवादिष्वप्कर्तरीत्यपि अदेइत्यलोपे बुभूषतिवद्रूपाणीत्यर्थः एवं धित्सतीति धाञः मित्सतीतिमातेर्मानार्थस्यदुर्लभइति अनिडात्मनेपदीलिप्सतइति लब्धुमिच्छतीति लभेः सेनिटिद्वित्वे इसि पूर्वलोपे स्कोराद्योरिति सलोपे भस्य चपे एवं स्यादित्यर्थः रभराभस्ये रभसत्वं रिप्सतइति पूर्ववत् यतइतिसस्येतिशेषः अतउपलक्षणं पतेर्ग्रहणं तनिदरिद्राभ्यामित्यर्थः एतच्चोदितोवेत्यत्र वेति योगविभागे वाशब्दव्यवस्थार्थाल्लभ्यते तितनिषति तितांसति दिदरिद्रिषति आतोनपीत्यत्रात योगविभागात् क्ङित्यप्यालोपे दिदरिद्रासति पित्सतीति पित्सतीतिस्कोराद्योरिति इसःसलोपः ॥ आप्नोतेरी ॥ ११ ॥ १२ ॥ अयंभावः इःसः इत्यत्र लघोर्दीर्घः इत्यतोदीर्घोनुवर्तते लोपःपचामित्यतश्चेकारः सच व्यवस्थितार्थः तेनाप्ज्ञप्ऋधामिसो दीर्घश्च भवतिईप्सतीति प्राग्वदिसि दीर्घे सलोपः ज्ञपेस्तु वक्ष्यति ऋधेरीत्सतीति अत्रसिधौ अदादिगणे रुगागमो निपात्यते ॥ अशेरिति ॥ १३ ॥ भोजनार्थाद्वक्तव्यइतिशेषः अशनायतीति सधातुरितिधातुत्वात्तिबादयः अशिशिषतीति पक्षेस इड्गुभ्य बहुवचनस्यफलमाह गुपादिभ्यइति गुप्तिज्कित्मानवधदान्शान्भ्यइत्यर्थः एतच्चप्रयोगाल्लभ्यते स्वार्थेइति धात्वर्थइत्यर्थः एतच्चयोगांतरारंभादवसीयते इच्छा-

स्यचलोपः सस्तोनपीति सकारस्य तकारः दित्सति धित्सति प्रमित्सति डुलभष् प्राप्तौ खसेचपाझसानां स्कोराद्योश्चेति सलोपः लिप्सति लिप्सते रभ राभस्ये रिप्सति ॥ पतोवेट् ॥ ११ ॥ पत्लृपतने इत्यस्माद्धातोः इट् वाभवति। पित्सति पिपतिषति ॥ आप्नोतेरी ॥१२॥ आप्नोतेराकारस्येकारादेशोभवति पूर्वस्यचलोपः। ईप्सति ॥ अशेरनायोवा ॥ १३ ॥ अशेर्द्धातोरिच्छायांवा अनायप्रत्ययो

मनुवर्त्तमानमत्रजिघृक्षितान् दादीनादत्ते तदाह दादीनामिति स्वरस्येति लोपःपचामित्यतोस्येत्यनुवृत्तेः पूर्वस्येति पूर्वस्य हसादिरित्यतस्तत्रपूर्वस्य सर्वस्येत्यर्थः नांतस्यानर्थकत्वात् षष्ठीनिर्दिष्टेत्यत्रह्यर्थवद्ग्रहणपरिभाषया अर्थवत्वेत्वव्यापारः पूर्वरूपं ह्यनर्थकम् अवयवत्वान्नचस्वरूपस्य द्वित्वादुभयोरर्थवत्वं समानमितिवाच्यं अभ्यासविकारेष्वप्रक्षालनादानोत्सर्गान् विधीन्बाधंतइति हसादिशेषे शिष्टस्यावयवत्वात् दित्सतीति दातुमिच्छतीति दाञः सेद्वित्वे अस्येत्यतो यिग्रहणादात इसिपूर्वलोपे सस्यच ते धातुत्वात्तिबादिष्वप्कर्तरीत्यपि अदेइत्यलोपे बुभूषतिवद्रूपाणीत्यर्थः एवं धित्सतीति धाञः मित्सतीतिमातेर्मानार्थस्यदुर्लभइति अनिडात्मनेपदीलिप्सतइति लब्धुमिच्छतीति लभेः सेनिटिद्वित्वे इसि पूर्वलोपे स्कोराद्योरिति सलोपे भस्य चपे एवं स्यादित्यर्थः रभराभस्ये रभसत्वं रिप्सतइति पूर्ववत् यतइतिसस्येतिशेषः अतउपलक्षणं पतेर्ग्रहणं तनिदरिद्राभ्यामित्यर्थः एतच्चोदितोवेत्यत्र वेति योगविभागे वाशब्दव्यवस्थार्थाल्लभ्यते तितनिषति तितांसति दिदरिद्रिषति आतोनपीत्यत्रात योगविभागात् क्ङित्यप्यालोपे दिदरिद्रासति पित्सतीति पित्सतीतिस्कोराद्योरिति इसःसलोपः ॥ आप्नोतेरी ॥ ११ ॥ १२ ॥ अयंभावः इःसः इत्यत्र लघोर्दीर्घः इत्यतोदीर्घोनुवर्तते लोपःपचामित्यतश्चेकारः सच व्यवस्थितार्थः तेनाप्ज्ञप्ऋधामिसो दीर्घश्च भवतिईप्सतीति प्राग्वदिसि दीर्घे सलोपः ज्ञपेस्तु वक्ष्यति ऋधेरीत्सतीति अत्रसिधौ अदादिगणे रुगागमो निपात्यते ॥ अशेरिति ॥ १३ ॥ भोजनार्थाद्व्यक्तव्यइतिशेषः अशनायतीति सधातुरितिधातुत्वात्तिबादयः अशिशिषतीति पक्षेस इड्गुभ्य बहुवचनस्यफलमाह गुपादिभ्यइति गुप्तिज्कितमानवधदान्शान्भ्यइत्यर्थः एतच्चप्रयोगाल्लभ्यते स्वार्थेइति धात्वर्थइत्यर्थः एतच्चयोगांतरारंभादवसीयते इच्छा-

गुपादिभ्यः स्वार्थे आयप्रत्ययो भवति गुपू रक्षणे गोपायति धूप संतापे धूपायति विच्छि गतौ विच्छायति पण व्यवहारेस्तुतौ च पन च पनायते पणायते ॥

नाम्नो यईचास्य ॥ १७ ॥ नाम्न इच्छायामर्थे यःप्रत्ययो नेपदं न भवति ॥ नाम्नो ॥ १७ ॥ अत्रेच्छायामात्मन इत्यनुवर्तते इति सप्रत्ययविधाविहापि इषिकर्मणोनाम्नइच्छायामर्थ इत्यर्थः ननुचैवं देवदत्तस्य पुत्रमिच्छति यज्ञदत्तइत्यादावपि प्राप्नोति मैवम् आत्मशब्दस्यावृत्त्या क्वौवेत्यतोनेकार्थवानुवृत्तेर्वा कर्तुर्यङित्यतः कर्तुरनुवृत्तेश्च कर्तुरेषितुरात्मसंबंधिन एषित्रा आत्मनयिष्यमाणार्थात् नाम्नइत्यर्थात्तत्सन्नियोगइति यप्रत्ययेपरे पूर्वनाम्नइत्यर्थः पुत्रीयतीति आत्मनः पुत्रमिच्छतीत्यर्थः अत्रेच्छतेः कर्मणः पुत्रादेः पिताआत्मन इष्यमाणार्थात् यप्रत्यये ईत्वेच सधातुरिति धातुत्वात्कर्तरिभावेच तिबादिर्भवतिवत् कर्मणितु अस्मात्प्रत्यया न भवंति नह्यंतर्भूतकर्मार्थप्रकृत्यर्थविशिष्टानियतविषयाइच्छा वस्त्वंतरं विषयीकरोति अतोऽकर्मका इच्छार्था पुत्रियादयोजीवत्यादिवत् आचारार्थास्तु उपमानकर्मण्यंतर्भावेप्युपमेयस्य कर्मणोनंतर्भावात् पुत्रीयतेशिष्यमिति कर्मण्यपि प्रत्ययानुपपत्तिः यथाश्येनायते काकइति उपमानकर्तुरंतर्भावेप्युपमेयकर्तरि प्रत्ययः धनीयतीति प्राग्वत् वानुवृत्तेश्च पक्षेवाक्यमपि भवति निपातानामनेकार्थत्वाच्च मांतेभ्योव्ययेभ्यश्च किमिच्छति उच्चैरिच्छतीत्यादौ यो न भवति काम्यमपीति यविषय इतिशेषः पुत्रकाम्यतीति पुत्रमात्मन इच्छतीत्यर्थः प्राग्वद्धातुत्वाद्धिकरणेचेति अयंभावः वक्ष्यमाणे ञिर्डित्करणइत्यत्रयोनुवर्तते वाशब्दश्च तेनयोपि

१ नाम्न इति किमर्थं धातोः पूर्वेण सविधानात्परिशेषान्नाम्नो लाभात् न सिबंतादप्याऽऽयास्यतीति वाच्यं क्षत्यऽभावात् न च वाच्यति मरुत्यतीत्यादौ कुत्वजबादिप्रसंग इति वाच्यं अप्ययोरादित्यत्र जबाऽकरणेन ये पदकार्याभावस्य ज्ञापितत्वाच्च राजीयतीत्यत्र तु ज्ञापकसिद्धं न सर्वत्रेति न लोपः सिद्ध्यति नाम्नो य पक्षे तु कुत्वाद्यत् भावो युक्त एव न चाऽत्र पक्षे राजीयतीत्यत्र न लोपाप्रसंगः ओर्वमोरित्यतो लोप इति कृञो ये इत्यतो ये इति ऋसंयोगादित्यतो नेति चानुवर्त्यं वाक्यभेदेन व्याख्येयं नेति स्वरूपपरं शब्दाधिकारात्षष्ठ्या विपरिणमयितव्यं तेन नाम्नो वस्य लोपे ये इति लाभादित्थं व्यर्थं नाम्न इति चेदुच्यते एकत्वस्य विवक्षणार्थं नामग्रहणं तेनाऽनेकस्यनाम्नः पदाद्वा नय महांतं पुत्रमिच्छति इति किंच महापुत्रीयतीतिस्यात्

भवति तत्सन्नियोगे धातोरकारस्येकारोभवति । आत्मनः पुत्रमिच्छति पुत्रीयति शिष्यमुपाध्यायः धनमिच्छति धनीयति काम्यमपीच्छति पुत्रकाम्यति । मैथुनेच्छायांनाम्नः स्यप्रत्ययोवक्तव्यः । वृषेणं मैथुनमिच्छतिवृषस्यतिगौः । भोजनेच्छायां नाम्न्यंतादस्यस्यप्रत्ययो वक्तव्यः । दधिभोक्तुमिच्छति दधिष्यति पिपासायाउदकात् न्यः कलोपश्च उदकंपातुमिच्छति उदन्यति करणेचयक् कंडूयति कंडूयते महीयति महीयते नमस्यति तपस्यति ॥ ञिर्डित्करणे ॥ १८ ॥ नाम्नोञिः प्रत्ययो भवति करणेर्थे सचडित् ञकारोवृद्ध्यर्थः । सधातुरिति धातुसंज्ञायां तिबादयः घटिति इति स्थिते अत उपधाया इति वृद्धिप्राप्तौ ॥ मितांह्रस्वः ॥ १९ ॥ धातुपाठे

भवतिङित्वं च ञिनासंबंधत्वान्नयेन संबध्यते निपातानामनेकार्थत्वाद्वानाम्नो य इत्यनेनैव करणेविधीयते कडूयतीति कंडूंकरोतीत्यर्थः अत्रावयवेऽचरितार्थं लिंगं समुदायस्यविशेषकं भवतीति कंडूञो ञित्वात्कंडूयत इत्यपि भवति एवंहृणीङो ङित्वात् हृणीयते इतिभवति ॥ ञिर्डित् ॥ १८ ॥ लुप्तसिक्तोनिर्देशः सचेतिसञिर्डिद्वत् डित्कार्यकृदित्यर्थः ञकारइति णकारोपादानेनापिवृद्धेः सिद्धत्वात् ञकारोपादानं यङोङित्त्ववदुभयार्थमितिभावः डित्वादिति डितिटेरितिशेषः सधातुरितीति ञिप्रत्ययांतस्येति शेषः घटयतीति घटंकरोतीत्यर्थे घटशब्दात्ञौ टिलोपेधातुत्वात्तिबादिष्वपिच गुणायादेशयोर्घटयतीत्युदाहृतंस्यादित्यर्थः अत उपधायाइति वृद्धिस्तु अल्लोपस्य स्थानिवद्भावान्न भवति तसादौतु भवतिवन्महयतीति महांतं करोतीतिञौटिलोपेन महतोऽतो लोपः तस्यतद्वद्भावान्न वृद्धिः एवंसर्वत्रज्ञेयं ततोऽपि ञेगुणायादेशौ ऊढयतीति ऊढीं ऊढंवा करोतीत्यर्थः पृच्छतीत्यस्यऋदादेरेफादिरादेशो यथा भवति तथा व्याख्येयमित्यर्थःएतच्चार्थकथनमात्रमिति सुविशदंगुर्वादेरिष्ठेमनियस्सु इत्यत्रोपपादितं प्रथयतीति पृथुंकरोतीत्यर्थे ञौटिलोपे ऋकारस्य रः द्रढयति दृढंकरोतीत्यर्थः गरयति गुरुंकरोतीत्यर्थे ञौ गुर्वादे-

मितित्येवंपठितानांह्रस्वोभवति अप्कर्तरि गुणः घ-टंकरोतीति घटयति महांतंकरोतीति मह्यति ऊढिं करोति ऊढयति ॥ पृथ्वादेरः ॥ २० ॥ पृथ्वादेर्द्धातोः ऋकार-स्यरो भवति ञौपरे । पृथुंकरोति प्रथयति द्रढयति ॥ धातोःप्रेरणे ॥ १ ॥ धातोःप्रयोजकव्यापारेर्थे ञिप्रत्ययोभ-

रित्यत्र ञेरपि प्रश्लेषाद्वरादेशे टिलोपनिषेधः उपधावृद्धिस्तु संज्ञापूर्वकस्यविधेरनित्य-त्वान्नभवति अल्पयतीति अल्पंकरोतीत्यर्थः । पक्षेऽत्र कनादेशे कनयतीति ज्ञेयं ञे-र्डित्करण इत्यत्र च क्तोवेत्यतोऽनेकार्थवानुवृत्तेरर्थांतरेपि ञिर्भवतीति घटमाचष्टे घटयति वीणयाऽपगायति उपवीणयति श्लोकैरुपस्तौति उपश्लोकयतीत्यादौ तत्रत-त्रार्थे केवलेभ्यो नामभ्यः प्रत्ययः असमर्थैः प्रत्ययार्थः विशेषणैः संबंधः अतएव उपावीणयदित्यादावडागमादिकार्यमप्युपसृष्टस्य नभवति किंतुकेवलस्यैव असंग्रामय-तेत्यादौतु संघातात्प्रत्ययोऽडादिकार्यमपिसंबंधात्तस्य यथास्यादिति चुरादौसंग्राम-शब्दः पठ्यते इति न व्यभिचारः। केचित्तु सोपसर्गाद्धातोर्धातुसंज्ञानिमित्ते प्रत्यये वि-धित्सिते उपसर्गाःपृथक्क्रियंते परिशिष्टात्प्रत्ययइति ज्ञापकार्थोवा स धातुसंज्ञानिमित्त-प्रत्ययः सोपसर्गाद्यदि भवतिसंग्रामयतेरेवेति नियमार्थोवा संग्रामशब्द इति वर्णयति॥ मिताम्॥१९॥२०॥ मिदित्येवामितिघटादयोमितित्येवमादिना प्रतिपादितानामित्यर्थः ह्रस्वोभवतीति रातोञ्णावित्यतोनुवृत्तेञ्णाविति शेषः घटयतीति घटमानंप्रयुंक्त इत्यर्थः ञौ अतउपधायाइति वृद्धेर्ह्रस्वः शेषंपूर्ववत् ॥ धातोः ॥ १ ॥ इहव्यापारमात्र-

---

१ ननु प्रेरणे इति धातोर्विशेषणमस्तु प्रेरणे वर्त्तमानाद्धातोर्ञिरिति अथ पचति पाच-यतीत्युक्ते व्यक्तमर्थांतरं गम्यते तत् कथमयं स्वार्थिकः इह हि कः पचेरर्थः याऽसौ तं-डुलानां विक्लित्तिः अधिश्रयणादीनां तु तादर्थ्यात्तदवच्छेदेन च पच्यर्थता यो हि पानार्थ-मुदकमाहरति विक्रयार्थं च काष्ठान्याहरति शीतं चापनेतुमग्निंसमिद्धे पेष्टुं च तंडुलान्प्रक्षाल-यति नासौ पचतीत्युच्यते तत्कस्य हेतोर्विक्लित्तिं प्रति साधनाऽभावात्तदवच्छेदकाभावाच्च अतस्तादर्थ्यादेवाधिश्रयणादीनां पच्यर्थता तद्वत्प्रेरकव्यापारोपि तादर्थ्यादेव पच्यादिवाच्यो भविष्यति ञिप्रत्ययस्तु द्योतकः ॥

वति ञकारोवृद्ध्यर्थः । कुर्वंतं कारयति यः सप्रयोजकः पाचयति । शास् अनुशिष्टौ अनुशासयति ॥ हनोघत् ॥ २ ॥ हंतेर्घदादेशोभवति ञिणति परे इण्णप्वर्जिते घातयति ॥ शदेःशत ॥ ३ ॥ शदेर्द्धातोः शदादेशोभवति ञौ परे । शातयति । रातोञौ पुक् ॥४॥ ऋगतावित्यस्यधातो राकारांतस्यचञौ परे पुगागमो भवति । ऋ गतौ गुणोऽर् अर्पयति दापयति स्थापयति पाययति । इङादेञौं पुग्वक्तव्यः । इङ् अध्ययने वृद्धिरायादेशश्च यतः इति यस्यलोपः अधिपूर्वः अध्यापयति ह्री लज्जायां ह्रेपयति

स्य कर्तृकृत् व्यापारस्यच क्रियासु सर्वत्रापि सत्वात् प्रेरणाग्रहणानुपपत्तेः चुरादेरिति योगांतरारंभाच्च प्रयोगानुकूलो विशिष्टोव्यापारः प्रेरणार्थ इति मत्वाह प्रेरणे प्रयोजकव्यापार इति । अथवाकर्तुर्यङित्यतः कर्तुरितिवर्तते प्रेरयतीति प्रेरणइति कर्तरियुः ततश्च कर्तुः प्रेरकः प्रयोजकः कर्तेतियावत् तद्वान् प्रेरणाध्येषणादिलक्षणव्यापार एवोत्पत्तेः प्रवृत्त्याविनाशात्तत्र समवेतत्वेन नित्ययोगे मत्वर्थीयाकारप्रत्ययेन प्रेरणइत्युच्यते तस्मिन्वाच्य इत्यर्थः इदमेवाभिप्रेत्याह कुर्वंतमित्यादि सएव हि स्वतंत्रस्य कर्तुःप्रेरकइतिभावः पाचयतीति पचंतंप्रेरयतीत्यत्रार्थः पचेञौ उपधावृद्धौसधातुरिति धातुत्वात्तिबादिष्वपि च गुणायादेशौ एवंपाचयेत् पाचयतु अपाचयदित्यादि ॥ हनो ॥ २ ॥ ञिणतीति आदिस्वरस्येत्यतोनुवर्तते एतच्च क्वचिद्द्वयोरित्यतः क्वचिद्ग्रहणानुवृत्तेर्लभ्यते घातयतीति घ्नंतंप्रेरयतीत्यर्थः ॥ शदेरिति ॥ ३ ॥ शद्लृशातन इत्यस्य ञौ शदादेशोवक्तव्य इत्यर्थः । शातयतीति शीयमानं प्रेरयतीत्यर्थः ॥ रातः ॥ ४ ॥ किमत्र रेफस्यग्रहणं ऋकारांतस्य वा ऋगतावित्यस्य वा नाद्यः स्वरेण साहचर्यात् अतएवातोयुगित्यनुवृत्तावपि पुनराद्ग्रहणं न द्वितीयः अर्थवद्ग्रहणपरिभाषया अंतोंत्यमेवाश्रित्याह ऋगतावित्यस्येति अर्पयतीति ऋच्छंतं प्रेरयतीत्यर्थः नन्वत्र ऋञौइतिस्थिते गुणंबाधित्वा पुक्स्यात्ततो न गुणः प्राप्नोति मैवं लघूपधत्वाद्दापयतीति ददतं प्रयुंक्त इत्यर्थः इङादेरिति इङ अतएरिति छेदः तत्रेङिति लुप्तषष्ठीकोनिर्देशस्तदयमर्थः इङां इङादीनामादित्यात्वं ञौ परेवक्तव्ये तत्रकृते आतोलाक्षणिकत्वादातइत्यप्राप्तः पुगपि वाच्यइत्यर्थः

लीङ् विलेपने लीङाकारः विलापयति । पादेर्युक् । पाययति शो तनूकरणे शाययति । प्रीञ्धूञोर्नुक् ञौ प्रीञ् तर्प्पणे प्रीणयति धूञ् कंपने धूनयति जानातेर्वाह्रस्वः ज्ञा अवबोधने ज्ञापयति ज्ञपयति । वेटिसेदीर्घताचवक्तव्या । जिज्ञापयिषति चकाराद्द्विरुक्तलोपश्च ञिप्रत्ययः पुगागमः सप्रत्ययो द्वित्वं ञेरिति ञिलोपः स्कोराद्योश्चेति सलोपः ज्ञीप्सति जिज्ञपयिषति इतिरूपे जानातेर्वा ह्रस्वः नानिटसेरित्यगुणः ॥ अथदशमो गणः ॥

तथाएकारश्चांतादेशः पुक् वक्तव्य इति तत्रादेतोरुभयोरेकत्रविधेरसंभवात्सामर्थ्यात्प्रयोगानुकूलो भिन्नएव विधिर्ज्ञेयः तथोदाहरति अध्यापयति इङोत्रात्वपुकौ ञि अधीयानं प्रयुंक्त इत्यर्थः । एवंजिक्रयादीनामपि जापयतीत्याद्यपि ज्ञेयं हेपयतीति ह्रियोत्र एत्वपुकौ ञिह्रियंतं प्रयुंक्त इत्यर्थः।एवंक्लेपयतीत्याद्यपि ज्ञेयं पादेरिति अयमाशयः रातोञावित्यत्रातोयुगित्यतो युगप्यनुवर्तते कचिद्द्वयोरित्यतोऽनेकार्थक्काचिद्ग्रहणंच तेनयुक्पुकोः प्रयोगानुकूलो विधिस्तेनैव भवतीत्यर्थः पाययतीति पातः पिबतेश्च ञौपुकि ञेर्गुणायौएवं छाययति शाययतीत्यादि प्रीञ्धूञोरिति ञौवावाच्य इतिशेषः प्रीणयतीतिप्रीणंतं प्रयुंक्तइत्यर्थः । ञौञित्करणत्वं धूनयतीति धूनंतंप्रेरयतीत्यर्थः पक्षेप्रापयति धावयतीति वृद्धिः जानातेरिति अयंभावः मारणतोषणनिशामनेषु ज्ञामिदुक्तस्तस्यामितांह्रस्वः अन्यस्यनेति वाह्रस्व इत्यर्थः । ज्ञापयतीतिमारयति तोषयति निशामयतीति वार्थः अत्रांतरंगत्वादादौ पुकिपश्चाद्ध्रस्वः पुकोहि अर्थानपेक्षत्वे नांतरंगत्वं ज्ञापयतीति बोधयतीत्यर्थः वाह्रस्वइति इहेच्छार्थसप्रत्ययात्सादन्यःप्रत्ययः प्रत्ययांतादपि भवतीतिःज्ञापयितुमिच्छतीत्यर्थः । विवक्षायां ज्ञपेर्ण्यंताद्धातोःसप्रत्यये नैकस्वरत्वान्नित्यमिट् प्राप्तः बुःसे इत्यत्र सइति विभक्तेन्त पक्षे इट् निषेधेज्ञपोदादित्वादिस्से इति सिपूर्वलोपे ईप्सतीतिवद्दीर्घेत्र ज्ञीप्सतीतिरूपंस्यादितिव्याख्येयमित्यर्थः तथाहि वाइट् बुस्सइति व्याख्येयः सेपरे इसदीर्घताच इस्सइति व्याख्येयः पूर्वलोपस्तु इसाव्याप्तित्वादागतएव ञिलोपइति अपोन्यस्मिन्ननिटि विधीयमानत्वादिति भावः स्कोरिति शेषः जिज्ञपयिषतीति इटपक्षेञौ गुणायौ जिज्ञापयिषती-

चुरादेर्ञिः ॥ १ ॥ चुरादेर्गणात्स्वार्थेञि प्रत्ययोभवति । चुर स्तेये चोरयति पालयति चिती संज्ञाने चेतयति अर्च पूजायां अर्चयति ञकारानुबंधत्वादात्मनेपदमपि चोरयते ॥ ञेरङ्द्विश्च ॥ २ ॥ ञ्यंताद्धातोर्भूतेर्थे अङ्प्रत्ययो भवति दिवादिपरः सेरपवादः धातोर्द्विवचनं ङकारो गुणनिषेधार्थः अचुचुरि अत इति स्थिते ॥ ञेः ॥ ३ ॥ ञिति णितिचपरे ञेर्लोपोभवति ॥ लघोर्दीर्घः ॥ ४ ॥ अङिसतिपूर्व-

ति ह्रस्वाभावपक्षे ॥ चुरादेः ॥ १ ॥ स्वार्थइति पूर्वेणैवसिद्धे विधानांतरारंभादिति भावः चुरेति स्तेयं चौर्यं चोरयतीति उपधागुणः अपित्वेनङित्त्वाशंकया प्रतिषेधस्याभावो लित्पुपादेरित्यत्रोपपादितः एवंचोरयेत् चोरयतु अचोरयत् चोरयांचकार चोर्यात् चोरयिता चोरयिष्यति अचोरयिष्यत् इत्यादिसर्वत्रज्ञेयं चिती संज्ञानं चेतनं चेतयति अर्चयति अर्चपूजायामित्यस्य ञकारेति अपिशब्दात्परस्मैपदमपि ञितस्वरितेतइत्यस्य प्रवृत्तेरिति भावः चोरयते इति एवं चोरयेत चोरयतां अचोरयत इत्यादि ॥ ञेः ॥ २ ॥ ञिमात्रं धातुर्नास्तीति सामर्थ्यात्तदंतग्रहणमित्याह ञंतादिति भूतेऽर्थइति भूतेसिरित्यतोनुवृत्तिरित्यर्थः दिवादीति सेरिवेतिभावः सेरपवाद इति तस्मिन्प्राप्ते आरभ्यमाणत्वात् द्विश्चेत्यस्यार्थमाह धातोश्चेति ङकार इति अङ्ङिलघावितिविशेषणार्थश्च ॥ ञेः ॥ ३ ॥ अत्र नानिटीत्यतोऽनिटीति वर्तते आतोनपीत्यतोनपीतिच ततश्चानिडादिरपोन्यः प्रत्ययोस्यनिमित्तमिति चोरयंतं प्रयुंक्तइतिञ्यंतात्प्रेरणार्थे ञौपूर्वस्य ञेरनेन लोपः एवं कारयति कारक इति बुणि लोपः इति एषा दिक् क्ङितीत्यनुवृत्तावत्र नस्यादिति किति ङिति च पर इति वृत्तौ न पठनीयं अनटीत्यनुवृत्तिरपि प्रयोगानुकूलेति कारितंहारितमिति सेट्यपि च कचिद्भवति तथा गुण इत्यतो गुणोप्यनुवर्ततेकारयांचकारेत्यादौ ञेर्गुणोप्यनेन विधीयते तत्र न लोपप्रसंगः परिणमय्य प्रापय्येत्यादौ गुणेयकारस्यस्वरवत्वादयः ॥ लघोः ॥ ४ ॥ अङिसतीति अङ्ङिलघोरित्यतोनुवर्तते पूर्वस्येति पूर्वस्य

१ चुरादेः चुर आदिर्यस्येति तद्गुणसंविज्ञानो बहुव्रीहिः अनुद्भूतावयवभेदसमुदायस्याऽन्यपदार्थत्वेनाऽऽश्रयणादेकवचनं चुरादेर्धातोर्ञिः प्रत्ययः चोरयति चोरयते चुरादौ यानि नामानि पठितानितेभ्यस्तु वचनसामर्थ्याद्णिः हस्तिनाऽतिक्रामति हस्तयति ॥

स्यलघोर्दीर्घोभवति । अचूचुरत् अचूचुरतां अचूचुरन् विद् ज्ञाने अवीविदत् अदूदुहत् ॥ अङ्लिघौह्रस्वः ॥ ५ ॥ अङिसतिपूर्वसंबंधिनोऽकारस्येकारो भवति लघौ परे उपधायाश्च ह्रस्वो भवति । अपीपठत् अपीपचत् अपीपलत् । पद् गतौ प्रतिपूर्वः प्रत्यपीपदत् अजीघटत्

ह्सादिरित्यतः लघोरिति असंयोगादित्युक्तस्य अचूचुरदित्यादिचोरेरत्राङि द्वित्वे पूर्वशेषे अङ्लिघावित्युपधाह्रस्वे ह्रस्व इति पूर्वस्य ह्रस्वे उकारे अनेन दीर्घउकारः तस्य च विधिसामर्थ्यात्पुनर्ह्रस्वो न भवति ञेरिति ञिलोपः शिष्टं स्पष्टं अदूदुहदिति दोग्धि कश्चित्तमन्यः प्रयुंक्त इति दोहयति तस्याङि उक्तप्रक्रियायां कृतायामेवं स्यादित्यर्थः लघोरिति किं अबिभ्रजत् अततक्षदित्यादौ तु अङ्लिघावित्यतो लघावित्यनुवृत्तेर्गुरौ न प्रसंगः॥ अङि॥५॥अत्राङीति सप्तमीत्याह अङिसतीति परसप्तम्या हिञिनावश्यं व्यवधानाद्येननाव्यवधानमित्याश्रयणीयं स्यात्कमेस्तु ञिविधौ धातोरिति प्रयोगविभागात् स्वार्थे ञौ क्तोवेत्यतोनेकार्थवानुवृत्तेरनपि पक्षे ञेरभावे अङ्घौचकारस्यानुक्तसमुच्चयार्थत्वात् ङौ उपधाह्रस्वाप्रवृत्तेरेकयोगे विशिष्टत्वेनेत्वमपि नप्रवर्तते अचक्रमतेति नास्य सूत्रस्य विषयः पूर्वसंबंधिन इति पूर्वस्यह्सादिरित्यतोनुवृत्तेर्द्वित्वे कृतेपूर्वरूपसंबंधिन इत्यर्थः अकारस्येति अत इत्यतोनुवृत्तस्य इकार इति यसः इत्यनुवृत्तेर्लघाविति लघौ धात्वक्षरे पर इत्यर्थः उक्तपुंस्कत्वेन पुंवत्वान्न नुम् वर्णो धात्ववयवो विशेष्यं वा उपधायाश्चेति धातोरित्यनुवृत्तेर्ङिप्रकृतेर्धातोरुपधाया इत्यर्थः अतएवालिलवदित्यत्रञ्यंतस्योपधाया उकारस्यांतरंगामपि वृद्धिमावादेशं च बाधित्वा ह्रस्वो न भवति माभवानटीदित्यत्र तु ओणृ अपनयन इत्यस्य ऋदित्करणात् ह्रस्वनिषेधज्ञापकान्नित्यमपि द्वित्वमुपधाह्रस्वो बाध्यते अन्यथा हिपूर्वे द्वितीयस्य द्वित्वे कृते आकार उपधा नेति ह्रस्वो न स्यात् अङीति किं कारयति लघौ किं अततक्षत् उपधाया इति किं अचकांक्षत् अपीपचदिति पूर्वस्य इत्वे उपधाह्रस्वत्वे च लघोरिति दीर्घः एवमपीपठदित्यादि अशिश्रियदिति ञेरङ्द्विश्चेति चकारस्यानुक्तसमुच्चयार्थत्वादसत्यपि ञौश्रीद्रुस्रुभ्योऽङ्स्यादिति तस्मिन् द्वित्वेङित्वादसति गुणे

नरितः ॥६ ॥ ऋकारांतस्याङ्युक्तंकार्यं नभवति । ढौकृ गतौ अडुढौकत ॥ अययाचत अङि पूर्वढकारस्यजः ॥ ७॥ अङिप-रेपूर्वढकारस्यजकारोभवति । वह प्रापणे औजढत् ॥ वहःकृ-तक्तोकृतसंप्रसारं होढस्तथोढ्रः ष्टुभिनाढिढश्च ॥ ऊढौ चत्रिर्डिन्वसधातुमेरङ्द्विश्चस्वरादेर्ढजऔजढच्च ॥ ष्ठा गतिनिवृत्तौ दादेरितीकारादेशे कृते पश्चाद्द्विवचनं

इयादेशः एवमदुद्रवदिति द्रुगतावित्यस्य असुस्रुवदिति स्रुगतावित्यस्य ॥ नरि ॥ ॥६ ॥ ऋइवस्यासौरिन् तस्य रित इत्यर्थः इत्याह ऋकारेत इति अङ्युक्तमिति अङ्लिघावितीत्वह्रस्वौ लघोरिति दीर्घश्चेति तदनुवृत्तेरितिभावः अडुढौकदिति ढौक-मानं प्रेरिरदित्यर्थं ढौकतेर्णौ अङीत्वित्वेझपानामिति पूर्वस्य डकारे ह्रस्वे औकारस्य उकारे अङ्लिघावित्यस्यानिषेधः एवमययाचदिति याचेः ॥ अङिति ॥ ७ ॥ औज-ढत् औजिढदित्यत्र वाच्य इति शेषःअथवा परमतमेतत् तत्र मतांतरे भवतीति शेषः औजढदिति ऊढमकार्षीदाख्यद्वेति त्रिर्डित्करण इति ञ्यंतादूढेर्डित्त्वं प्रति ङिनिमि-त्तलोपस्य तद्वत्वादकारवतो ढकारस्य स्वरादेःपर इति द्वित्वे पूर्वस्य जः पाणिनी-यमते तु वहतेर्ढत्वादीनामप्यासिद्धत्वात् हतशब्दस्य द्वित्वे हलादिशेषे चुत्वे जस्त्वेन जः ऊढीति प्रकृतेस्त्वौजिढदिति पूर्ववत् स्वमते जस्यावक्तव्यत्वे तु ढस्य झपाना-मिति डे औडढदिति भवति सर्वत्रात्र नरित इत्यत्र नेति योगविभागादि-त्वदीर्घौ न दादेरितीति तत्र क्वोवेत्यतोनुवृत्तस्यवा शब्दस्यानेकार्थत्वादि-तिभावः अथवा अङ्लिघावित्यत्रोपधाया इकारः संबध्यते उपधाशब्दश्चानु-वर्तते रीगृदुपधस्यचेत्यतश्चापि तत्रानुवर्तते सचाल्पार्थत्वेन क्वचित्प्रत्यययोगानुकूल उपधाया इकारोपि भवति प्रत्यतिष्ठिपदिति तिष्ठतेर्णौअङि लुकि द्वित्वे पूर्वस्योपधा-याश्चेकारे षत्वष्टुत्वे यत इतीति विदो नवानामित्यतस्तत्र संबध्यमानस्य वाशब्दस्याने-कार्थत्वादिति भावः अथवा सिंहावलोकितन्यायेनाङ्लिघावित्यत्र लोपःपचामित्यतो लोपस्यापि संबंधात् रीगृदुपधेत्यनुवृत्तस्य चस्यानेकार्थत्वात् पिबतेरुपधायालोपोपि तेन विधीयते अपीप्यदिति पिबतेर्णौयुकि अङि प्राग्वदित्वे द्वित्वे दीर्घे च यलोपे इकारस्य यत्वं युकि कृतेऽपि अङ्लिघाविति उपधाविति ह्रस्वे पूर्वस्य इत्वे

प्रत्यातिष्ठिपत् प्रत्यतिष्ठिपतां प्रत्यतिष्ठिपन् पा पाने यत इतिलोपः अपीप्यत् क्लृपू सामर्थ्ये ॥ कृपोरोलः ॥ ८ ॥ कृपो धातोरकारस्यलकारोभवति । कल्पते ॥ ऋतॄ ॥ ऋकारस्य लृकारादेशोभवति व्यचीक्लृपत व्यचीक्लृपतां व्यची-क्लृपन् इत्यादि । अथादेशविशेषो निरूप्यते ॥ दृशादेःप-श्यादिः ॥ १ ॥ दृशादेर्धातोः पश्यादिरादेशोभवति अ-व्विषये दृशिर् प्रेक्षणे अस्यपश्यादेशः पश्यति अ-व्विकरणत्वाद्भवतिवद्रूपंनेयं पाइत्यस्य पिबादेशः पिबति घ्रा गंधोपादाने अस्य जिघ्रादेशः जिघ्रति ध्मा शब्दाग्निसंयोगयोः अस्य धमादेशः संधमति लोहं लोहकारः स्था इत्यस्य तिष्ठादेशः तिष्ठति दाण् दाने इत्यस्य यच्छादेशः यच्छति म्ना अभ्यासे अस्य मनादेशः मनति ऋ गतौ इत्यस्य ऋच्छादेशः ऋच्छति सृगतावित्यस्य धावादेशः शीघ्रगतौ धावति अन्यत्र सरति शद्लृ शातने अस्य शीयादेशः शीयति षद्लृ वि-

दीर्घे चोपधालोपः उभयत्र वा दीर्घ इति योगविभागाद्दीर्घः । कृपू। सामर्थ्ये शक्तिः आत्मनेपदी ॥ कृपो ॥८॥ रेफस्य लकारो वाच्य इत्यर्थःकल्पत इति अप्युपधागुणे रस्य लः एवं कल्पयतीत्यत्रापि णौ गुणे रः ञेर्ञित्वादुभयपदं व्यचीक्लृपदिति व्यंतादङि द्वित्वेरइति पूर्वस्यात्वे अङिलघाविति इत्वे दीर्घोलघोरिति दीर्घे रोल इति सामान्यनिर्देशादृकारैकदेशस्यरस्य लृकारैकदेशो लः गुणस्तु ऋदुपधस्येत्यनुवृत्तेरङिल-घाविति ऋकारः पुनर्ह्रस्वविधिसामर्थ्यान्न भवति ह्रस्वाधिकारे वा पुनर्ह्रस्वग्रहणमु-पधाया ह्रस्वस्यैव श्रवणं यथास्यादिति अतएवाचीकृतादित्यत्र कृतसंशब्दनइत्यस्या-प्युपधाह्रस्वोपि भवति तत्र चानेकार्थत्वानुवृत्तेः पक्षे अचिकीर्तदिति ह्रस्वो न भवति अथेति आदेशविशेषाः पश्यादयः ॥ दृश्यादेःपश्यादिः ॥ १॥ अवादाविति अवादा-वित्यतोनुवर्तमान इत्यर्थःआदिशब्देन यनुउपइत्यादीनां ग्रहणंपश्यतीति अप्यदइत्यलो-पो भवतिवदिति विशेषाभावादिति भावः घ्रा गंधस्योपादानं ग्रहणं जिघ्रतीति पूर्ववत्

शरणगत्यवसादनेषु अस्य सीदादेशः सीदति ॥ गमांछः ॥ २ ॥ गमादीनां छकारो भवति अवादौ परे । गच्छति इषु इच्छायां इच्छति यमु नियमे अस्य यच्छादेशः यच्छति ॥ ज्ञाजनोर्जा ॥ ३ ॥ ज्ञा अवबोधने जनी प्रादुर्भावे अनयोर्जादेशो भवति अवादौ विषये ॥ नाक्र्यादेः ॥ १ ॥ क्र्यादेर्गणान्नाप्रत्ययोभवति । जानाति जानीतः जानंति जानासि जानीथः जानीथ जानामि जानीवः जानीमः । आत्मनेपदेपि जानीते जानाते जानते जनी प्रादुर्भावे दिवादेर्यः जायते जायेते जायंते जायसे इत्यादि । श्रु श्रवणे श्रुवः शृ आदेशः शृणोति शृणुतः शृण्वंति ॥ प्वादेर्ह्रस्वः ॥ २ ॥ पूञ् पवने इत्यादेरवादौ परेह्रस्वोभवति पुनाति पुनीतः पुनंति लुनाति लुनीतः लुनंति ॥ निविशादेः ॥ १ ॥

धावतीति प्रयोगवशाच्छीघ्रगतावेव धावादेशः इत्यन्यत्र सरतीत्यपि साधु ॥ गमांछः ॥ २ ॥ गमादीनामिति आदिना इषुयम्योर्ग्रहणं छकार इति स च षष्ठीनिर्दिष्टत्वादंत्यस्य गच्छतीति मस्यात्र छे अपाश्लिष्टोच्चारणम् ॥ ज्ञाज ॥ ३ ॥ ज्ञानजनेरीकारोच्चारणं जन् जनन इत्यस्य निवृत्त्यर्थं लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैवग्रहणमिति वा तस्याग्रहणं स हि ह्वादित्वाल्लुग्विकरणः अत्र पक्षे विस्पष्टार्थं इकारः केचिदिति शितपादिति इकमेव पठंति जायत इति दिवादित्वाद्यः जानातीति ज्ञोत्र जादेशः नाप्रत्ययस्याप्यवादित्वात् शृणोतीत्यादौ श्रुश्रवणइत्यस्य शृआदेशो दृशादेरित्यत्र ब्रुवआहश्चेत्यतोनुवृत्तस्य चस्यानुक्तसमुच्चयार्थत्वाद्भवति ॥ प्वादेः ॥ १ ॥ २ ॥ प्वादिक्र्यांतर्गणइति पूञ् पवने इत्येवमेव गृह्यते न पूङिति मत्वाह पूञ् इत्यादेरिति स्वविकरण इति अवादावित्यनुवृत्तेर्लभ्यते पुनातीति पूञोत्र नाप्रत्यये ह्रस्वः एवं लुनातीत्याद्यपि ॥ निविशा ॥ १ ॥ अत्रकिंनीति लुप्तपंचमीकं पृथग्वा नेःपरो विश इनिविशेति समस्तं वा नाद्यः नेविशादिभ्यः सर्वेभ्योपि प्रसंगात् द्वितीये तु एकार्थप्रतिपादनादुपसर्ग एव निर्गृहीत इति वह निविशति वने इत्यादौ न प्रसंगः न कृत्रिमत्वेन वा अर्थवद्ग्रहणपरिभाषया वा निरयं नामिन इति नुमः प्रकृत्यवयव

निपूर्वाद्विशादेर्द्धातोरात्मनेपदंभवति निविशते ॥ विप-राभ्यांजेः ॥ २ ॥ विजयते पराजयते प्रत्यवतिष्ठते प्रतिष्ठते अवतिष्ठते संगच्छते संशृणुते संवित्ते संविदाते संविद्रते संपृच्छते संस्वरते ॥ आङोदोनास्यविहरणे ॥ ३ ॥ दाधातो-राङ्पूर्वादात्मनेपदंभवति । आदत्ते अनास्यविहरणे इति किं मुखंव्याददाति ॥ क्रीडोनुसंपरिभ्यश्च ॥ ४ ॥ अकूजने । क्रीडविहारे अनुक्रीडते संक्रीडते परिक्रीडते अकूजन इति किं संक्रीडाति रथचक्रम् ॥ समवप्रोपविभ्यः स्थः ॥ ५ ॥ संतिष्ठते अवतिष्ठते प्रतिष्ठते उपातिष्ठते वितिष्ठते ॥ उद्वि-भ्यांतपः ॥ ६ ॥ उत्तपते वितपते ॥ आङोयमहनः ॥७॥ आय-च्छते आहते स्वांगकर्मण्येव स्ववक्षः आहते अन्यत्र शत्रुं आहंति लोपस्त्वनुदात्ततनामिति नलोपः गमांस्वरे इ-

त्वादनर्थकः निविशते इति तुदादित्वादः तस्यापित्तादिरिति ङित्वान्न गुणः एवं निविशेते निविशंते निविशेत निविशेयातां निविशेरन् निविशतां निविशेतां निवि-शंतां न्यविशत न्यविशेतां न्यविशंत निविविशे इत्यादि ज्ञेयम् ॥ विप ॥ २ ॥ विज-यत इति जेर्निविशादित्वात् ते अप्गुणायादेशाः संपश्यत इति दृशेरकर्मकस्य संपू-र्वकस्य निविशादिषु पाठात्प्रपश्यति संपश्यति कृष्णमिति सकर्मकान्न एवं वक्ष्य-माणेष्वपि संपूर्वकेषु ज्ञेयं संशृणुते इत्यादि श्रुश्रवणे विद ज्ञाने प्रच्छ ज्ञीप्सायां प्रच्छे-स्तुदादेरस्य ङित्वात् ग्रहांकिङति चेति रेफस्य ऋकारः अथ निविशादिगणं प्रपंचयति॥ आङ इति ॥ ३ ॥ आङः परादाञ् आत्मनेपदं भवति नत्वास्यविहरणे विद्यामादत्ते मुखप्रसारणे तु व्याददाति मुखं अस्वांगकर्मकस्याप्यत्रपाठात् व्याददते पिपीलिकाः पतंगस्य मुखमित्यत्र भवति ॥ क्रीडइति ॥ ४ ॥ अनुसंपरिभ्यः परात्क्रीडतेस्तथा अनुक्रीडते एवं संपरि ॥ समेति ॥ ५ ॥ समवप्रोपविभ्यस्तिष्ठतेः प्राग्वत् संति-ष्ठते एवमवप्रोपविभ्यः एवम् ॥ उद्विभ्यां ॥ ६ ॥ परात्तपतेरपि उत्तपते वितपते अकर्मकस्यात्र पाठात् सवर्णमुत्तपति ॥ आङः ॥ ७ ॥ यम उपरमे हनहिंसादौ आयच्छते आहते लोपस्त्वनुदात्तेति नलोपं वक्ष्यति अत्राप्यकर्मकस्य स्वांगकर्मस्य

त्युपधालोपश्च हनोघ्ने आघ्नाते ॥ उदश्चरस्त्यागे ॥८॥ उच्चरते समस्तृतीयायुक्ताच्च ॥ ९ ॥ अश्वेन संचरते।तृतीयायुक्तादिति किं तमसि संचराति ॥ व्यवपरेभ्यः क्रियः ॥ १० ॥ विक्रीणीते अवक्रीणीते परिक्रीणीते ॥ शप उपालंभे विष्णोःशपते ॥ ज्ञाश्रुस्मृदृशांसांतानामात ॥ ११ ॥ जिज्ञासते शुश्रूषते सुस्मूर्षते दिदृक्षते॥कर्मव्यतिहारे अन्यत्रहिंसादेरात ॥ १२॥ विवदंते वादिनः श्रद्धाव्यतिभवति । क्रमःसोपसर्गस्यदीर्घता चवक्तव्या । अवादोविषये संक्रामाति क्वचिदनुपसर्गस्यापिदीर्घत्वं क्रामंति देशांतरम् ॥ व्याङ्पर्युपेभ्योरमःपम् ॥१३॥ विरमाति आरमाति । पंवृद्भ्यः स्यसयोर्वा । वृतु वर्त्तने वृधू वर्द्धने शृधु कुत्सायां स्यंदू प्रस्रवणे कृपू सामर्थ्ये धातुभ्यः स्यसप्रत्ययेपरे वापरस्मैपदंभवति परस्मैपदे च नेट् वर्तिष्यते वर्तिष्येते वर्त्तिष्यंते वर्त्स्यंति वर्त्स्यतः वर्त्स्यंति वर्द्धिष्यते वर्द्धिष्येते वर्द्धिष्यंते वर्त्स्यति वर्त्स्यतः वर्त्स्यंति शर्द्धिष्यति शर्त्स्यंति स्यंदिष्यते स्यं-

च पाठादायच्छति कूपाद्रज्जुं पराशिर आहंति इति ज्ञेयम् ॥ उद इति ॥ ८ ॥ त्याग उत्क्रमणं उच्चरते गुरुवचनं उत्क्राम्य यातीत्यर्थः सकर्मकस्याप्यत्र पाठात् बाष्पमुच्चराति ॥ सम ॥ ९ ॥ चर इति पूर्वतोनुवर्तते तृतीया च विभक्तिः अश्वेन संचरते ॥ व्यवेति ॥ १० ॥ डुक्रीञ् द्रव्यविनिमये विक्रीणीते इत्यादि ॥ ज्ञेति ॥ ११ ॥ ज्ञा अवबोधने श्रु श्रवणे स्मृ आध्याने दृशिर् प्रेक्षणे एषां सप्रत्ययांतानामित्यर्थः जिज्ञासते शुश्रूषते दिदृक्षते ॥ कर्मेति ॥ १२ ॥ क्रियाविनिमये हिंसादेरन्यस्मादात्मनेपदं स्यादित्यर्थः विवदंत इति यदावादिवाच्यं प्रतिवादी वदति इति वादेर्विवक्षते तदायं कर्मव्यतिहारः प्रयोगः वैमत्यमात्रे तु निविशादेरित्यत्रोदाहार्यं अथवा परस्परकरणमपि कर्मव्यतिहारः । यथा संप्रहरंते राजान इति ततश्च परस्परं वदंतीत्यर्थः एवं श्रद्धाव्यतिभवत इत्यपि योज्यं क्रम इति शमादित्वादिति शेषः पेपरस्मैपदे संक्रामतीति क्रमु पादविक्षेपे अप् तत्र दीर्घः ॥ व्याङिति ॥१३॥ एतच परतोऽन्यदित्यत्रोपपादितं इति अविहितलक्षणमात्मनेपदं निविशा

त्स्यति कल्पिष्यते कल्प्स्यति सम्प्रत्ययेपरे विवर्तिषते विवृत्सति विवर्द्धिषते विवृत्सति शिशर्द्धिषते शिशृत्सति सिस्यंत्सति सिस्यंदिषते चिकल्पिषते चिकल्प्स्यति ॥ मुचादेर्मुम् ॥ १ ॥ मुचादेर्गणान्मुम्प्रत्ययो भवति अवादौविषये । मुच्लृ मोक्षणे तुदादेरःमंचति विदॢल लाभे विंदति ॥ इदितोनुम् ॥ २ ॥ इदितोर्धातोर्नुमागमो भवति।टुणदि समृद्धौ भ्वादित्वादप् नंदति वदि अभिवादनस्तुत्योः वंदते शकि शंकायां शंकते ॥ शमां दीर्घः ॥ ३ ॥ शमादीनांपूर्वस्यदीर्घोभवति अवादौ दुषेश्च ञ्यंतस्यकृतेचक्वचित् शमदम उपशमे दिवादेर्यः शाम्यति दाम्यति भ्रमु चलने भ्राम्यति तमु ग्लानौ ताम्यति क्लाम्यति दुष् वैकृत्ये दूषयति ॥ य्योः ॥ ४ ॥ यकारे परेधातोरोकारस्यलोपोभवति दोछो अवखंडने द्यति

देरिति परस्मैपदं च परत इति विभागेन यथायथं प्रयोगानुसारेण विवेचनीयमिति भावः ॥ मुचा ॥ १ ॥ अवादाविति क्र्यादिना पर्यंत इत्यर्थः धातोरिति धातोः प्रेरण इत्यतोनुवृत्तस्य तदनुवृत्तिस्तु स्यादिनिवृत्त्यर्था इरः समुदायस्येदित्वाद्धेत्तेत्यादौ ॥ इदितः ॥ २ ॥ न नुम् नंदतीति नुमो नश्चेत्यनुस्वारस्य यमायपेस्येति यमस्तवर्गपंचमो नः ॥ शमां ॥ ३ ॥ दुषेरिति एतच्च ञ्यंतस्य दुषेःशमादिषु पाठादीर्घ इति योगविभागाद्व्यवसीयते शाम्यतीति ये उपधादीर्घः दूषयतीति ञ्णौगुणापवादोत्र दीर्घः उकारः ॥ य्योः॥४॥ यिओरितिच्छेदः तत्र ओरिति ओकारस्य ग्रहणं न उवर्णस्य य इति दीर्घविधानसामर्थ्यान्न चीयत इत्यादौ दीर्घस्य चरितार्थत्वात् व्यक्तिपक्षेपि लूयत इत्यादिरस्यावकाश इति चेन्न कृञोय इतिसूत्रस्य वैयर्थ्यापातान्नैवं तस्यप्रत्ययोकारस्य यलोपार्थत्वादिह च धात्वधिकारान्न तत्र प्रसंगः तथाच वृत्तिः धातोरोकारस्येति एवं तर्हि सिंहावलोकितन्यायेन वक्ष्यमाणं संध्यक्षराणामिति पदं संबंध्यते तच्चार्थादेकवचनांतं संपद्यति संध्यक्षरस्य ओरिति द्यतीति दिवा-

छ्यति शो तनूकरणे श्यति षोंतकर्मणि स्यति ॥ पोरुर् ॥५॥ पवर्गादुत्तरस्य ऋकारस्य उर्भवति किति ङिति परे । सुस्मूर्षति सपरोक्षादौम्रियतेः परस्मैपदं मुमूर्षति परोक्षे ममार ॥ रुदादेश्चतुर्णांह्वसादेः ॥ ६ ॥ रुदादेर्गणात्परेषांचतुर्णांतिबादीनां मध्येह्कारवसादिप्रत्ययस्येड्भवति । अदादित्वादपोलुक् रुदिर् अश्रुविमोचने रोदिति रुदितः रुदंति रोदिषि रुदिथः रुदिथ रोदिमि रुदिवः रुदिमः रुद्यात् रोदितु रोदितात् रुदितां रुदंतु रुदिहि रुदिताद्वा रुदितं रुदित इत्यादि स्वसु प्राणने स्वसिति स्वसितः स्वसति स्वसिषि स्वसिथः स्वसिथ स्वसिमि स्वसिवः स्वसिमः स्वस्यात् स्वसितु स्वसिताद्वा स्वसितां स्वसंतु स्वसिहि इत्यादि ञिष्वप् शये स्वपिति स्वप्यात् स्वपितु स्वपिताद्वा स्वपितां स्वपंतु स्वपिहि अन चेष्टायां प्रपूर्वः प्राणिति

दित्वाद्यलोपः स्यतीति आदेः ष्णः स्न इति षस्य सः ॥ पोरु ॥ ५ ॥ ऋकारस्येति ऋत इत्यतोनुवृत्तस्य मुमूर्षतीति मरणे कस्यापीच्छा नास्तीति प्रयोगादत्राशंकार्थो ज्ञेयः उक्तं च रामचंद्राचार्यैः आशंकायां सन् वक्तव्य इति अत्र बुःस इति इटि निषेधे नानिटिस इत्यगुणेपि उरि द्वित्वे र्वोर्वीति दीर्घः सपरोक्षादाविति एतच्च तद्विधावेवोपपादितं आदिना मर्त्तासि मरिष्यति अमरिष्यदिति वा ॥ रुदादेः ॥ ॥ ६ ॥ यक्रूचतुर्षु नामिनोचतुर्णामित्यादौ चतुःशब्दस्तिवादिचतुष्के रूढ इत्याह चतुर्णांतिबादिगणानामिति ह्वसादेरिति हसूच वसश्च ह्वसोस्तावादिर्यस्येति हकारादिर्वसादिश्चार्थात्प्रत्ययोत्तरपदार्थ इत्याह हकारवसादेः प्रत्ययस्येति वसोत्र प्रत्याहार प्रसिद्धतरत्वात् कृत्रिमत्वात् हः साहचर्याच्च इडीतिसिसतासीत्यतोनुवृत्त अपोलुगिति अत्र तु उत्तरत्रापि हंतिपर्यंतं अदादेर्लुगित्यनेन रोदितीति तकारस्य टित्वादादिरिट् तिपः पित्वाद्गुणः अट् ईट् चेति इटोपवादभूतौ रुदादेरडिति सूत्रेण विहितस्तस्य चायमर्थः रुदादेर्गणात्परयोर्दिस्योरडागमो वा भवति इटेति श्वस् प्राणनं

प्राणितः प्राणंति प्राण्यात् प्राणितु प्राणिताद्वा प्राणितां प्राणंतु इत्यादि जक्ष भक्षहसनयोः जक्षिति जक्षितः जक्षंति जक्षसि जक्षथः जक्षथ जक्ष्यात् जक्षितु जक्षिताद्वा जक्षितां जक्षतु अनद्यतनेऽतीते । रुदादेर्दिस्योरीट् अट् इत्येतावागमौ वक्तव्यौ । अरोदीत् अरुदत् अरोदितां अरुदन् अरोदीः अरुदः अरुदितं अरुदित अरोदं अरुदिव अरुदिम अस्वसीत् अस्वसत् अस्वसितां अस्वसन् इत्यादि अस्वपीत् अस्वपत् अस्वपतां अस्वपन् प्राणीत् प्राणत् प्राणतां प्राणन्नित्यादि । प्राण चेष्टायां इति केचित् अप्राणीत् अप्राणत् अप्रणतां अप्राणन् अजक्षीत् अजक्षत अजक्षितां अजक्षुः ॥ जक्षादेरंतोदनउस् ॥ ७ ॥ जक्षादेर्द्धातोः अंतइत्यस्याद्भवति । अनउस् भवति अजक्षीः अजक्षः अजक्षितं अजक्षित अजक्षं अजक्षिव अजक्षिम ॥ जक्षज्जागृदरिद्रातिचकास्तिशास्तिरेवच ॥ देधीङ्वेवीङ्चविज्ञेषुजक्षादिःसप्तकोगणः ॥ १ ॥ जागृ निद्राक्षये जागर्त्ति जागृतः जाग्रति जागृयात् जागृयातां जागृयुः जागर्त्तु जागृताद्वा जागृतां जाग्रतु अन-

जीवनं श्वसितीति रुदादित्वादिट् प्राणितीति प्राग्वदिट् प्रादेश्चेति णत्वं ञिष्वप् शयः स्वापः ञि इति समुदायस्य प्राग्वदित्वं आदेःष्णः स्न इति सः स्वपितीति रुदादित्वादिट् जक्ष भक्षणं भक्षः अदनमितियावत् जक्षितीति रुदादेरितीट् ॥ उक्तं च ॥ रोदितिः स्वपितिश्चैवश्वसितिः प्राणितिस्तथा ॥ जक्षितिश्चेति विज्ञेयोरुदादिः पंचकोगणः ॥ जक्ष इति ॥ ७ ॥ उक्तार्थाः जागृदरिद्राशासदीधीवेवीचकासइत्येतेभ्यः परस्यांतोऽत् अनश्च उस् आदेशो वाच्य इत्यर्थः । जक्षतीति अत्रांतरंतोऽत् चकासतीति प्राग्वत् जाग्रतीति अत्राति ऋरम् ॥ दरिद्रा-

व्रतनेऽनीते अजागः अजागृतां अजागरुः इत्यादि दरिद्रा दुर्गतौ ॥ दरिद्रादेरिदालोपश्च ॥ ८ ॥ दरिद्रादुर्गतौ शासु अनुशिष्टौ इत्येतयोराकारस्येकारादेशोभवति ङितिहसेपरे । दरिद्रातेरेव आलोपश्चङितिस्वरेपरे दरिद्राति दरिद्रितः दरिद्रति दरिद्रियात् दरिद्रियातां दरिद्रियुः दरिद्रातु दरिद्रिताद्वा दरिद्रितां दरिद्रतु अदरिद्रात अदरिद्रितां अदरिद्रुः शासु अनुशिष्टौ शास्ति शिष्टः शासति शिष्यात् शास्तु शिष्टाद्वा शिष्टां शासतु ॥ जह्योधिशाधि ॥ ९ ॥ हंतेर्जहिशब्दः अस्तेरेधिशब्दः शास्तेः शाधिशब्दः एते निपात्यंते हिविषये शाधि शिष्टाद्वा शिष्टं शिष्ट शासानि शासाव शासाम दिपिसस्य तः सिपिवा अशात् अशिष्टां अशासुः अशात अशाः अशिष्टं अशिष्ट अशासं अशिस्व अशिस्म ईड स्तुतौ ईट्टे ईडाते ईडते ईडिशोः सेध्वेइड्वक्तव्यः । ईडिषे ईडाथे ईडिध्वे ईडे ईड्वहे ईड्महे ईश् ऐश्वर्ये ईष्टे ईशाते ईशते ईशिषे ईशाथे ईशिध्वे ईशे ईश्वहे ईश्महे ॥ ओरौ ॥ १० ॥ उ-

देरिति ॥ ८ ॥ ९ ॥ अस्य हसे इकारः स्वरेलोप इति प्रयोजनं ह्यवस्थेयं दरिद्रित इति हसेत्रेत्वसंतादेशः दरिद्रतीति जक्षादित्वादत्राति कृते आलोपः शास्तीति अपो लुक् शिष्ट इति दरिद्रादेरित्यात इत्वे किलादित्यत्रोपपादितं इत्वषत्वष्टुत्वं शासतीति जक्षादित्वादत् प्रयोगाभावान्नालोपेत्वे ईडीशोरिति ईट्ईश्एताभ्यां सस्य ध्वस्य चेडागमो वाच्य इत्यर्थः ईट्टेइति अपोऽत्र लुकि ष्टुत्वं अपदांतत्वात् टोरंत्यादित्यप्रतिषेधः ईडत इति आतोंतइत्यत् ईडिषे ईडिध्वे इति इटउदाहरणं ईष्टइति छशषेति षत्वे ष्टुत्वं ईशात इति प्राग्वत् ईशिषे ईशिध्वइति इट्त न एष्ट ईशांचक्रे ईसिषीष्ट ईशितासे ईशिष्यते ऐशिष्यत ऐशिष्टेति ज्ञेयम् ॥ ओरौ ॥ १० ॥ ननुओ-

कारांतानांधातूनामुकारस्यौकारोभवति पितित्स्मि अ-
वादौ युरुणुस्तुभ्यः ईर्वा यु मिश्रणे यौति यवीति युतः
युवंति यौषि यवीषि युथः युथ यौमि यवीमि युवः
युमः णु स्तुतौ नौति नवीति नुतः नुवंति रु शब्दे रौति
रवीति रुतः रुवंति ष्टुञ् स्तुतौ स्तौति स्तवीति
स्तुतः स्तुवंति स्तौषि स्तवीषि स्तुथः स्तुथ स्तौमि
स्तवीमि इत्यादि ॥ लोपस्त्वनुदात्ततनांक्ङिति ॥ ११ ॥
अनुदात्तानांतनादीनांचञमस्यलोपोभवति क्ङिति
झसेपरे । हंति हतः गमांस्वरे इत्यकारलोपः घ्नंति हंसि
हथः हथ हन्मि हन्वः हन्मः हन्यात् हन्यातां हन्युः
हंतु हताद्वा हतां घ्नंतु जहि हताद्वा हतं हत हनानि
हनाव हनाम अहन् अहतां अघ्नन् अहन् अहतं अहत

रित्योकारस्य ग्रहणमुवर्णस्य वा नाद्यः य्वोरित्यनुवृत्तेः पुनरोर्ग्रहणादुकारादेशतो-न्यस्याऽभावाच्च एवं तर्हि ओरित्यनुवृत्त्या तस्यैवौकारो विधीयतां किं पुनरोकारग्र-हणेन सत्यं लाक्षणिकस्य कार्यं न भवतीति ज्ञापनार्थमुवर्णग्रहणं ततश्च लक्षणप्रतिपदो-क्तयोः प्रतिपदोक्तस्यैवग्रहणमित्येतदुपपन्नं भवति इत्यभिप्रेत्य द्वितीयं पक्षमाश्रयति उकारस्येति त्स्मि अवादाविति च व्यधिकरणसप्तमी तेनतकारसकारमकारादौ पिति परत इति व्यवहितेनापि परशब्देन संबंधः पितीति च व्यधिकरणेयंसप्तमी इति लुप्तेष्यपिभवति अन्यथा तु तेन व्यवधानान्न स्यात् एतच्चावादावित्यतोनुवर्तते युरुणु इति अयंभावः ओरावित्यत्र अवादावित्यत ईवत्रानुवर्तते विदोनवानामित्यतो वा शब्दश्च स च व्यवस्थितविकल्पार्थः तेन एभ्यः पक्षे ईबपि भवति यौतीति अदादित्वादपो लुकि ओत्वं यवीतीति ईपि तद्व्यवधानादौत्वाभावे गुणावौ केचित्तु युमपास्य तस्य स्थाने नुधातुं पठंति उन्नौति उन्नवीतीति चोदाहरंति तथाह पाणिनिः नुरुस्तुशम्यमः सार्वधातुक इति नौति नवीतीति प्राग्वत् स्तौतीति आदेःष्णः स्न इति सत्वं ॥ लोपः ॥ ११ ॥ अनुदात्तानामिति अनिटामित्यर्थः तनादीनामिति सूत्रे बहुवचननिर्दिष्टानां क्षणुप्रभृतीनामित्यर्थः ञमस्य क्ङितिझसे इत्यतोनुवृत्तेः क्ङिति

अहन्व अहन्म आत्मनेपदे आहते आघ्नाते आघ्नते आघ्नीत आहतां आघ्नातां आघ्नतां आहत आघ्नतां आघ्नत इत्यादि ॥ नमः ॥ १२ ॥ नम्प्रत्ययात्परस्यनो लोपोभवति । भंजो आमर्दने भनक्ति भंक्तः भंजंति भनक्षि भंथः भंथ भनज्मि भंज्वः भंज्मः । अपि रंज-दंशषंजष्वंजांनलोपोवक्तव्यः । रंज रागे रजति दंश दशने दशति सजति स्वजति ॥ विदोनवानांत्या-दीनांणबादिर्वा ॥ १३ ॥ विद्उत्तरेषांतिबादीनां नवानां

असे अव्यवहितस्य ञमस्य लोप इत्यर्थाश्रयणात् ञणनङमांताऽनिटो गृह्यंते हंतीति अप्लुक्यनुस्वार यमौ हत इति तसो ङित्वान्न लोपः घ्नंतीति उपधालोपेऽत्र हनोघ्न इति घत्वं हन्यादित्यादौ तु न विशेषः हंतु हतात् हतां घ्नंतु हौतु वक्ष्यति हनानि अहन् अहतां अघ्नन् अहन् जघान वध्यात् असादेरिति वधादेशः हंतासि हनिष्यति अहनिष्यत् अवधीत् ॥ नमः ॥ १२ ॥ ननु नमिति किं धातुर्गृह्यते प्रत्ययो वा नाद्यः धातोरनंतरस्य नकारस्यासंभवात् कृत्रिमत्वाच्चेत्यभिप्रेत्यांत्यमाश्रयति नमःप्रत्यया-दिति रुधादेर्नमितिविहितादित्यर्थः नोलोप इति नलोप इत्यतोनुवृत्त्यर्थः भनक्तीति भंजो आमर्दन इत्यस्मात्तिवादौ रुधादित्वान्नमि मित्वादकारात्परे सति ततः परस्यो-पधानकारस्यानेन लोपः भंक्त इति नमसोस्येति नमो लोपः ॥ अपिरंजीति रंज रागे ष्वंज परिष्वंगे दंश दशने षंज संगे एषामुपधाया नस्यापि प्रत्यये परे वक्तव्य इत्यर्थः रजतीत्यादि अपि न लोपो भवतिवत् आदिना दशति सजति ॥ विदो ॥ ॥ १३ ॥ ननुकिमिदं सत्ताविचारार्थयोर्विदो ग्रहणं लाभार्थस्य वा ज्ञानार्थस्य वा नाद्यः आत्मनेपदित्वात्तिबादीनामाद्यानामसंभवात् नच परेषां परविधानेपि वचनस्य चरितार्थत्वमाशंकेति यमादयस्तिबादयस्तेषामिति समाश्रयणादादेः ष्णः स्नइत्यत्र आदेरित्यनुवृत्तेर्वापरस्मैपदानामेव विधानात् । नापि द्वितीयः विकरणेन व्यवधानात् तस्मादंत्यमेवाश्रित्योदाहरिष्यति तिबादीनामिति तिप्तसंतीत्यादीनामित्यर्थः नवानां च स्थानिनां नवैवादेशा युक्ता इत्याह णबादिर्नवक इति अब्लुकि तिपः पित्वाद्गुणः द्विश्चेत्यत्र च परोक्षे णबित्यादि संबंध्यत इति नेह द्वित्वप्रसंगः विदतुरिति तसो ङित्वान्न

णबादिर्नवको वा भवति । वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म पक्षे वेत्ति वित्तः विदंति वेत्सि वित्थः वित्थ वेद्मि विद्वः विद्मः ॥ वित्तेरंतो वा रुट् ॥ १४ ॥ वित्तेर्द्धातोः अंतइत्यस्य वा रुडागमो भवति । व्यतिवित्ते व्यतिविदाते व्यतिविद्रते व्यतिविदते विद्यात् वेत्तु वित्ताद्वा वित्तां विदंतु विद्धि वित्ताद्वा वित्तं वित्त वेदानि वेदाव वेदाम अवेत अवेद्दं आवित्तां अविदुः अनउस् सिपि परे दःसः इति विकल्पेन सत्वं सिपि वा दिस्योर्हसात अवे अवेद् अवेः अवित्तं अवित्त अवेदं अविद्व अविद्म अस् भुवि अस्ति नमसोस्येत्य-कारलोपः स्तः संति ॥ सौसः ॥ १५ ॥ अस्तेर्द्धातोः सका-रस्य लोपो भवति सिपि परे । असि स्थः स्थ अस्मि स्वः स्मः स्यात् स्यातां स्युः अस्तु स्ताद्वा स्तां संतु एधि

गुणः वेत्थेति खसेचपा इति दस्य तः क्रादेर्णादेरित्यनुमत इडत्र न भवति क्रादेः परस्यादिष्टस्य णबादेरसंभवात् नियमेन च तुल्यजातीपविषय एव विधानात् सिंहावलोकितन्यायेन नासिनोचतुर्णामित्यतोऽचतुर्णामिति संबं-धाद्वेति णबाद्यभावपक्षे सुगमः ॥ वित्तेरिति ॥ १४ ॥ अंत इति षष्ठीवक्तव्या इति शेषः वाग्रहणात्परस्मपदे न भवति व्यतिविद्रत इति विदेः कर्मव्यतिहारे आत्म-नेपदं अंत इत्यस्यादेरुट् संविद्रत इति निविशादेरित्यात्मनेपदं हौ तु झसाद्धि-र्हेरिति विद्धि अवेदित्यादि दिस्योर्हसादिति लोपः वावसान इति पक्षे तः दस्यइति अवेरित्यत्रेति शेषः अस्तीति असूभुवीत्यास्मात्तिवादिष्वपो लुक् । स्त इति नमसोऽस्येत्यलोपः ॥ सौसः ॥ १५ ॥ सीति निमित्तसप्तमी स इति स्थानषष्ठी ओर्वमोरित्यतो लोपोनुवर्तते नमस इत्यतोस्तिरपीत्याह अस्तेरित्यादि वृत्तौसीपीत्युपलक्षणं सकारमात्रे पर इत्यर्थः अतएव कर्मव्यति-हारे से परे व्यतिषे इत्यत्रापि सलोपो भवति उत्तमे तु व्यतिहे इत्याद्यर्थं

स्नाद्वा स्तं स्त असानि असाव असाम ॥ अस्तेरीट् ॥१६॥ अस्तेः परयोर्दिस्योरीडागमो भवति । आसीत आस्तां आसन आसीः आस्तं आस्त आसं आस्व आस्म लिह् आस्वादने होढः तथोर्द्धः ष्टुभिःष्टुः उपधायालघोरिति गुणः ॥ ढिढोलोपोदीर्घश्च ॥ १७ ॥ ढकारे परे ढकारस्य लोपो भवति पूर्वस्य च दीर्घः । लेढि लीढः लिहंति लेक्षि लीढः लीढ लेह्मि लिह्वः लिह्मः लिह्यात लिह्यातां लिह्युः लिह्याः लिह्यातं लिह्यात लिह्यां लिह्याव लिह्याम लेढु लीढाद्वा लीढां लिहंतु । लिहो हेरिद्वा वक्तव्यः । लिहिहि इडभावेकचित्पदांतत्वमाश्रित्य होढ इति ढत्वे कृते झसाद्धिर्हेः ष्टुत्वं ढिढो लोपोदीर्घश्च लेढि लीढाद्वा लीढं लीढ लेहानि लेहाव लेहाम अलेट् अलेड् अलीढां अलिहन् अलेट् अलेड् अलीढं अलीढ अलेहं अलिह्व अलिह्म चक्षिङ्

ओर्वमोवेत्यतोनुवृत्तस्य वा शब्दस्य निपातानामनेकार्थत्वादेकारे परे सस्य हकारादेशः सीति किं स्तः स इति किं अस्येत्यनुवृत्त्या अकारस्य माभूत् विपरीतनिर्देशो वैचित्र्यार्थः असीति सलोपः स्यादित्यदि सर्वत्रालोपः जहोहंतेरि स्यादि इहाननुवृत्त्या अपि हंत्यादयः प्रकृतिप्रत्ययसमुदायाः अर्थतः आंतरतम्यात् जह्यादिभिः स्थानित्वेनाक्षिप्यंते इति भावः हिविषय इति तुबादिमध्यमैकवचनविषय इत्यर्थः एधीति अत्रास्तेरेत्वं हेश्च धित्वं निपात्यते एवं जहीत्यत्रापि हंतेर्जभावो हेरलोपश्च शाधीत्यत्रापि शास्तेः सादेशे हेर्धित्वं च असानीति पित्वादलोपाभावः ॥ अस्तेः ॥ १६ ॥ दिस्योरिति दिस्योर्हसादित्यतो नुवृत्तयोः आसीदिति टित्वादादिरीट् स्वरादित्वाद्वितीयेनाप्यटा दीर्घः अनपितु असादेरिति श्नादेशो भवतिवत्प्रक्रिया लिह लेढि इति उक्तप्रक्रियाया मिति शेषः ढिढो ॥ १७ ॥ पूर्वस्यचेति लुप्तढकारात्पूर्वस्येत्यर्थः लेढीति एकारस्य एकार एव च दीर्घः लीढ इत्यत्र इकारः लेक्षीति होढइति ढस्य षढोःक इति कत्वे किलादिति षत्वे क्षः लीढीति ढत्वे झसादिति हेर्द्धित्वे पूर्ववत् अले-

व्यक्तायां वाचि आत्मनेपदे चक्षते इति स्थिते ॥ स्कोराद्योश्च ॥ १८ ॥ संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च ॥ अन्यत्रसोजः ॥ ओलम्जी व्रीडे लज्जते । व्याङ्पूर्वः व्याचष्टे व्याचक्षाते व्याचक्षते व्याचक्षे व्याचक्षाथे व्याचड्ढ्वे व्याचक्षे व्याचक्ष्वहे व्याचक्ष्महे व्याचक्षीत व्याचक्षीयातां व्याचक्षीरन्नित्यादि व्याचष्टां व्याचक्षातां व्याचक्षतां व्याचक्ष्व व्याचक्षाथां व्याचड्ढ्वं व्याचक्षै व्याचक्षावहै व्याचक्षामहै व्याचष्ट व्याचक्षातां व्याचक्षत व्याचष्ठाः व्याचक्षाथां व्याचड्ढ्वं व्याचक्षि व्याचक्ष्वहि व्याचक्ष्महि चकासृ दीप्तौ चकास्ति चकास्तः चकासति चकास्सि चकास्थः चकास्थ चकास्मि चकास्वः

ढिति दिस्योर्हसादिति लोपः उभयपदित्वादात्मनेपदे तु लीढे लिहीत लीढां अलीढेति भवति अनपि तु लिलेह लिलिहे लिह्यात् लिक्षीष्ट लेढा लेक्ष्यति लेक्ष्यते अलेक्ष्यत् अलेक्ष्यत तृहू हिंसायामित्यस्य क्तप्रत्यये ढत्वादिषु कृतेषु संज्ञापूर्वकस्यविधेरनित्यत्वाददीर्घे च तृढ इति ज्ञेयं चक्षिङ् चक्षत इति अदादित्वादप्लुकीति शेषः ॥ स्कोरा ॥ १८ ॥ अत्र संयोगांतस्येत्यतः संयोगग्रहणमादित्यनेनसंबध्यते इत्याह संयोगाद्योरिति वाक्यार्थमित्यादौ तु सत्यपि पदांतत्वे बहिरंगस्य यत्वस्यासिद्धत्वान्न ककारलोपः अन्यत्रेति लोपनिमित्तादन्यत्रेत्यर्थः सोजइतिन्यायसिद्धमेतत् परत्वादादौ झबेजबा इति सकारस्य दकारे तस्य चुत्वेन जः व्याचष्ट इति झसे सकारे कषयोराद्यकलोपे ष्टुत्वं व्याचष्ट इति आतोंत इत्यत व्याचक्ष इति कलोपे षस्य कत्वात् किलादिति सस्य षत्वे क्षः व्याचड्ढ्व इति कलोपेत्र झबेजबा इति षस्य डकारे ष्टुत्वेन धस्य ढः अपदांतत्वाच्च टोरंत्यादिति न निषेधः डत्वनिषेधार्थमित्यपि षोड इत्येतद्विषयमेव अथवा छशषेत्यत्र दुहादेर्वेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेरत्र पुनः षत्वमेव न प्रवर्तत इति न्यायमेत चिंताविषयः शिष्टं स्पष्टं अनपितु असादेरिति ख्याञ् चादिष्ट चख्यौ चक्ष्यौ

व्यक्तायां वाचि आत्मनेपदे चक्षते इति स्थिते ॥ स्कोराद्योश्च ॥ १८ ॥ संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च ॥ अन्यत्रसोजः ॥ ओलस्जी व्रीडे लज्जते । व्याङ्पूर्वः व्याचष्टे व्याचक्षाते व्याचक्षते व्याचक्षे व्याचक्षाथे व्याचड्ढे व्याचक्षे व्याचक्ष्वहे व्याचक्ष्महे व्याचक्षीत व्याचक्षीयातां व्याचक्षीरन्नित्यादि व्याचष्टां व्याचक्षातां व्याचक्षतां व्याचक्ष्व व्याचक्षाथां व्याचड्ढं व्याचक्षै व्याचक्षावहै व्याचक्षामहै व्याचष्ट व्याचक्षातां व्याचक्षत व्याचष्ठाः व्याचक्षाथां व्याचड्ढं व्याचक्षि व्याचक्ष्वहि व्याचक्ष्महि चकासृ दीप्तौ चकास्ति चकास्तः चकासति चकास्सि चकास्थः चकास्थ चकास्मि चकास्वः

डिति दिस्योर्हसादिति लोपः उभयपदित्वादात्मनेपदे तु लीढे लिहीत लीढां अ लीढेति भवति अनपि तु लिलेह लिलिहे लिह्यात् लिक्षीष्ट लेढा लेक्ष्यति लेक्ष्यते अलेक्ष्यत् अलेक्ष्यत तृहू हिंसायामित्यस्य क्तप्रत्यये ढत्वादिषु कृतेषु संज्ञापूर्वकस्यविधेरनित्यत्वाददीर्घे च तृढ इति ज्ञेयं चक्षिङ् चक्षत इति अदादित्वादप्लुकीति शेषः ॥ स्कोरा ॥ १८ ॥ अत्र संयोगांतस्येत्यतः संयोगग्रहणमादित्यनेनसंबध्यते इत्याह संयोगाद्योरिति वाक्यार्थमित्यादौ तु सत्यपि पदांतत्वे वहिरंगस्य यत्वस्यासिद्धत्वान्न ककारलोपः अन्यत्रेति लोपनिमित्तादन्यत्रेत्यर्थः सोजइतिन्यायसिद्धमेतत् परत्वादादौ झबेजबा इति सकारस्य दकारे तस्य चुत्वेन जः व्याचष्ट इति झसे सकारे कषयोराद्यकलोपे ष्टुत्वं व्याचष्ट इति आतोंत इत्यत व्याचक्ष इति कलोपे षस्य कत्वात् किलादिति सस्य षत्वे क्षः व्याचड्ढ इति कलोपेत्र झबेजबा इति षस्य डकारे ष्टुत्वेन धस्य ढः अपदांतत्वाच्च टोरंत्यादिति न निषेधः डत्वनिषेधार्थमित्यपि षोड इत्येतद्विषयमेव अथवा छशषेत्यत्र दुहादेर्वेत्यतो व्यवस्थितविकल्पार्थवानुवृत्तेरत्र पुनः षत्वमेव न प्रवर्तत इति न्यायमेत चिंताविषयः शिष्टं स्पष्टं अनपितु असादेरिति ख्याञ् चादिष्ट चख्यौ चक्ष्यौ

वेविक्तः वेविचति वेविच्यात् वेवक्तु वाविक्ताद्वा वेविक्तां वेविचतु अवेवक् अवेवेग् अवेविक्तां अवेविचुः विष्लृ व्याप्तौ वेवेष्टि वेविष्टः वेविषति वेविष्यात् वेवेष्टु वेविष्टाद्वा वेविष्टां वेविषतु वेविड्ढि अवेवेट् अवेवेड् अवेविष्टां अवेविषुरित्यादि पृ पालनपूरणयोः व्याङ्पूर्वः ह्लादेर्द्विश्च ॥ ऋप्रोरिः पूर्वस्य ॥२०॥ ऋ गतौ पृ पालनपूरणयोः पूर्वस्य इर्भवति व्यापिपर्ति व्यापिपृतः व्यापिप्रति व्यापिप्रियात् व्यापिपर्तु व्यापिपृतां व्यापिप्रतु व्यापिपृहि । ऋप्रोर्दिस्योरडागमोवावक्तव्यः । व्यापिपरत् व्यापिपः व्यापिपृतां व्यापिपरुः व्यापिपरः व्यापिपः व्यापिपृतं व्यापिपृत व्यापिपरं व्यापिपृव व्यापिपृम ऋ गतौ ॥ असवर्णेस्वरेपूर्वेकारस्यइया-

देशोऽनयोर्बिह्लछंदसि विधानार्थः व्याङ्पूर्व इति धातोरित्यनेन व्यापिपर्तीति पूर्वस्येत्यं परस्य गुणः पिपृतः पिप्रति अपित्तादिरिति ङित्वान्न गुणः यावन् ऋप्रोर्दिस्योरिति व्यापिपरदिति टित्वादाद्ये अटि गुणः व्यापिपर इति अड्भावे गुणे दिस्योर्हसादिति लोपः व्यापिपरुरिति अनउसित्युसि अद्व्युसीत्युक्तेर्गुणः पपार पप्रतुः पपर्थ प्रियात् पर्त्तासि परिष्यति अपरिष्यत् अपार्षीन् दीर्घोते पिपर्तिरस्ति तस्य तु क्ङिति पोरुरित्युरि पिपूर्ति पिपूर्तां पिपरतु पिपूर्यान् पपरतुः पपरुः पिपरिथ इटोग्रहामिति दीर्घाभावं तत्रैव वक्ष्यामः पूर्यान् परितासि परीष्यति अपरीष्यत् अपारीत् अपारिष्टां अपारिषुः शिष्टं पूर्वेणसमम् ॥ ऋ ॥ २० ॥ असवर्णे इति भिन्नस्थानप्रयत्न इत्यर्थः पूर्वस्येति द्वित्वेन पूर्वरूपस्येत्यर्थः इकारस्येति उपलक्षणं उवर्णस्यापि इयादेश इत्यप्युपलक्षणमुवादेशोपि उवोपेत्यादौ वाच्य इत्यर्थः अथवा नुधातोरित्यत्र य्वोवेत्यतोऽनेकार्थबानुवृत्तेरेतत्सर्वं सिद्ध्यतीति ज्ञेयं इयर्तीति ह्लादित्वाद्द्वित्वे ऋप्रोरिति पूर्वस्येति तस्यापि परस्य गुणोर् इयर्ति द्वेरित्यत् हौ इयृहि इयराणि इयिक्रते दिवादावटा एत्वे स्वरादिति द्वितीयेनाटा ऐत्वं परस्य गुणोरिटिलोपे परस्य विसर्गः ऐयरोदिति दिस्योरट् आर आरतुः आरुः अर्यात् अर्ता अरिष्यति आरिष्यत् आरत् एतीति अदादित्वादपोलुकि गुणः यंतीति

वेविक्तः वेविचति वेविच्यात् वेवक्तु वाविक्ताद्वा वेविक्तां वेविचतु अवेवेक् अवेवेग् अवेविक्तां अवेविचुः विष्लृ व्याप्तौ वेवेष्टि वेविष्टः वेविषति वेविष्यात् वेवेष्टु वेविष्टाद्वा वेविष्टां वेविषतु वेविड्ढि अवेवेट् अवेवेड् अवेविष्टां अवेविषुरित्यादि पृ पालनपूरणयोः व्याङ्पूर्वः ह्वादेर्द्वित्वं च ॥ ऋप्रोरिः पूर्वस्य ॥२०॥ ऋ गतौ पृ पालनपूरणयोः पूर्वस्य इर्भवति व्यापिपर्ति व्यापिपृतः व्यापिप्रति व्यापिप्रियात् व्यापिपर्तु व्यापिपृतां व्यापिप्रतु व्यापिपृहि । ऋप्रोर्दिस्योरडागमो वा वक्तव्यः । व्यापिपरत् व्यापिपः व्यापिपृतां व्यापिपरुः व्यापिपरः व्यापिपः व्यापिपृतं व्यापिपृत व्यापिपरं व्यापिपृव व्यापिपृम ऋ गतौ । असवर्णे स्वरे पूर्वेकारस्य इया-

देशोऽनयोर्विहुलंछन्दसि विधानार्थः व्याङ्पूर्व इति धातोरित्यनेन व्यापिपर्तीति पूर्वस्येत्वं परस्य गुणः पिपृतः पिप्रति अपित्त्वादिरिति ङित्वान्न गुणः भवन् ऋप्रोर्दिस्योरिति व्यापिपरदिति टित्वादाद्ये अटि गुणः व्यापिपर इति अडभावे गुणे दिस्योर्हसादिति लोपः व्यापिपरुरिति अनडसित्युसि अडभ्युसीत्युक्तेर्गुणः पपार पप्रतुः पपर्थ प्रियात् पर्तासि परिष्यति अपरिष्यत् अपार्षीत् दीर्घोर्ते पिपर्त्तिरस्ति तस्य तु क्ङिति पोरुरित्युरि पिपूर्ति पिपूर्तां पिपरतु पिपूर्यात् पपरतुः पपरुः पिपरिथ ईटोग्रहामिति दीर्घाभावं तत्रैव वक्ष्यामः पूर्यात् परीतासि परीष्यति अपरीष्यत् अपारीत् अपारिष्टां अपारिषुः शिष्टं पूर्वेणसमम् ॥ ऋ ॥ २० ॥ असवर्ण इति भिन्नस्थानप्रयत्न इत्यर्थः पूर्वस्येति द्वित्वेन पूर्वरूपस्येत्यर्थः इकारस्येति उपलक्षणं उवर्णस्यापि इयादेश इत्यप्युपलक्षणमुवादेशोपि उवोपेत्यादौ वाच्य इत्यर्थः अथवा नुधातोरित्यत्र य्वोवेत्यतोऽनेकार्थत्वानुवृत्तेरेतत्सर्वं सिद्ध्यतीति ज्ञेयं इयर्तीति ह्वादित्वाद्द्वित्वे ऋप्रोरिति पूर्वस्येति तस्यापि परस्य गुणोर् इयर्ति द्वेरित्यत् हौ इयृहि इयराणि इयिकृते दिवादावटा एत्वे स्वरादिति द्वितीयेनाटा ऐत्वं परस्य गुणोरिटिलोपे परस्य विसर्गः ऐयरोदिति दिस्योरट् आर आरतुः आरुः अर्यात् अर्ता अरिष्यति आरिष्यत् आरत् एतीति अदादित्वादप्लोलुकि गुणः यंतीति

**देशोवक्तव्यः । इयर्त्ति इयृतः इम्रति इयर्तु इयृतात् इयृतां इम्रतु स्वरादित्वाद्द्वितीयोऽडागमो भवति पित्वाद्गुणः ऋप्रोर्दिस्योर्वाडागमः ऐयरत् ऐयः ऐयृतां ऐयरुः ऐयरः ऐयः ऐयृतं ऐयृत ऐयरं ऐयृव ऐयृम इण् गतौ एति इतः यंति एषि इथः इथ एमि इवः इमः इयात् एतु इताद्वा इतां यंतु आङ्पूर्वः एहि इतं इत अयानि अयाव अयाम ऐत ऐतां आयन् ऐः ऐतं ऐत आयं ऐव ऐम भावे कर्मणि यक् प्रत्ययः ये दीर्घः । ईयते ईयेते ईयंते परोक्षे इयाय ईयतुः ईयुः इयेथ वेट्थपः ईयिथ ईयथुः ईय ईयाय ईयिव ईयिम इषु इच्छायां इयेष ईषतुः ईषुरित्यादि ॥ धातूनामप्यनंतत्वान्नानार्थत्वाच्चसर्वथा ॥ अभिधातुमशक्यंइत्यलमाख्यातख्यापने ॥ इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदनुभूतिस्वरूपाचार्यविरचितेसारस्वतव्याकरणेआख्यातनाम्नीत्यादिवृत्तिः द्वितीयासमाप्ता ॥ २ ॥**

वानुवृत्तेर्नुधातोरिति यत्वं अयानीति गुणेऽप् ऐदिति अड्भ्यामेत्वैत्वे इयायेति परस्यवृद्धौ पूर्वस्येय् ईयतुरिति वानुवृत्तेर्नुधातोरिति परस्येयि सवर्णे दीर्घः इययिथ ईयेथं ईयथुः इयाय इयय ईयिव ईयिम ईयात् एता एष्यति ऐष्यत् अगात् इयेषेति उपधागुणे पूर्वस्येय् ईषतुरिति सवर्णस्वरत्वादियोऽभावे दीर्घः इयेषिथ ईषथुः इष्यात् एषिता एषिष्यति ऐषिष्यत् ऐषीत् इति प्रयोगानुसारेण व्याख्यातव्यमिति शेषः सत्यपि स्वसामर्थ्ये निरूपणसंकोचे हेतुमाह धातूनामिति इति हेतोराख्यातख्यापनेनालं आख्यायंते तिबादयोस्मिन्नित्याख्यातप्रकरणं आख्यायंत इत्याख्यातास्तिबादयो वा तस्य तेषां व्याख्यानेन विवरणेनालं कुत इत्याह सर्वथा पाठतोर्थतश्चयस्मात्सामस्त्येन वक्तुमशक्यं न शक्यत इत्यर्थः अत्र हेतुः धातूनामनंतत्वात् अनंता हि धातवः तथाहि भवतेरेव यङि बोभूयते ततः से बोभूयिषते ततोपि बोभावयति ततोपि प्रत्ययांतरविधानेन यकस्यैव भेदानंत्यएवमन्येषामपि अतएवोक्तं वर्द्धते हि धातुगण इति नानार्थत्वाचेति अनेकार्थत्वादित्यर्थः तथा चोक्त

अथ कृत्प्रत्ययाः निरूप्यंते ॥ कृत्कर्त्तरि ॥ १ ॥ वक्ष्यमाणः प्रत्ययः कृत्संज्ञकः सचकर्त्तरिभवति ॥ तृंवुणौ ॥ २ ॥ धातोस्तृव्वुणौ प्रत्ययौ भवतः । पक्तृ इतिस्थिते नामसंज्ञायां स्यादिर्विभक्तिः पक्ता हर्ता इत्यादि ॥ कृतः ॥ ३ ॥

क्रियावाचित्वमाख्यातुंप्रसिद्धार्थः प्रदर्शितः ॥ अप्रयोगेतुगंतव्याह्यनेकार्थाहि धातवः ॥ इति अनंतधात्वर्थविशेषवंतमाख्यातमाख्यातुमलं गिरीशाः अतो यथाबुद्धिकृते मयात्र संतो हि संतोषमलं दधतां इतीति इतिः समाप्तौ ॥ आख्यातप्रक्रिया समाप्तेत्यर्थः ॥ श्रीजानार्द० तस्य० सारस्वतीयागमत् व्याख्यातश्चसमापनंसुविशदा सिद्धांतरत्नावली ॥ इतिद्वितीयावृत्तिः ॥ २ ॥
अथेति कृत् अंते येषांते कृदंताः कर्तव्यादयः तेषां प्रक्रिया निरूप्यत इत्यर्थः ॥ कृत् ॥ १ ॥ वक्ष्यमाण इति अनेन कृद्ग्रहणं संज्ञात्वेनाधिक्रियत इति सूचितं अत्र च प्रमाणं सिसतासीस्यपामिड्विधिः पूर्वेषामपि कृत्संज्ञा कृत इत्यनेनैवेटः सिद्धत्वात्पुनस्तद्विधानं व्यर्थं स्यात् न च नियमार्थमिति वाच्यं स्यादीनामेव इट् नान्येषामिति अतएव रुदादेश्चतुर्णामिति अस्यारंभः नियमविधेर्बलीयस्त्वात् व्याख्यानतोविशेषप्रतिपत्तेर्वा क्रादृणादेरिति निषेधारंभाद्वा स च कर्तरिति नत्वनिर्दिष्टार्थत्वात् स्वार्थे भावे इत्यर्थः ननु घञ्भावइत्यस्य भावे घञेव नान्यः कृदिति नियमार्थत्वाद्भावे न भविष्यति अन्यथा घञोपि कृत्वाद्भाव विधिसिद्धेर्भावग्रहणस्य वैयर्थ्यापातः न चैवं धात्वर्थेनाक्षेपात्कर्तृवत्कर्मादिष्वपि कृतः स्युरिति वाच्यं कार्ये क्तः ल्युट्करणइत्यादौ कर्मकरणादीनां नियमार्थत्वात् एवं तर्हि घञर्थोभावः स्वार्थादन्यः धात्वर्थस्य सिद्धता नामेति शुद्धे भावे कृतां प्रसंगात्कर्तरीति इदं च योगद्वयमपि लाघवाय सहव्याख्यातम् ॥ तृवु ॥ ॥ २ ॥ णकारो वृद्ध्यर्थः पक्ता इति कृतः इतीटोनैकस्वरादिति निषेधे चोः कुत्वे सतीत्यर्थः नामसंज्ञायामिति कृदंतत्वात् कृत्तद्धितेति शेषः पक्तेति सौ स्तुरारित्यारि सेत्यात्वे टिलोपः शेषं कर्तृवत्कर्ता हर्तेति गुणोत्र ननु चापित्तादिरिति तृप्रत्यस्य ङित्वात् क्ङितीति गुणनिषेधः स्यात् न ङित्वाप्रवृत्तेर्लिंत्पुषादेर्ङ इत्यत्रोपपादित्वात् अतएव ग्रहामिति संप्रसारणमपि न भवति तथा च नाम्युपधा इति कित्वमप्युपपद्यते ॥ कृतः ॥ ३ ॥ वसादेरिति रुदादेरित्यवृत्तस्येत्यर्थःभवितेति

धातोः परस्यकृत्प्रत्ययस्यवसादेरिडागमोभवति । भविता एधिता ॥ उदितोवा ॥ ४ ॥ उदितोधातोरिड्वाभवति । गोपिता गोप्ता सेधिता सेद्धा ॥ सहवहोरो ॥ ५ ॥ सहो वहोधातोरकारस्योकारोभवति सोढा वोढा ॥ युवो-रनाकौ ॥ ६ ॥ युवुइत्येतयोरनाकइत्येतावादेशौ भवतः यथासंख्येन । णित्वादतउपधाया इति वृद्धिः पचति वा पाचयतीति पाचकः पाठयति पठति वा पाठकः कारकः सावकः श्रावकः लावकः भावकः यावकः पावकः ॥ ना-म्युपधात्कः ॥ ७ ॥ नाम्युपधाद्धातोः कः प्रत्ययोभवति । क-कारोगुणप्रतिषेधार्थः क्षिपः भिदः जानातेश्च ज्ञः ॥ पचि-नंदिग्रहादेरयुणिनि ॥ ८ ॥ अयुणिनिइत्येते प्रत्ययाभवं-ति यथासंख्येन पचादेर्नंदादेर्ग्रहादेश्च णकारो वृद्ध्यर्थः

गुणावौ ॥ उदितः ॥ ४ ॥ तपरकरणमसंदेहार्थं गोपिता गोप्तेति गुपूरक्षणे आय-प्रत्ययाभावे च वेट् ॥ सहेति ॥ ५ ॥ औरित्यत्र उ अ इति छेदः अ इति स्थानि-निर्देशः अतएवोह ऊढवानित्यादौ न भवति अकारग्रहणे चाकारस्यापि ग्रहणादुद वोढामित्यत्र वृद्धौ कृतायामाकारस्यौत्वं इति नामिवत्वेपिपुनर्न वृद्धिः ओकारस्य लाक्षणिकत्वाद्वा उपदेशे नामिवतो ग्रहणाद्वा एतच्च ढलोपसूत्रादनंतरं द्रष्टव्यमिति नातिव्यापकं सोढेति सहेरनिटोऽत्र तृप्रत्यये ओत्वे दत्वधत्वष्टुत्वढलोपा एवं वोढापि ॥ युवोः ॥ ६ ॥ अनुनासिकयोरिष्टत्वादहंयुः कंबुरित्यादौ न कारक इत्यादि वोरकेत्र धातोर्नामिन इति वृद्धिः पाठक इति ञ्यंतस्यापि धातुत्वात्ततोपि वुणिञेरिति ञिलोपस्तद्विधावेवोपपादितः ॥ नाम्यु-पधा ॥ ७ ॥ कार इति एतच्चानंतरमेवोपपादितं क्षिप इति क्षिपतीत्यर्थः क्ङितीति न गुणः जानातेरिति चकारोयमनुक्तसमुच्चयार्थः इति प्रियः किरः इत्यादयो ज्ञेयाः ज्ञ इति आतोनपीत्यालोपः ॥ पचि ॥ ८ ॥ अत्र पच्यादीनां द्वंद्वे आदिशब्देन बहुव्रीहिरिति पच्यादिभिः आदेः प्रत्येकं संबंधः एभ्योगणेभ्यश्च त्रयः प्रत्यया इत्याह पचादेरिति देव इति दीव्यतेरुपधागुणः नंदन इति

नकारस्येकारः उच्चारणार्थः पचः वदः देवः सेवः नंदयतीति नंदनः रमु क्रीडायां रमणः रु शब्दे रौयुण् रावणः ग्रह उपादाने गृह्णातीति ग्राही विरावी स्थायी दीर्घिकल्पद्रुमवद्रूपं नेयं ॥ दृशादेः शः ॥ ९ ॥ दृशादेर्धातोः शप्रत्ययोभवति । शकारश्चतुर्वत्कार्यार्थः ॥ शितिचतुर्वत् ॥ १० ॥ शितिप्रत्ययेपरेचतुर्षुतिबादिषुयत्कार्यमुक्तं तद्भवति । दृशिर् प्रेक्षणे पश्यः धेट् पाने धयः जिघ्रः उद्धमः गोघ्नः ॥ ज्वलादेर्णः ॥ ११ ॥ ज्वलादेर्धातोर्णप्रत्ययोभवति । ज्वल दीप्तौ ज्वालः तप संतापे तापः पथि गतौ पांथः ॥ कार्येऽण् ॥ १२ ॥ कर्म्मण्युपपदेप्रयुज्यमानेसतिअण्प्रत्ययोभवति । कुंभकारः ग्रंथकारः

नंदनः रौतीति वाच्य इति शेषः रावण इति रु शब्दे णित्वाद्धातोर्नामिन इति वृद्धिः एवं ग्राहीत्यत्रापि अत उपधाया इति ॥ दृशादेः ॥ ९ ॥ दृशिर् प्रेक्षण इत्यादेः ॥ शिति ॥ १० ॥ चतुर्ष्विव चतुर्वदिति योगविभागादित्याह चतुर्ष्विति तिबादिष्विति तिबादियादादितुबादिदिबादिष्वित्यर्थः एतच्च चतुःशब्दस्य यकच्चतुर्षु कदादेश्चतुर्णामित्यादौ तत्रैव तत्प्रसिद्धेर्लभ्यते यत्कार्यमिति अप्कर्तरीत्यादिकं अनेन प्राधान्याद्यंकार्यातिनिर्देशो दर्शितः पश्यः इति दृशेः शे अप्कर्तरीत्यपि दृशादेरिति पश्यादेशे अदे इत्यकारलोपः धयः इति धेट् पाने अध्यादेशः गो हंतीति घ्नः केवलादेव हंतेः शप्रत्यये शित्वादवादयस्तस्यादादित्वाल्लुक् शस्य ङित्वात् गमांस्वर इत्युपधालोपे हनोघ्न इति घत्वं ततो गवि कर्मणि कर्तृकार्ययोरिति षष्ठ्या नाम्नश्चेति समासः गां हंतीत्यपि विग्रहे दृशादिषु पाठसामर्थ्यात्कार्येऽणं बाधित्वा श इति केचित् एवं जायाघ्नादया ज्ञेयाः पतिघ्नीत्यादौ तु नदादेराकृतिगणत्वादीप् ॥ ज्वलादेः ॥ ११ ॥ ज्वाल इति णित्वाद्वृद्धिः पांथ इति आगमस्यानित्यत्वाद्वृद्धौ कृतायां नुम् ॥ कार्ये ॥ १२ अत्र त्वनायत्या कार्यशब्देन कर्म गृह्यते इत्याह कर्मणीति कर्म च द्वितीयाविधौ सप्तप्रकारं निरूपितमेवकुंभकार इति कुंभंकरोतीति कुंभेऽत्र कर्मणि कृञो णित्वादार एवं ग्रंथकारोपि उभयत्रापि नाम्नश्चेति

॥ आतोडः ॥ १३ ॥ आकारांताद्धातोः कर्म्मणिसति डप्रत्ययोभवति । डित्वाट्टिलोपः गोदः धनदः ॥ नाम्निच ॥ १४ ॥ नाम्निप्रयुज्यमानेडप्रत्ययोभवति । डित्वाट्टिलोपः द्विपः द्विजः गृहस्थः द्रुगतौ शुचं द्रवति शूद्रः ॥ शुचः शूद्रे ॥ १५ ॥ द्रुधातौपरे शुचः शूइत्यादेशो भवति । उरसः सेर्ल्लोपो वक्तव्यः मुमागमो वा । उरगः उरंगः ॥ विहायसो विहश्च ॥ १६ ॥ विहायसोविहादेशोभवति चकारान्मुमागमश्चवा भवति । विहगः विहंगः ॥ अटौ ॥ १७ ॥ नाम्निकार्येसत्यकारटकारौ प्रत्ययौ भवतः । टकार ईवर्थः । अस्थिहरः श्वा । क-

तत्पुरुषः आदित्यं पश्यतीत्यादौ चानभिधानादण् न गंगाधरादयश्च संज्ञाशब्दा इति न तत्राणप्रसंग आशंक्यः महीधरतीति महीधर इति केवले धरती-त्यर्थे विवक्षिते पचादित्वादप्रत्ययेकृते पश्चात् गंगाशब्देन संबंध इति गंगाधर-इत्यपि स्यादित्यपिशक्यं वक्तुं एकत्वात्प्रयोगस्य न हि तस्मिन्नेव प्रयो-गे विवक्षितं चाविवक्षितं च कर्म भवति अथवा अप्रत्ययोऽत्र वक्ष्यते ॥ आतो ॥ ॥ १३ ॥ गोद इति गां ददातीति दाञोऽत्र डे टिलोपः एवं धनद इत्यपि ॥ नाम्नि ॥ १४ ॥ नाममात्र इति कर्मणि अन्यस्मिन्नपीत्यर्थो भवतीति अतोन्य-स्मादपीत्यर्थः द्विप इति कर्मणि अन्यस्मिन्नपीत्यर्थो भवतीति अतोन्यस्मादपीत्यर्थः द्विप इति द्वाभ्यां पिबतीति द्विप द्विज इति द्विर्जायत इति जनेरत्र डे टेर-नोऽत्र लोपः ॥ शुचः ॥ १५ ॥ द्रे परे शुचः शू इत्यादेशो भवति सहा-दित्वादिति शेषः शूद्रइति द्रवतेर्डे उलोपः उरस इति उरग इति उरसा गच्छ-तीति गमेर्डे टिलोपसलोपौ उरंग इति सलोपेत्र मुम् ॥ विहायसः ॥ १६ ॥ इति मुम्वेति पूर्वतः संबध्यते विहायसोविहादेशो मुम्वा भवति एतदपि सहादित्वादेव विहग इति विहायसि आकाशे गच्छतीति गमेर्डे टिलोपे विहादेशः एकत्र मुमपि ॥ अटौ ॥ १७ ॥ नाम्नि कार्ये चेति उभयानुवृत्तेरिष्टत्वादिति भावः तच्च यथायोगं संबंधनीयं इवर्थ इति ङ्वित इत्यनेन अस्थिहर इति अस्थि हरतीति हृञ अप्रत्यये गुणः कवचहर इति कवचं हरतीत्येवं वयो यस्य सः कुमार इति अनेन वयसि प्र-त्ययो दर्शितः धनुर्धर इति धनुर्धरतीति धृञ अप्रत्यये गुणः एवं गंगाधरादयोपि ज्ञे-

वज्रहरः इंद्रः कुमारो धनुर्द्धरः चर गतिभक्षणयोः कुरुचरी । इखखि ॥ १८ ॥ धातोर्नाम्निकार्येसतिइखखिइत्येतेप्रत्ययाभवंति । स्तंबकरिः व्रीहिः आप्ऌ व्याप्तौ देवानाप्नोति देवापिः वातापिः ॥ खितिपदस्य ॥ १९ ॥ खितिप्रत्ययेपरेपूर्वपदस्यमुमागमोभवति । क्षेमंकरः प्रियंवदः वशंवदः आत्मंभरिः उदरंभरिः ॥ एजांखश् ॥ ॥ २० ॥ एजृ कंपने इत्यादीनांखश्प्रत्ययोभवति । खकारो मुमागमार्थः शकारश्चतुर्वत्कार्यार्थः जनमेजयतीति जनमेजयः दिवादेर्यः पंडितंमन्यः ॥ ल्युट् करणे ॥ ॥ २१ ॥ करणेर्थेल्युट्प्रत्ययोभवति । नग्नः क्रियते अने-

नाः कुरुचरइति कुरौ देशे चरतीति चरेरत्र टः तथा च टित्वं कुरुचरीति टित्वात् ष्ट्रिन इतीप् ॥ इख ॥ १८ ॥ स्तंबकरिरिति स्तंबंकरोतीत्यर्थे कृञ इप्रत्ययो गुण देवापिरिति देवानाप्नोतीत्यर्थः उभयोरपि हरिशब्दवत्प्रक्रिया ॥ खिति ॥ १९ ॥ ख इत् यस्य सः खित् तस्मिन् । अत्र खिति परे पूर्वस्य धातोः पदत्वाभावात्तत. पूर्वपदस्य ग्रहणमितिमत्वाह खिति प्रत्यये परे पूर्वपदस्येति अतएव विधिसामर्थ्या-द्धातोरव्यवधायकत्वं खिति प्रत्यये परे पूर्वग्रहणात्तदंतग्रहणं ततश्च खिदंते परे पूर्व-पदस्य मुम्विधेर्व्यवधानाशंकातंकः क्षेमंकर इति क्षेमेत्र मुमि गुणः क्षेमं करोति प्रियंवदतीत्यर्थः आत्मंभरिरिति आत्मानं बिभर्तीति खौ नलोपे मुम् एवमुदरंभरि-रपि विहोनवानामित्यतो व्यवस्थितविकल्पार्थवानुवृत्तेर्दिवामन्या रात्रिरित्यादाव-व्ययस्य मुम् न भवति ॥ एजां ॥ २० ॥ बहुवचनमनेकसंप्रत्ययार्थमित्याह इत्यादी-नामितिखकार इति खितिपदस्येतिशेषः शकार इति शितिचतुर्वदिति शेषः चतुर्व-त्कार्यं तु अवादिर्जनमेजयति अपः पित्वान्नेर्गुणः पूर्वस्य मुम् पंडितंमन्य इति आत्मानं पण्डितंमन्यइति आत्मनेर्थेपि मन्यते खशि शित्वाद्दिवादेर्यः एकस्यैवात्मनः स्वरूपेण कर्तृत्वं पंडितत्वादिरूपेण कर्मत्वं च बुद्ध्यत एव ॥ ल्युट् ॥ २१ ॥ कर-णेर्थे इति अनेन करणं प्रत्ययार्थो दर्शितः नग्नः क्रियतेऽनेनेति प्रयो-गवशादयमभूततद्भावे भवतीत्यत्र इति शेषः अनग्नं नग्नं करणमि-ति कृञोत्र ल्युटि खित्वात्पूर्वस्य मुम् इयुवोरिति योरनः गुणोणत्वं

नेति नग्नंकरणं घृतं स्थूलंकरणं दधि ॥ भजांविण् ॥ २२ ॥ भजादेर्धातोः कर्त्तरिविण्प्रत्ययोभवति ॥ वेः ॥ २३ ॥ वेर्लोपोभवति । भज सेवायां अर्द्धंभजतीति अर्द्धभाक् तत्त्वप्राट् तत्त्वप्राड् वह प्रापणे भारवाट् भारवाड् भारवाहौ भारवाहः भारवाहं भारवाहौ ॥ वाहोवौशसादौ ॥ २४ ॥ शसादौस्वरेपरेवाहोवाकारस्यऔकारादेशोभवति । भारौहः भारौहा भारवाड्भ्यां भारवाड्भिः इत्यादि । षह मर्षणे ॥ सहेषः साढि ॥ २५ ॥ सहेर्धातोः सकारस्यषकारादेशोभवति ढकारेपरे । तुराषाट् तुराषाड् तुरासाहौ तुरासाहः इत्यादि ॥ मोनोधातोः ॥ ॥ २६ ॥ मकारांतस्यचधातोर्नकारादेशोभवति रसे

स्थूलकरणमिति अस्थूलः स्थूलः क्रियतेऽनेनेति प्राग्वत् ख्युटष्टकार ईबर्थः आढ्यंकरणं ॥ भजां ॥ २२ ॥ बहुवचनार्थं विवृणोति भजानामिति अर्द्धभागिति णित्वादतउपधाया वृद्धिः ॥ वेः ॥ २३ ॥ कुत्वे वावसाने अर्द्धशब्दोपादानेन नाम्निचेत्यनुवृत्तेर्विणः सोपपदत्वं दर्शितं तत्त्वप्राडिति तत्त्वंपृच्छतीत्यत्र पृच्छेर्विणि पृच्छादेर्दीर्घेतेति दीर्घः षत्वं तत्वप्राच्छौ तत्वप्राच्छः भारंवहतीति वहेर्विणि वृद्धिः होढ इति ढत्वं ॥ वाहोवाविति ॥२४॥ वाओ इति छेदः वाशब्दस्य औकारादेशोर्थः भारौह इति भारंवहतीति वहेर्विण् उपधावृद्धिः सौ होढः वावसाने भारवाट् भारवाड् भारवाहौ शसादौ स्वरे तु वाशब्दस्य ओत्वे औत्वं हसादौ ओत्वाभावात् भारवाड्भ्यामित्यादि ज्ञेयं अनकारांते तूपपदे वहेर्विण्प्रत्ययमनिच्छतांमतमनुवृत्त्य उत्वं विहितं अथवा वाजरित्येवं छेद ऊ एव विधेयः ओत्वंत्वस्मादेव निर्देशादुदाहरणेष्वपि भवति गवादित्वादवर्णागमेन वा एवं चानकारांतेपि सवर्णदीर्घादिना नूहः नूहा इत्याद्यपि सिद्ध्यति वेरिति वकारेकारयो रितसंज्ञकत्वादिति भावः ॥ सहेरिति ॥ २५ ॥ साढीति निर्देशेन ढत्वविषये षत्वं दर्शयति तेन तुरासाहौ इत्यादौ न षत्वं षहं मर्षणे सहनं आत्मनेपदी सेट्कश्च तुराषाडिति तुरं वैरिवेगं सहत इति तुराषाडिंद्रः सहेरत्र विपि वृद्धिः होढ इति ढत्वे षत्वं सहादित्वात्तुरादेशः ॥ मोनः ॥ २६ ॥ झसेपदांते-

नेति नग्नंकरणं द्यूतं स्थूलंकरणं दधि ॥ भजांविण् ॥ २२ ॥ भजादेर्धातोः कर्त्तरिविण्प्रत्ययोभवति ॥ वेः ॥ २३ ॥ वेर्लोपोभवति । भज सेवायां अर्द्धंभजतीति अर्द्धभाक् तत्त्वप्राट् तत्त्वप्राड् वह प्रापणे भारवाट् भारवाड् भारवाहौ भारवाहः भारवाहं भारवाहौ ॥ वाहोवौशसादौ ॥ २४ ॥ शसादौस्वरेपरेवाहोवाकारस्यऔकारादेशोभवति । भारौहः भारौहा भारवाड्भ्यां भारवाड्भिः इत्यादि । षह मर्षणे ॥ सहेषः साढि ॥ २५ ॥ सहेर्द्धातोः सकारस्यषकारादेशोभवति ढकारेपरे । तुराषाट् तुराषाड् तुरासाहौ तुरासाहः इत्यादि ॥ मोनोधातोः ॥ ॥ २६ ॥ मकारांतस्यचधातोर्नकारादेशोभवति रसे

स्थूलकरणमिति अस्थूलः स्थूलः क्रियतेऽनेनेति प्राग्वत् ख्युटष्टकार ईबर्थः आढ्यंकरणं ॥ भजां ॥ २२ ॥ बहुवचनार्थं विवृणोति भजानामिति अर्द्धभागिति णित्वादतउपधाया वृद्धिः ॥ वेः ॥ २३ ॥ कुत्वे वावसाने अर्द्धशब्दोपादानेन नाम्निचेत्यनुवृत्तेर्विणः सोपपदत्वं दर्शितं तत्त्वप्राडिति तत्त्वंपृच्छतीत्यत्र पृच्छेर्विणि पृच्छादेर्दीर्घतेति दीर्घः षत्वं तत्वप्राच्छौ तत्वप्राच्छः भारंवहतीति वहेर्विणि वृद्धिः होढ इति ढत्वं ॥ वाहोवाविति ॥२४॥ वाओ इति छेदः वाशब्दस्य औकारादेशोर्थः भारौह इति भारंवहतीति वहेर्विण् उपधावृद्धिः सौ होढः वावसाने भारवाट् भारवाड् भारवाहौ शसादौ स्वरे तु वाशब्दस्य ओत्वे औत्वं हसादौ ओत्वाभावात् भारवाड्भ्यामित्यादि ज्ञेयं अनकारांते तूपपदे वहेर्विण्प्रत्ययमनिच्छतांमतमनुवृत्त्य उत्वं विहितं अथवा वाजरित्येवं छेद ऊ एव विधेयः ओत्वंत्वस्मादेव निर्देशादुदाहरणेष्वपि भवति गवादित्वादवर्णागमेन वा एवं चानकारांतेपि सवर्णदीर्घादिना नूहः नूहा इत्याद्यपि सिद्ध्यति वेरिति वकारेकारयोरित्संज्ञकत्वादिति भावः ॥ सहेरिति ॥ २५ ॥ साढीति निर्देशेन ढत्वविषये षत्वं दर्शयति तेन तुरासाहौ इत्यादौ न षत्वं षह मर्षणे सहनं आत्मनेपदी सेट्कश्च तुराषाडिति तुरं वैरिवेगं सहत इति तुराषाडिंद्रः सहेरत्र विणि वृद्धिः होढ इति ढत्वे षत्वं सहादित्वात्तुरादेशः ॥ मोनः ॥ २६ ॥ झसेपदांते-

क्रिया ॥ स्थामी ॥ ३१ ॥ स्थापागमादीनामीभवति क्तिपरे नक्किपि । इश्च ईश्च ई सुष्ठु पिबति इति सुपीवा भूरिदीवा ॥ क्विप्सर्वधातुभ्यः ॥ ३२ ॥ सर्वधातुभ्यः क्विप्प्रत्ययोभवति ॥ ह्रस्वस्यपितिकृतितुक् ॥ ३३ ॥ पितिकृतिपरेह्रस्वस्यतुगागमोभवति क्विपः सर्वापहारी लोपः । कर्मकृत् अग्निचित् देवस्तुत् सोमपाः सर्वदृक् दिशामिति कत्वं श्रिञ् सेवायाम् । प्रच्छादेर्दीर्घता च वक्तव्या । सुश्रीः तत्त्व पृच्छतीति तत्त्वप्राट् णह् बंधने क्विपि परे नह्युपोपसर्गस्य दीर्घता वक्तव्या । उपानत् कटं चिकीर्षति कटचिकीः ॥ ध्यायतेः क्विपि प्रसंसा-

अह्लोपादिकम् ॥ स्थां ॥ ३१ ॥ बहुवचनसंगृहीतानाह स्थापागेति क्तिपर इति यजांयवराणामित्यतोनुवर्तते न क्विपीति एतच्च स्वरात्तोवेति व्यवस्थितविकल्पार्थं वानुवृत्तेर्लभ्यते ईश्च ईश्चेति एतच्च प्रयोगाचार्यस्मरणाद्वा विज्ञायते सुपीवेति क्विपीत्वे राजन्वत्प्रक्रिया भूरिदीवेति भूरि ददाति दाञो वनिपि कित्वाभावे पूर्ववत् सुदामेति मनेरुदाहरणं ज्ञेयं ! नाम्निचेत्यतो बहुत्वार्थवानुवृत्तेर्मन्यादयश्छांदसाः केचित् क्वनिपः पित्वे सनाद्यंतेभ्योपि विधिं गमयति प्रातरित्वा पित्वात्तुक् सुशर्मा विजावा वानुवृत्तेश्च निरुपपदादप्येते भवंतीति धीवा पीवा ॥ क्विप्सर्वधातुभ्यः ॥ २२ ॥ अविशेषादिति भावः पकारस्तुगर्थः ॥ ह्रस्वस्य ॥३३॥ क्विप इति सर्वानपहरतीति सर्वापहारी वक्तव्य इति केचित् अन्येतु ककारादीनां कार्यायेदितीत्वाह्लोपेन सर्वापहारित्वमिच्छंतिकर्मकृदिति कर्मकरोतीति क्विपि कित्वादगुणे तुकि नाम्नश्चेति समासः सोमपा- इति न क्विपीत्युक्तेनैत्वं सुश्रीरिति दीर्घेण बाधितत्वान्न तुक् प्रच्छादेरिति तत्त्वप्राडिति तत्त्वंपृच्छतीति क्विपि दीर्घे शत्वषत्वडत्वानि संप्रसारणंतु सहादिषु पाठान्न भवति केचिद्दीर्घत्वमपि एवेच्छंति द्विवचनादौ तु शादेशेन- तत्त्वप्राशौ तत्त्वप्राशा इत्यादि ज्ञेयं क्विप्रहीति क्विंते नहिपरे इतियोऽयं उपानदिति नहोध इति धत्वं कटचिकीरिति यत इत्यलोपे सतीत्यर्थः ततश्च सरपि हसेप इति लोपे रेफस्य विसर्गः उत्तराव तु कटिचकीर्षौ कटचिकीर्ष इत्यादि ॥ ध्यायतेरिति ॥ ३४ ॥ यकारस्येकारो वाच्य इत्यर्थः सुधीति यस्ये

क्रिया ॥ स्थामी ॥ ३१ ॥ स्थापागमादीनामीभवति क्तिपरे नक्किपि । इश्च ईश्च ई सुष्ठु पिबति इति सुपीवा भूरिदीवा ॥ क्किप्सर्वधातुभ्यः ॥ ३२ ॥ सर्वधातुभ्यः क्किप्प्रत्ययोभवति ॥ ह्रस्वस्यपितिकृतितुक् ॥ ३३ ॥ पितिकृतिपरेह्रस्वस्यतुगागमोभवति क्किपः सर्वापहारी लोपः । कर्मकृत् अग्निचित् देवस्तुत् सोमपाः सर्वदृक् दिशामिति कत्वं श्रिञ् सेवायाम् । प्रच्छादेर्दीर्घता च वक्तव्या । सुश्रीः तत्त्व पृच्छतीति तत्त्वप्राट् णह बंधने क्किपि परे नह्युपोपसर्गस्य दीर्घता वक्तव्या । उपानत् कटं चिकीर्षति कटच्चिकीः ॥ ध्यायतेः क्किपि प्रसंसा-

अल्लोपादिकम् ॥ स्थां ॥ ३१ ॥ बहुवचनसंगृहीतानाह स्थापागेति क्तिपर इति यजांयवराणामित्यतोनुवर्तते न क्किपीति एतच्च स्वरात्तोवेति व्यवस्थितविकल्पार्थं वानुवृत्तेर्लभ्यते ईश्च ईश्चेति एतच्च प्रयोगाचार्यस्मरणाद्वा विज्ञायते सुपीवेति क्किपीत्वे राजन्वत्प्रक्रिया भूरिदीवेति भूरि ददाति दाञो वनिपि कित्वाभावे पूर्ववत् सुदामेति मनेरुदाहरणं ज्ञेयं ! नाम्निचेत्यतो बहुत्वार्थवानुवृत्तेर्मन्यादयश्छांदसाः केचित् क्वनिपः पित्वे सनाद्यंतेभ्योपि विधिं गमयति प्रातरित्वा पित्वात्तुक् सुशर्मा विजावा वानुवृत्तेश्च निरुपपदादप्येते भवंतीति धीवा पीवा ॥ क्किप्सर्वधातुभ्यः ॥ २२ ॥ अविशेषादिति भावः पकारस्तुगर्थः ॥ ह्रस्वस्य ॥३३॥ क्किप इति सर्वानपहरतीति सर्वापहारी वक्तव्य इति केचित् अन्येतु ककारादीनां कार्यायेदितीत्वाल्लोपेन सर्वापहारित्वमिच्छंतिकर्मकृदिति कर्मकरोतीति क्किपि कित्वादगुणे तुकि नाम्नश्चेति समासः सोमपाइति न क्किपीत्युक्तेनैत्वं सुश्रीरिति दीर्घेण बाधितत्वान्न तुक् प्रच्छादेरिति तत्त्वप्राडिति तत्त्वंपृच्छतीति क्किपि दीर्घे शत्वषत्वडत्वानि संप्रसारणंतु सहादिषु पाठान्न भवति केचिद्दीर्घत्वमपि एवेच्छंति द्विवचनादौ तु शादेशेन-तत्त्वप्राशौ तत्त्वप्राशा इत्यादि ज्ञेयं क्किप्रहीति क्किवंते नहिपरे इतियोज्यं उपानदिति नहोध इति धत्वं कटचिकीरिति यत इत्यलोपे सतीत्यर्थः ततश्च सरपि हसेप इति लोपे रेफस्य विसर्गः उत्तरात्र तु कटचिकीर्षौ कटचिकीर्ष इत्यादि ॥ ध्यायतेरिति ॥ ३४ ॥ यकारस्येकारो वाच्य इत्यर्थः सुधीति यस्ये

ताच्च वक्तव्याः । भवादृशः भवादृक्षः भवादृक् त्वामिव दृश्यतेइति त्वादृशः त्वादृक्षः त्वादृक् अहमिवदृश्यते इति मादृशः मादृक्षः ॥ क्विप्वनिप्ड्डाः ॥ ३७ ॥ धातोरतीते काले क्विप्वनिप्ड्डाइत्येतेप्रत्यया भवंति । ककारो गुणप्रतिषेधार्थः डकारष्टिलोपार्थः वृत्रहा यज्वा सुत्वा सरसिजं सर्वगः सामगः ॥ क्तक्तवतू ॥ ३८ ॥ धातोरतीतेकालेक्तक्तवतूप्रत्ययौभवतः । भावकार्ययोः क्तः कृतः कटः कृतवान् उकारो नुमागमार्थः आगतं स्थितं देवदत्तेन भावे नपुंसकांतः ॥ गत्यर्थादकर्मकाच्चकर्त्तरि क्तः ॥ ३९ ॥ गत्यर्थादकर्मकाच्च धातोः कर्त्तरिक्तः

जमिति सरसिजातमिति जनो टिलोपः नाम्नश्चेति समासे ङेरलुक् सामग इति ॥ क्विबित ॥३७॥ सामगायतीति गायतेर्डः सर्वग इति सर्वस्मिन् गच्छतीति गमेर्ड उभयत्र टिलोपः ॥ क्त ॥ ३८ ॥ क्तभावकार्यकर्मक्त इति गत्यर्थादकर्मकादित्यतोनुवर्तते कृत इति क्रियते स्म अत्र कटे कर्मणि क्तः कर्मणि उक्तत्वादन्योक्तत्वादितिकटात्प्रथमा कित्वान्न गुणः धातोरनिट्त्वान्नेट्कृतवानिति कटं देवदत्त कृतवान् इति शेषः क्तवतोः कर्त्तरि कृदितिकर्त्तरि विधिः उकार इति त्रितोनुम् ष्ट्रित इति सूत्राभ्यामिति शेषः आगतमिति आगमेर्भावे क्ते लोपस्त्वनुदात्तेति मलोप; स्थितमिति स्थामीति इत्वम् ईत्वविधिस्तुप्रयोगाभावान्न भवति देवदत्तेनेत्यनुक्ते कर्तरितृतीया भाव इति एतच्च क्तोनपुंसकइतिसूत्राल्लभ्यते तस्य चायमर्थः धातोःक्तः प्रत्ययो नपुंसके भावे भवति भावकार्ययोरित्येव भावे क्तः सिद्धेः कालसामान्यार्थोयमारंभः नपुंसके तन इति तु युक्तः पाठः अथवा नपुंसके क्त इति पाठोपि नपुंसकमततीति नपुंसकात् क्विप् मोनोधातोरिति मस्य न ईदृशः क्तोभावे भवतीति यथाकथंचिन्निर्वाह्यः अयं सकर्मकेभ्यापि भवतीति दर्शयितुमागतमित्युदाहृतं ॥ गत्य ॥ ३९ ॥ अटित इत्यादि सेट् ष्ठा गतिनिवृत्तौ शमदम उपशमे नैकस्वरादित्यत्र नेतियोगविभागादुदितः क्ते इडभावः योगाविभागादिष्टसिद्धेः सर्वत्र न निषेधः अत्राकर्तरिचेतिवानुवृत्तेर्यथा

ताच वक्तव्याः । भवादृशः भवादृक्षः भवादृक् त्वामिव दृश्यतेइति त्वादृशः त्वादृक्षः त्वादृक् अहमिवदृश्यते इति मादृशः मादृक्षः ॥ क्विप्वनिप्डाः ॥ ३७ ॥ धातोरतीते काले क्विप्वनिप्डाइत्येतेप्रत्यया भवंति । ककारो गुणप्रतिषेधार्थः डकारष्टिलोपार्थः वृत्रहा यज्वा सुत्वा सरसिजं सर्वगः सामगः ॥ क्तक्तवतू ॥ ३८ ॥ धातोरतीतेकालेक्तक्तवतूप्रत्ययौभवतः । भावकार्ययोः क्तः कृतः कटः कृतवान् उकारो नुमागमार्थः आगतं स्थितं देवदत्तेन भावे नपुंसकांतः ॥ गत्यर्थादकर्मकाच्चकर्त्तरि क्तः ॥ ३९ ॥ गत्यर्थादकर्मकाच्च धातोः कर्त्तरिक्तः

जमिति सरसिजातमिति जनो टिलोपः नाम्नश्चेति समासे ङेरलुक् सामग इति ॥ क्विबित ॥३७॥ सामगायतीति गायतेर्डः सर्वग इति सर्वस्मिन् गच्छतीति गमेर्ड उभयत्र टिलोपः ॥ क्त ॥ ३८ ॥ क्तभावकार्यकर्मक्त इति गत्यर्थादकर्मकादित्यतोनुवर्तते कृत इति क्रियते स्म अत्र कटे कर्मणि क्तः कर्मणि उक्तत्वादन्योक्तत्वादितिकटात्प्रथमा कित्वान्न गुणः धातोरनिट्त्वान्नेट्कृतवानिति कटं देवदत्त कृतवान् इति शेषः क्तवतोः कर्त्तरि क्तादितिकर्त्तरि विधिः उकार इति त्रितोनुम् इृत्रित इति सूत्राभ्यामिति शेषः आगतमिति आगमेर्भावे क्ते लोपस्त्वनुदात्तेति मलोप; स्थितमिति स्थामीति इत्वम् ईत्वविधिस्तुप्रयोगाभावान्न भवति देवदत्तेनेत्यनुक्ते कर्तरितृतीया भाव इति एतच्च क्तोनपुंसकइतिसूत्राल्लभ्यते तस्य चायमर्थः धातोःक्तः प्रत्ययो नपुंसके भावे भवति भावकार्ययोरित्येव भावे क्तः सिद्धेः कालसामान्यार्थोयमारंभः नपुंसके तन इति तु युक्तः पाठः अथवा नपुंसके क्त इति पाठोपि नपुंसकमततीति नपुंसकात् क्विप् मोनोधातोरिति मस्य न ईदृशः क्तोभावे भवतीति यथाकथंचिन्निर्वाह्यः अयं सकर्मकेभ्यापि भवतीति दर्शयितुमागतमित्युदाहृतं ॥ गत्य ॥ ३९ ॥ अटित इत्यादि सेट् ष्ठा गतिनिवृत्तौ शमदम उपशमे नैकस्वरादित्यत्र नेतियोगविभागादुदितः क्ते इडभावः योगविभागादिष्टसिद्धेः सर्वत्र न निषेधः अत्राकर्तरिचेतिवानुवृत्तेर्यथा

कितस्तकारस्यनत्वंभवति चकाराद्दकारस्यापिनकारः । ञिमिदा स्नेहने मिन्नमन्नं तैलेन वर्त्तते ञिष्विदा गात्रप्रक्षरणे आयासेन प्रस्विन्नः ञिक्ष्विदा संचूर्णने क्ष्विण्णः ॥ अदोजग्धुः ॥ ४५ ॥ अदोधातोर्जग्धुरादेशो भवति । जग्धम् ॥ रः ॥ ४६ ॥ रेफादुत्तरस्याकितस्तकारस्यनत्वंभवति । कॄञ् हिंसायां ऋतइर् य्वोर्विहस इति दीर्घः विकीर्णः जॄष्झॄष् वयोहानौ जीर्णं झीर्णं शरीरं पूरी आप्यायने पूर्णः पूर्णवान् ॥ ल्वाद्योदितः ॥ ४७ ॥ ल्वादेरोदितश्चधातोः कितस्तनोभवति इकारस्यच ईकारः। लूनः हूतः क्षि क्षये क्षीणः ग्लानः म्लानः हीनः ओप्यायी वृद्धौ ॥ प्यायः पीः ॥ पीनः ॥ दोदत्ति ॥ ४८ ॥ दाइत्यस्यदद्भवति तकारादौ किति परे । दत्तः दत्तवान्

रणं स्वेदनं प्रस्विन्न इति आदेःष्णःस्न इति सत्वं शेषं प्राग्वत् क्षुदिर् क्षुण्ण इति अनुदात्तत्वादनिट् णत्वं शेषं प्राग्वत् ।। अद ।। ४५ ॥ इति प्रकरणात्तादौ किति अदोजग्धुरादेशो वक्तव्य इत्यर्थः जग्धमिति जघादेशे तथोरिति तस्य धे झबेजबा इति घस्य गः । रः ।। ४६ ।। पृथग्योगकरणं पूर्वयोगस्यानित्यत्वज्ञापनार्थं तेन चिन्नमन्नादयः प्रयोगा उपपन्ना भवंति यदा एतेपि चकारस्यानेकार्थत्वात् पूर्तपूर्तो-दिवदुपपद्यंते तदा वैचित्र्यार्थमेव पृथग्योगकरणं तकारस्येति सात्तकारस्य कित इति शेषः विकीर्णमिति कित इतीण्निषेधः पुर्न इतिणत्वं जृषः षिद्भिदामिति विशेषणार्थः ।। ल्वाद्यो ।। ४७ ।। तपरकरणमसंदेहार्थं लून इति कित इति नेट् क्षीण इति नैकस्वरादिति नेट् निपातनाद्दीर्घः ग्लान इति संध्यक्षराणामि-त्यात्वं प्याय इति वक्तव्य इति शेषः पीन इति ओप्यायी वृद्धौ अस्मात्तस्यादी-दित इतीडभावे ओदित्वात्तस्य नत्वेपीति भावः स च गुरुत्वात्सर्वादेशः ।। दोद ।। ४८ ।। दस्तस्येत्युत्तरसूत्रे पुनर्दग्रहणान्नात्र दकारांतग्रहणमिति मत्वाह दाइत्येतस्येति ग्रहांक्कितिचेत्यतोनेकार्थत्वानुवृत्तेर्दाप्दैप्भ्यांनस्येत्यर्थः । कितीति संप्रसारणसूत्रादनुवृत्तेर्दत्त इति दोदिति दद्भावस्तांत इति दस्य न-

॥ स्वरात्तोवा ॥ ४९ ॥ स्वरादुत्तरस्यदाइत्यस्यत्तोवा भवति किति परे । प्रत्तः प्रदत्तः अवत्तः अवदत्तः ॥ धाप्योर्हि ॥ धाप्योर्धात्वोर्हिरादेशोभवति । डुधाञ् धारणपोषणयोः धास्थाने हिरादेशः अवउपसर्गः अवहितः प्या प्रापणे प्यास्थाने हिरादेशः अवहितः यजां यवराणां इत्यादिना संप्रसारणं छशषइति षत्वं ष्टुत्वं च इष्टं इष्टवान् डुवप् बीजतंतुसंताने उप्तं बीजं वह प्रापणे होढः इतिढत्वे तथोर्द्धः ष्टुत्वं ढिढोलोपोदीर्घश्च ऊढोऽनडुहापंगुः व्येञ् संवरणे संवीतः ह्वेञ् आह्वाने आहूतः दीर्घस्थानित्वाद्दीर्घत्वं वद व्यक्तायांवाचि उदितं वच् उक्तं वस् उषितं ॥ वस्क्षुधोरिट् ॥ ५० ॥ वस्क्षुधोरिडागमोभवति । क्षुधितः ञिष्वप् शये सुप्तः ॥ त्राणाद्या निपात्यंते ॥ ५१ ॥ त्राणः त्रातः ह्रीणः ह्रीतः वा गतिगंधनयोः निर्पूर्वः निर्वाणः । संपर्युपेभ्यः करोतेर्भूषणेसुट्वक्तव्यः । संस्कृतः परिस्कृतः उपस्कृतः जनेर्जा जातः ॥ पचे-

र्वन ॥ स्वरात् ॥ ४९ ॥ प्रत्त इतिदइति षष्ठीनिर्दिष्टत्वादंत्यस्य तादेशे पूर्वस्य चपादेशः न च स्वरादिति पंचमीनिर्देशाद्दस्य प्राप्नोतीति वाच्यं पंचमीनिर्देशे परादिकार्यस्य सर्वत्रानाश्रयात् अन्यथा या इतीकारादेशोपि यमात्रस्य स्यात् स्वरात्त इति वा द्वितकारनिर्देशेन सर्वादेशत्वात् प्रदत्तमिति तादेशाभावे दोदद्घोरिति ददादेशः इष्टमिति यजेरनिटः क्ते यकारस्येकारे जस्य षत्वे तस्य टुत्वं उप्तमिति यजादित्वाद्वस्य उः संवीतमिति व्येञ् संवरणे यस्य सदीर्घस्य संप्रसारणं दीर्घः ईकारः आहूतो ह्वेञो वकारस्य प्राग्वत् दीर्घ उकारः उदितमिति वदः वदो यजादित्वादुकारः सेट्त्वादिट् उक्तं वचः कुत्वं उषित इति ॥ वस् ॥ ५० ॥ उत्वे घसादेरिति षत्वं क्षुधातिवक्तव्य इति शेषः सुप्त इति ञिष्वप् शये वस्य उः ॥ त्राणाद्यानिपात्यंते ॥ ५१ ॥ पाक्षिकंनत्वं पठंतो विशिष्टार्थश्च त्राण इति त्रैङ् पालने आत्वं नस्य णत्वे त्रातइति नत्वाभावे निर्वाण इति वाताद्न्यः संपर्युपेति एभ्यः परस्य करोतेर्भूषणे सुडागमो

र्वः ॥ ५२ ॥ पचेर्द्धातोस्तकारस्यवकारोभवति । पक्कः ॥ शु-
षेः कः ॥ ५३ ॥ शुष्कः स्फायीवृद्धौ ॥ स्फायः स्फी ॥ ५४ ॥
स्फीतः ॥ क्कसुकानौणबेवत ॥ १ ॥ धातोः क्कसुकानौप्रत्ययौ
भवतः । अतीते तौ च णबेवद्भवतः उकारो नुम्विधा-
नार्थः बिभिद्वान् विविद्वान् चकृवान् चक्राणः ॥ शतृशा-
नौतिप्तेवत क्रियायाम् ॥ २ ॥ क्रियापदेगम्यमानेशतृशा-
नौ प्रत्ययौभवतः । तौ च तितेवत्परस्मैपदात्मनेपदयो-

वक्तव्यइति शेषः संस्कृत इति अलंकृत इत्यर्थः एवं परिस्कृतः उपस्कृतः जात इति इदित्वान्नेट् ॥ पचेः ॥ ५२ ॥ इति कितस्तशब्दस्य वाच्यमिति शेषः पक्क इति चोःकुः ॥ शुषेति ॥५३॥ प्राग्वद्वाच्य इत्यर्थः शुष्कइति शुष् शोषणे अनिट् ॥ स्फायइति ॥ ५४ ॥ अयमपि वाच्य इत्यर्थः स्फीत इति स्फायी वृद्धौ आदीदित इति नेट् ॥ क्कसु ॥ १ ॥ अतीते काल इति णिनिरतीतइत्यनुवृत्तेः तौचेति क्रमेणेति शेषः ततश्च क्कसुर्णब्वत् कान एवद्भवतीति भावः ननुचैवं णबाश्रयकार्यं वृद्धिः आतो णपूडावित्यादि प्राप्नोति न च तावत् कित्वाद्वृद्धिर्नभविष्यतीति वाच्यं क्ङि-त्यद्व्युसीत्यत्र वृद्धेरननुवृत्तेः नचैवं कित्वस्य वैयर्थ्यापातः विविदिवान् ईजिवा-नित्यादौ तस्य गुणाभावसंप्रसारणार्थत्वात् णादिःकिदिति अत्र हि अपित्तादि वर्त्तते एवं तर्हि णब्वदिति णबिति समुदायाश्रयं कार्य्यं प्राप्यते वृद्धिश्चानुबंधाश्रया संज्ञापूर्वकस्यविधेरनित्यत्वाद्वा डौ अपीडाव्यवधानात्परत्वादालोपाद्वा न भवति आतोनपीत्यत्र हि द्व्यनुबंधकत्वादनपीति न णपो ग्रहणं अतएवाह णबादीति द्विश्चेति शेषः परस्मैपदे इति ञित्स्वरितेत उभे परतोन्यदिति विदित इत्यर्थः आत्म-नेपदेति ञित्स्वरितेत उभे आदनुदात्तङितः आद्भुवीति विहिते चकृवानिति कृञः क्कसौद्वित्वे कुहोश्चुरितिकुत्वे कित्वादगुणे नामत्वात् स्यादौ विद्वद्वद्रूपाणि चक्राण इति धातोरुभयपदित्वादानोपि प्राग्वत् द्वित्वादि ननु णादेः कित्वादेव संप्रसार-णादिसिद्धेः किंकानः किद्विधीयते न च संयोगादपि कित्वं यथास्यादित्यपि वाच्यं भाषायां तथाप्रयोगाभावाच्छंदसि च तत एवसिद्धेः एवं तर्हि णादावस्थितस्य कित्वस्यानित्यत्वज्ञापनार्थं तेन जजागरतुः सस्वरतुः इत्यादौ गुणः सिद्ध्यति क्कसोरुकार ईम्नुमर्थः ॥ शतृ ॥ २ ॥ पूर्वेणतुल्यमस्यापि व्याख्यानं गम्य-मानमिति यथाकथंचित्प्रतीयमानम् इत्यर्थः शकारश्चतुर्वेत्कार्यार्थः ऋकारः

र्वेः ॥ ५२ ॥ पचेर्द्धातोस्तकारस्यवकारोभवति । पक्कः ॥ शुषेः कः ॥ ५३ ॥ शुष्कः स्फायीवृद्धौ ॥ स्फायः स्फी ॥ ५४ ॥ स्फीतः ॥ क्सुकानौणवेवत ॥ १ ॥ धातोः क्सुकानौप्रत्ययौ भवतः । अतीते तौ च णवेवद्भवतः उकारो नुम्विधानार्थः बिभिद्वान् विविद्वान् चकृवान् चक्राणः ॥ शतृशानौतिप्तेवत क्रियायाम् ॥ २ ॥ क्रियापदेगम्यमानेशतृशानौ प्रत्ययौभवतः । तौ च तितेवत्परस्मैपदात्मनेपदयो-

वक्तव्यइति शेषः संस्कृत इति अलंकृत इत्यर्थः एवं परिस्कृतः उपस्कृतः जात इति इदित्वान्नेट् ॥ पचेः ॥ ५२ ॥ इति कितस्तशब्दस्य वाच्यमिति शेषः पक्क इति चोःकुः ॥ शुषेति ॥५३॥ प्राग्वद्वाच्य इत्यर्थः शुष्कइति शुष् शोषणे अनिट् ॥ स्फायइति ॥ ५४ ॥ अयमपि वाच्य इत्यर्थः स्फीत इति स्फायी वृद्धौ आदीदित इति नेट् ॥ क्सु ॥ १ ॥ अतीते काल इति णिनिरतीतइत्यनुवृत्तेः तौचेति क्रमेणेति शेषः ततश्च क्सुर्णव्वत् कान एवद्भवतीति भावः ननुचैवं णवाश्रयकार्यं वृद्धिः आतो णप्डावित्यादि प्राप्नोति न च तावत् कित्वाद्वृद्धिर्नभविष्यतीति वाच्यं क्ङित्यद्व्युसीत्यत्र वृद्धेरननुवृत्तेः नचैवं कित्वस्य वैयर्थ्यापातः विविदिवान् ईजिवानित्यादौ तस्य गुणाभावसंप्रसारणार्थत्वात् णादिःकिदिति अत्र हि अपित्तादि वर्त्तते एवं तर्हि णव्वदिति णविति समुदायाश्रयं कार्य्यं प्राप्यते वृद्धिश्चानुबंधाश्रया संज्ञापूर्वकस्यविधेरनित्यत्वाद्वा डौ अपीडाव्यवधानात्परत्वादालोपाद्वा न भवति आतोनपीत्यत्र हि द्व्यनुबंधकत्वादनपीति न णपो ग्रहणं अतएवाह णवादीति द्विश्चेति शेषः परस्मैपदे इति ञित्स्वरितेत उभे परतोन्यदिति विदित इत्यर्थः आत्मनेपदेति ञित्स्वरितेत उभे आदनुदात्तङितः आङ्वीति विहिते चकृवानिति कृञः क्सौद्वित्वे कुहोश्चुरितिकुत्वे कित्वादगुणे नामत्वात् स्यादौ विद्वद्वद्रूपाणि चक्राण इति धातोरुभयपदित्वादानोपि प्राग्वत् द्वित्वादि ननु णादेः कित्वादेव संप्रसारणादिसिद्धेः किंकानः किद्विधीयते न च संयोगादपि कित्वं यथास्यादित्यपि वाच्यं भाषायां तथाप्रयोगाभावाच्छंदसि च तत एवसिद्धेः एवं तर्हि णादावस्थितस्य कित्वस्यानित्यत्वज्ञापनार्थं तेन जजागरतुः सस्मरतुः इत्यादौ गुणः सिद्ध्यति क्सोरुकार ईम्नुमर्थः ॥ शतृ ॥ २ ॥ पूर्वेणतुल्यमस्यापि व्याख्यानं गम्यमानमिति यथाकथंचित्प्रतीयमानम् इत्यर्थः शकारश्चतुर्वेत्कार्यार्थः ऋकारः

भवति ईकारे ईपिच परे । तुदत् तुदती तुदंती तुदंति कुले तुदंती तुदती वाम्री वर्त्तते ॥ अप्ययोरान्नित्यं ॥ ६ ॥ अप्प्रत्ययप्रत्ययसंबंधिनो रकारस्य शतुर्नित्यंनुमागमोभवति । भवंती पचंती दीव्यंती पश्यंती । द्विरुक्तानांजक्षादीनां च शतुर्नुम्प्रतिषेधोवक्तव्यः । शौ वा ददत् दधत् जक्षत् जाग्रत् दरिद्रत् चकासत् अनुशासत् ॥ विदेर्वावसुः ॥ ७ ॥ विदेर्द्धातोः शतुर्विषयेवावसुप्रत्ययोभवति । उकारो नुमागमार्थः विद्वान् विद्वांसौ विद्वांसः विदन् विदंतौ विदंतः अत्रभवत् तत्रभवच्छब्दौपूज्यार्थे निपात्येते अत्रभवंतो भट्टमिश्राः तत्र भवद्भिर्भगवत्पादैर्भणितं ॥ शीलेतृन् ॥ ८ ॥ धातोस्तृन्प्र-

॥ अप्य ॥ ६ ॥ अप् च यश्च तयोर्दिवादेर्यः अपः सांनिध्यात् अतएवोदाहरति दिव्यंतीति ईपि ईकारेप्येवं द्विरुक्तानामिति कृताद्विर्वचनानां तथा जक्षजागृदरिद्रादीनांचेत्यर्थः ददतीतिदाञोत्र ह्वादित्वाद्वित्वं त्रितोनुमिति नुमोत्र निषेधः एवं दधदपि धाञः दादेरित्युभयत्राप्यालोपः । दरिद्रदिति दरिद्रातेदिति आलोपः ॥ विदेर्वावसुरिति ॥ ७ ॥ यद्यपि वेतिचानुवर्तते तथापिविदेरिति योगविभागाच्छतरिविदन्निति अपिभवतीतिविकल्पः संपद्यत इति चेत्युक्तं विद्वानिति वरयोरितीड् निषेधः तच्च मूले अव्याख्यातमपि प्रसंगाद्व्याख्यायते वरयोः यातोः परयोर्वादिराद्योः कृतोरिट् न भवति ईश्वरः कंप्रः उदितोवेत्यतो वानुवृत्तेश्च बहुलं निषेध इति विविद्वान् विविदिवानिति उभयमपि भवति नानिट्स इत्यत्र नेतियोगविभागान्न गुणः छ्रित इति नुम् न्संमहत इति दीर्घः स्त्रियां तु उदित्वांत् छ्रित इतापि विदुषी अत्र भवदिति अत्र भवंत इति पूज्या इत्यर्थः उदित्प्रसंगेन निपातनमुदित्वप्रतिपादनार्थमिति नुम् अतएव वा शौ अत्वंतत्वादत्र भवानिति अत्वसोःसाविति दीर्घोपि भवति ॥ शीले ॥ ८ ॥ नकारो विशेषणार्थ इति क्तादौ तृवुणाविति तृन्न गृह्यते इति कर्ता कटस्येति तद्योगे कर्तृकार्ययोरिति षष्ठी भवती

त्ययोभवति शीले स्वभावेर्थे । करणशीलः कर्त्ता हरणशीलः हर्त्ता पचनशीलः पक्ता ॥ इष्णुस्नुक्नु ॥ ९ ॥ शीलेर्थेइष्णुस्नुक्नु इत्येतेप्रत्ययाभवंति । अलंकरिष्णुः निराकरिष्णुः ग्रस् अदने ग्रसिष्णुः सह मर्षणे सहिष्णुः जिस्नुःस्थास्नुः विष्लृ व्याप्तौ क्नुप्रत्ययः ककारो गुणप्रतिषेधार्थः विष्णुःगृधु अभिकांक्षायां गृध्नुः ॥ षाकोकणः ॥ १० ॥ शीलेर्थेषाक उ उकण्इत्येतेप्रत्ययाभवंति षकारः ईबर्थः । वर निवारणे वराकः वराकी ॥ सांताशंसयोश्च ॥ ११ ॥ सान्तप्रत्ययांतस्यधातोः आङ्पूर्वशंसुधातोश्चउप्रत्ययोभवति । वच् परिभाषणे विवक्षुः

भस्य तु योगे अक्तादाविति निषेधात् द्वितीया भवति कर्ताकटानिति ॥ इष्णु ॥ ९ ॥ जिभुवोरिति अयमाशयः क्तो ककारः काकाक्षिगोलकन्यायेनावृत्त्या वा नुनापि संबध्यत इति स्नोरपि कित्वात् जिभुवोर्गुणोन भवति न चैवं स्थास्नुरित्यत्र स्थामीतीत्वमाशंक्यं गणकृतमनित्यमिति न्यायात्स्वरात्तोवेत्यतो वा व्यवस्थितविकल्पार्थवानुवृतेर्नेत्वं जिष्णुरिति क्लिादिति षत्वं भूष्णुरिति नैकस्वरादित्यत्र नेति योगविभागादागमशासनस्यानित्यत्वाद्वा नेट् गृध्नुरिति क्नोकित्वान्न गुणः ॥ षाको ॥ १० ॥ बहुवचनादुकारोपि प्रत्ययांतं प्रतीयते इत्याह उ उकण् इत्येत इति न चैवमुकारस्य पूर्वेण उत्वे अवादेश आशंक्यः सौत्रत्वान्निर्देशस्य उउकणोर्वा पूर्वं द्वंद्वे कृतदीर्घयोः षाकोणद्वंद्वात् वराक इति वृद्धौ गुणेऽर् षकार इति ततश्च कार्यायेदीतित्वाङ्ग्रो इतिभावः ईवर्थ इति ङ्प्रित इति शेषः तेन वराकीति भवति ॥ सांतेति ॥ ११ ॥ सप्रत्ययांतेभ्यः आङ्पूर्वाच्छंसेश्च सूत्रेण उप्रत्ययो विधेय इत्यर्थ विवक्षुरिति वचेः से द्वित्वे पूर्वशेषत्वकुत्वषत्वक्षाः आशंसुरिति शंसु कथने जिघृक्षुः पिपासुरिति ग्रह उपादाने पा पाने प्रक्रिया तु पूर्ववत् ग्रहेरादि नामानामिति षत्वं कामुक इति उकणो णित्वादुपधावृद्धिः भावुक इति भुवं

आशंशुः पिपासुः जिघृक्षुः कमु कान्तौ कामुकः भिक्षु याच्ञायां भिक्षाकः भिक्षुकः भिक्षुः भावुकः ॥ नमादेरः ॥ ॥ १२ ॥ नमादेर्द्धातोरप्रत्ययोभवति । नम्रः हिंस्रः ॥ घसादेः क्मरः ॥ १३ ॥ घसादेर्द्धातोः क्मरः प्रत्ययोभवति शीलेर्थे । घस्मरःसृमरः ॥ भासादेर्घुरः ॥ १४ ॥ भासादेर्धातोर्घुरः प्रत्ययोभवति । भासुरः भंजो आमर्दने चजोः कगाविति कुत्वं भंगुरः यज देवपूजासंगतिकरणदानेषु ॥ यङऊकः ॥ १५ ॥ यङंताद्धातोरूकप्रत्ययोभवति शीलेर्थे ॥ लुक् ॥ तत्संयोगे च यङो लुग् भवति । यायजूकः दंदशूकः वावदूकः ॥ आदृतः किर्द्विश्चभूते ॥ १६ ॥ आकारांतादृकारांताच्च धातोः शीलेर्थे भूतेकाले कि प्रत्ययोभवति धातोर्द्विवचनम् ॥ रामः सोमं पपिर्यज्ञंददिर्गाश्चक्रिरद्भुतम् ॥ याचकान्वव्रिराजाह्निः पौंडरीकिमहाद्विजान् ॥ सदोणादयः ॥ १ ॥ सर्वस्मिन्कालेउणादयः प्रत्ययाभवंति । णकारोवृद्ध्यर्थः करोतीति कारुः वा

वृद्धावद् ॥ नमादेरिति ॥ १२ ॥ वाच्य इति शेषः कंप्र इति कपि चलने इदित्वान्नुम् वरयोरितीण्निषेधः ॥ घसादेरिति ॥ १३ ॥ वाच्य इति शेषः घस्मर इति घस्लृ अदने कित नेट् ॥ भासादेरिति ॥ १४ ॥ वाच्य इति शेषः भासुर इति भासृ दीप्तौ भंगुर इति भंजो आमर्दने चजोरिति जस्य गः चजोः घइत् यस्य तस्मिन् ॥ यङ ॥ १५ ॥ तत्सान्नियोग इति ऊकप्रत्यययोग इत्यर्थः यायजूक इति अतिशयेन यजनशील इत्यर्थः यजेर्यङंतादूके यङो लुक् दंदशूक इति यङि न्मुजपामिति नुक् ॥ आदृत ॥ १६ ॥ तकारोयमसंदेहार्थ इति ऋकारांतेभ्यो किर्भवति तरिः तॄप्लवनसंतरणयोः पपिरिति द्वित्वे पूर्वस्यह्रस्वे आतोलोपीत्यालोपः चक्रिरिति कित्वादगुणे ऋरं पौंडरीको यज्ञविशेषः ॥ अथोणादयः ॥ ॥ सदोणादयः ॥ १ ॥ इति सर्वस्मिन्निति भूतभविष्यद्वर्तमानरूप इत्यर्थः ।

गतिगन्धनयोः वातीतिवायुः आतोयुक् क्रुश् आह्वाने क्रोशतीति क्रोष्टा तुप्रत्ययः बृहत्वाद्बृंहणत्वाद्वा ब्र- ह्मणत्वाद्वाब्रह्म बृहेर्मनिप्रत्ययः ॥ मन्युपधायाकरः ॥ ॥ २ ॥ मनिप्रत्ययस्योपधाभूतस्यऋकारस्यरोभवति । धृञ् धारणे धारणाद्धर्म्म मप्रत्ययः ॥ ध्वादेरुलिः ॥ ३ ॥ धूञ् कंपने धूलिः अगिरघिलघिगत्यर्थाः इदितइति नुमागमः अंगुलिः गम्लृ गतौ आङ्पूर्वः णिनिप्रत्ययः आगामी भावी ॥ युवहअगभ्योनिः ॥ ४ ॥ योनिः वह्निः अग्निः ॥ इदिचदिशकिरुदिभ्योरः ॥ इंद्रः चंद्रः शक्रः रुद्रः ॥ इमनत्रनस्क ः ॥ सर्वधातुभ्य एतेप्रत्ययाभवंति । बलिः कलिः रविः इप्रत्ययः कर्म्मवर्म्मचर्ममन्प्रत्ययः पात्रं शास्त्रं दात्रं अस्त्रं त्रन्प्रत्ययः तेजः नभः अस् प्रत्ययः पुष्पं फलं मूलं कुलं कप्रत्ययः ईष्टे इति ईश्वरः वरप्रत्ययः स्थावरः ॥ राजादेरन् ॥ राजा । युवा ॥ व- चादेरम् ॥ वचः महः ॥ सौकर्येकेलिमः ॥ ५ ॥ सौकर्यें

कारुरिति णित्वाद्वृद्धिः करोतीत्यर्थः वायुरिति आतोयुगित्यनेन युकि इत्यर्थः क्रोष्टेति छशषराजादेरिति षत्वे ष्टुत्वं उकारांतस्यापीति तृप्रत्ययव- द्भावात्सेरित्यादि प्राक्रियायां रूपाणि पुल्लिंगे दर्शितानि कित्वादिति कित्व- सामर्थ्याद्घजादित्वात्सदाशब्दस्य बहुलार्थत्वाद्वेति भावः उकार इति उउइत्यनेन आत्मेति मनिणो णित्वादत उपधाया इति वृद्धिः ॥ मन्युपधाय ॥ २ ॥ मनि प्रत्यये परे धातोरुपधाया ऋकारस्य रो भवतीत्यर्थः ध्वादेः ॥३॥धूलि- रिति सदाशब्दस्यबहुलार्थत्वान्न गुणः अंगुलिरिति इदित्वान्नुम् आगामीति आगमिष्यतीत्यर्थः एवं भातीति भविष्यतीत्यर्थः ईश्वर इति ईश ऐश्वर्ये ॥ युवेति४ । यु मिश्रणे उवादेश इति नुधातोरित्यनेन । गुणस्तु न भवति सदाशब्दस्यबहु लार्थत्वात् वच इति क्लीबत्वान्न दीर्घः ॥ सौकर्ये ॥ ५ ॥ सुकरस्य भाव सौकर्यं तस्मिन् भिदेलिममिति भेत्तुंसुकरमित्यर्थः कित्वान्न गुणः आढकी तुवरी धान्यविशेषः अपरिमिता इति अतएवोक्तं काशिकायां—संज्ञासुधातु

केलिमप्रत्ययोभवति । ककारो गुणप्रतिषेधार्थः भिदेलिमं काष्ठं पचेलिमा आढक्यः । उणादयोऽपरिमिताप्रयोगमनुश्रित्यप्रयोक्तव्याः ॥ तुम् तदर्थायां भविष्यति ॥ ६ ॥ धातोर्भविष्यतिकालेतुम् प्रत्ययोभवति तदर्थायां क्रियायांप्रयुज्यमानायाम् । भोक्तुं व्रजति पठितुमीष्टे स्तोतुमीहते ॥ घञ्भावे ॥ ७ ॥ धातोर्भावेघञ्प्रत्ययोभवति घकारो घित्कार्यार्थः ॥ चजोः कगौघिति ॥ ८ ॥ चजोः ककारगकारौभवतः घितिपरे । पाकः भागः यागः त्यागः विभागः इण् गतौ अयनं आयः भवनं भावः दायः आतोयुक् पायः ॥ संज्ञायामकर्त्तरि च ॥ ९ ॥ कर्तृवर्जितेकारकेभावेचघञ्प्रत्ययो भवति संज्ञायां विषये । प्रतिकार्यमाह्रियते इति प्रत्याहारः दी-

रूपाणि प्रत्ययाश्चततः परे ॥ कार्याद्विद्यानूबंधमेतच्छास्त्रमुणादिष्विति ॥ प्रयोक्तव्य इति यथाप्रकृति यथाप्रत्ययं यथानुबंधकार्यं यथार्थमित्यर्थः ॥ अथतुमन्ताः ॥ तुमुतदर्थायामिति ॥ ६ ॥ तच्छब्देन शतृशानावित्यर्थः क्रियापरामृश्यते तेन क्रियार्थायां क्रियायामित्यर्थः भोक्तुं व्रजतीति भुज्यर्थात्र व्रजिक्रिया भोजनार्थं व्रजतीत्यर्थः चोः कुत्वं उपधायागुणः पठितुमिति कृतइतीट् अत्र बहुलार्थः सदाशब्दोनुवर्तत इति तुम् भावे भवति सिंहावलोकितन्यायेन घञ्भाव इति उत्तरसूत्रस्थभावग्रहणस्यात्रापि संबंधाद्वा भाव इत्युभयोर्योगयोः शेषाद्वा ॥ घञ् ॥ ७ ॥ अत्र च क्रियासामान्यवाची भवतीति भाव इति सर्वधात्वर्थो निर्दिश्यते स च कचित्साध्यः यथाख्यातशब्दे पचत्यादौ कचिच्च सिद्धो रूपः यथापाकादिषु अत्र हि धात्वर्थस्यैव सिद्धतो नाम धर्मो घञादिर्विधीयते ॥ चजाविति ॥ ८ ॥ पाक इति पचनमित्यर्थः ञित्वादुपधावृद्धिः आय इति इणो वृद्धावाय्अयंभावइत्यत्राय् ॥ संज्ञा ॥ ९ ॥ चादसंज्ञायामपीति प्रदर्शनार्थं दाय इत्युदाहरिष्यति एवं च संज्ञाग्रहणं प्रयोगबाहुल्यार्थं अकर्तरीति पर्युदासमभिप्रेत्य नञिवयुक्तन्यायमाश्रित्याह कारक इति प्रत्याहार इति कर्मणि घञ् दाय इति दीयमानं सर्वमुच्यत इति नेयं संज्ञाविकार

यन इति दायः विक्रियते अनेनेति विकारः ॥ स्वराद्ः ॥ १० ॥ स्वरांताद्धातोरप्रत्ययोभवति भावादौ । चयनं चयः संचीयते इति संचयः स्तवः भवः उन्नयः नृ विक्षेपे त्रियते विक्षिप्यते कामादिभिरिति नरः ॥ मदामः ॥ ११ ॥ मदादीनामप्रत्ययोभवति भावादौ मदी हर्षे मदः प्रमद्यते अनयेति प्रमदा पण व्यवहारे स्तुतौ च पणनं पणः शमदम उपशमे शमः दमः यमः दीव्यते विश्रमऽनेनेति देवः षिञ् बंधने विशेषेण सीयते अनेनेति विषयः ॥ मूर्त्तौघनः ॥ १२ ॥ कठिनेपरिच्छेदेचाभिधेयेहंतेरप्रत्ययोभवति घनादेशश्च । दधिघनः सैंधवघनःवर्णविपर्ययश्च हिसि हिंसायां सिंहः लोपस्त्वनुदात्ततनामितिनकारलोपः । इदितः इतिनुमागमः ॥ ट्वितोथुः ॥ १३ ॥ ट्वितोधातोरथुप्रत्ययोभवति भावादौ । टुवेपृ कंपने वेपथुः ॥ ड्वितस्त्रिमकृतत्कृते ॥ १४ ॥ ड्वितो धातोस्त्रिमक्प्रत्ययोभवति ककारोगुणनिषेधार्थः तेनधात्वर्थेन कृतेर्थेवाच्येसति क्रियाया निर्वृत्तः कृत्रिमो घटः संभृत्रिमः युद्धं पक्त्रिमं फलं ॥ नङ्की ॥ १५ ॥

इति करणे ॥ स्वरा ॥ १० ॥ भावादाविति भावे अकर्तरि चाकारकेपीत्यर्थः चय इति चिञ् चयने संचय इति कर्मणि स्तव इति ष्टुञ् स्तुतौ स्तव इति णु स्तुतौ नर इति कर्मणि सर्वत्र गुणः ॥ मदा ॥ ११ ॥ प्रमदेति करणे अः स्त्रीत्वादाप् विषय इति प्रादेश्चेति षत्वं ॥ मूर्ताविति ॥ १२ ॥ दधिघन इति दध्नः काठिन्यमित्यर्थः वर्णेति एतच्च सैषादित्यत्रोपपादितं सिंह इति हिसि हिंसायां अः इदित्वान्नुम् हकारसकारयोर्व्यत्ययः ॥ ट्वित ॥ १३ ॥ टुइत् यस्यासौ तस्मात् वेपथुरिति वेपनं कंपनं ॥ ड्वित ॥ १४ ॥ तेन कृतः निर्वृतः तत्कृतः तत्र तच्छब्देनात्र प्रकृत्यर्थः परामृश्यत इत्याह तेन धात्वर्थेनेति कृत्रिममिति करणेन निष्पन्न इत्यर्थः संभृत्रिममिति संभरणेन निर्वृत इत्यर्थः उभयत्र कित्वान्न गुणः ॥ नङ् ॥ १५ ॥

योर्विहितास्तव्यादयस्तेर्हविधौचवक्तव्याः रारोझसे दृशां दर्शनार्हो द्रष्टव्यः दर्शनीयः दृश्यः द्रष्टव्यः प्रष्टव्यः पृच्छनीयः पृच्छ्यः स्वाध्यायोध्येतव्यः ध्येयः श्रु-श्रवणे श्रोतव्यः श्राव्यः मंतव्यः ध्यै चिंतायां ध्यातव्यः ध्येयः सप्रत्ययादपि नितरांध्यातुमेष्टव्यो निदिध्यासितव्यः विजिज्ञासितव्यः ॥ ओराऽवश्यके ॥ २५ ॥ उवर्णांतादावश्यकेर्थेध्यण्प्रत्ययोभवति ॥ ओदौतोर्यः प्रत्ययः स्वरवत् ॥ २६ ॥ अवश्यंभाव्यं अवश्यभाव्यं अवश्यं लाव्यं अवश्यलाव्यं समासेऽवश्यमादीनां मलोपमिच्छति ॥ लुंपेदऽवश्यमः कृत्ये तुम्काममनसोरपि ॥ समोवाहिततत्योर्म्मांसस्यपचियुट्घञोः ॥ १ ॥ तव्यादीनां कृत्यसंज्ञा पाणिनीयानां अवश्यंलाव्यो अवश्यलाव्यः श्रोतुमनाः भोक्तुकामः संहितंसहितं संततं सततं मांसस्यपचनं मासपचनं मांसपचनं मां-

चञोः कगौघिति अनेन पाक्यमिति पच्यते यत्तत् एते इति तव्यादयः इति ऋदुपधात् क्यबंता इत्यर्थः विधौ चेति चकारात्प्रैषादिष्वपि द्रष्टव्यमिति गुणे कृते आरो रः छशषेति षत्वे ष्टुत्वं दृश्य इति ऋदुपधादिति क्यप् कित्वान्न गुणः अध्येतव्य इति विधौ इङ् अध्ययने मंतव्य इति मनु अवबोधने नैकस्वरादिति नेट् अनुस्वारयमौ ध्यातव्य इति ध्यै चिंतायां संध्यक्षराणामित्यात्वं सप्रत्ययांतादिति उदाह्रियत इतिशेषः निदिध्यासितव्य इति ध्यायतेरत्र से आत्वद्वित्वहसादिशेषाः जविधिइत्वडलोपाः एवं विजिज्ञासितव्येपि॥ ओरा ॥२५॥ अवश्यमित्यर्थनिर्देशः ॥ ओदौ ॥ २६ ॥ स्वरेण तुल्यःस्वरकार्यकृदित्यर्थः अवश्यभाव्यमिति अवश्यं भूयत इत्यर्थः समास इति लुंपेदिति अंतमिति प्रकरणाज्ज्ञेयं अवश्यमिति वा कर्मणि षष्ठी ततश्च तदंतस्य लोपः युट्घञोः पचीति युट्घञ्प्रत्ययांते पचता-

सस्यपाकः मासपाकः मांसपाकः अनुलाव्यः अनुभाव्य ॥ ऋदुपधात्क्यप् ॥ २७ ॥ ऋदुपधाद्धातोः क्यप्प्रत्ययोभवति भावकार्ययोः । वृत्यं कृती छेदने कृत्यं नृत्यं ॥ ह्रस्वाच्चक्यप् ॥ २८ ॥ ह्रस्वांताद्धातोः क्यप्प्रत्ययोभवति पित्वात्तुक् श्रुत्यंकृत्यं ॥ स्त्रियांयजांभावे ॥ २९ ॥ यजादेर्द्धातोः स्त्रियांभावेक्यपप्रत्ययोभवति । कित्वात्संप्रसारणं इज्या समज्या अज गतौ क्षेपणे च लोपस्त्वनुदात्ततनामिति नकारलोपः ब्रह्महत्या ॥ क्तिः ॥ ३० ॥ स्त्रियांभावेक्तिः प्रत्ययोभवति अनुभूतिः पचि विस्तारे पंक्तिः ऊढिः संवित्तिः शमदम उपशमे शमांदीर्घः शांतिः दांतिः ग्लैम्लै हर्षक्षये त्वाद्योदितः इति तकारस्य नकारः ग्लानिः म्लानिः ईश्शीङोवरक्तिप्रत्यययोर्नेट्नगुणश्च सैशीति कर्त्तरिक्तिश्च प्रकुरुते इति प्रकृतिः वि-

वित्यर्थः तव्यादीनामिति कृत्याः थाङ्खुलइत्यनेन भोक्तुंकाम इति भोक्तुंकामो यस्येत्यर्थः ॥ ऋदु ॥ २७ ॥ ऋकारउपधा यस्य तस्मात् तपरकरणं दीर्घनिवृत्त्यर्थं कृत संशब्दे ऋहसादिति घ्यणेत्र कीर्त्यं ननु चास्य चुरादित्वेन ण्यंतत्वात् स्वराद्य इति यः स्यादिति किं तपरकरणेन एवं तर्हि अरित्य ण्यंताश्चुरादय इति ज्ञापनार्थं तपरकरणं केचित्तु ये घ्यणि क्यपि च नास्ति रूपभेद इति मन्वाना विस्पष्टार्थं तपरकरणमिच्छंति कृत्यमिति कित्वान्न गुणः ईचात इत्यतश्चानुवृत्तेः कल्प्यं वर्त्यमित्यत्र न क्यप् पित्वादिति ह्रस्वस्येत्यनेन ॥ स्त्रियां ॥ २८ ॥ २९ ॥ कित्वादिति यजांयवराणामिति इज्येति यजनमित्यर्थः स्त्रीत्वादाप् ब्रह्महत्येति ब्रह्मणो हननं लोपत्वनुदात्तेति तुशब्दाद्वृक्षसेपि नलोपे ह्रस्वस्येति तुक् यथा संगत् संयत् इत्यादौ क्विपि ॥ क्तिः ॥ ३० ॥ स्त्रियांभाव इति पूर्वसूत्रादनुवृत्तः अनुभूतिरिति कित इति नेट् पक्तिरिति चोःकु ऊढिरिति वहनं वहेः क्तौ यजादित्वाद्वस्योत्वे घत्वढत्वलोपदीर्घाः

वृत्तिः ॥ इकस्तिपौ धातुनिर्देशे ॥ ३१ ॥ इकस्तिपौ प्रत्ययौ भवतः धातुनिर्देशे वाच्ये सति। पचिः पचतिः पचधातुरित्यर्थः यजतिः यजिः यज् धातुरित्यर्थः। भवतिः भुविः नुधातोः भूधातोरित्यर्थः॥ षिद्भिदामङ् ॥ ३२ ॥ षितोधातोर्भिदादेश्चस्त्रियामङ्प्रत्ययोभवति। पचा मृजूष् शुद्धौ मृजा भिदा छिदा आबतः स्त्रियामित्याप् सवर्णदीर्घःसह। जरेत्यत्रङानुबंधरहितोऽप्रत्ययो वक्तव्यः। जरा ॥ गुरोर्हसात् ॥ ३३ ॥ गुरुमतोहसांतादप्रत्ययोभवति एधा ईहा ऊहा ईक्षा ॥ प्रत्ययांताच्च॥३४॥प्रत्ययांताद्धातोरप्रत्ययोभवति। चिकीर्षा पुत्रीया अशनाया ॥ पूर्वकालेक्त्वा ॥ ३५॥ धातोः पूर्वकाले क्त्वाप्रत्ययोभवति समानकर्तृके धातौ प्रयुज्यमाने। स्नात्वा

संवित्तिरिति खसे चपादेशः शांतिरिति ञमस्य क्तितिझसे इति दीर्घः अस्य चायमर्थः ञमांतस्यधातोः क्तितिझसे परे दीर्घो भवति ग्लानिरिति त्राणादित्वान्नत्वनिपातः कर्तरीति वाच्य इति शेषः संततिरिति संतनुते आनंदादिकमित्यर्थः प्रकुरुत इति विश्वमितिशेषः॥ इकस्तिपाविति ॥ ३१ ॥ धातुनिर्देश इति धातोः स्वरूपेण निर्देशे पचिरिति इकः ककारो भिदिरित्यादौ गुणाभावार्थः पचतिरिति स्तिपः शित्वादपः पकारो गुणार्थः वेति॥ षिद्भि॥३२॥ षइत् यस्य तस्मात् मृजेति ङित्वाद्वृद्धिः जरेति जॄ वयोहानौ ङानुबंधरहित इति एतच्चादिस्वरस्येत्यत्रोपपादितं ॥ गुरोः ॥ ३३ ॥ हसश्च गुरुर्नभवतीति सामर्थ्याद्धसांतग्रहणं हसांतोपि न गुरुरिति सामर्थ्यात् गुरुमानादीयत इत्याह गुरुमत इत्यादि विपर्ययश्च न भवति गुर्वंतोपि हसवानिति व्याख्यानात्॥ प्रत्ययांतात्॥ ३४ ॥ स्त्रियांभाव इत्यनुवर्तते चिकीर्षेति कर्तुमिच्छत्यर्थे कृञः सप्रत्यये द्वित्वचुत्वदीर्घाः स्त्रीत्वादाप् पुत्रीयेति आत्मनः पुत्रस्येषणं नाम्नोय इति अईत्वंच॥ पूर्व॥ ३५ ॥ इच्छार्थेषु तत्कर्तृकेषु तुमित्यतस्तत्कर्तृकेष्विति वर्तते तस्य चायमर्थः इच्छार्थेषु तत्कर्तृकेषु तस्य प्रत्ययांतस्य धातोः कर्ता येषां ते तत्कर्तृकाः एककर्तृकास्तेषु धातुषु प्रयुज्यमानेषु धातोस्तुम् प्रत्ययो भवति इच्छति भोक्तुं अत्र भुजेरिच्छतेश्च एकएव कर्ता अतएवाह समानकर्तृक इति एकवचननिर्दिशेन तत्कर्तृकेष्विति बहुवचनमतंत्रमिति दर्शयति तथाचोदाहरति स्नात्वाभुंक्त इति भुक्तेति चोः कुत्वं कित्वान्न गुणः इहतु स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादावाख्यातवाक्यक्रियायाःविशेष्यत्वात्प्राधान्यादन्यासां सर्वासामपि तां प्रति विशेषणत्वादन्योन्यमसंबंधात् सर्वाभ्य एव क्त्वा भवतीति अमीषां ब्राह्मणानां पूर्वं आनीयतामिति तत्सर्वपूर्वाया एकस्या एव क्रियायाः

भुंक्ते भुक्त्वा व्रजति ॥ क्त्वासेट्किद्वा ॥ ३६ ॥ वृत्तित्वा वर्त्तित्वा विदित्वा वेदित्वा ॥ अलंखल्वोः प्रतिषेधेक्त्वा ॥ ३७ ॥ अलंभुक्त्वा खलुकृत्वा ॥ उदितः क्त्वावेट् ॥ ३८ ॥ उदितोधातोः क्त्वावेट्प्रत्ययोभवति। इष्ट्वा इषित्वा ॥ समासेक्यप् ॥ ३९ ॥ समासे सतिपूर्वकाले क्यपप्रत्ययो भवति तत्कर्तृके धातौ प्रयुज्यमाने। डुभृञ् धारणपोषणयोः ह्रस्वस्य पितिकृतितुक् संपूर्वः संभृत्य करोति णमप्रह्वीभावे प्रपूर्वः प्रणम्य गच्छति अनञ्पूर्व इत्येके अकृत्वा चुरादित्वात् ञिप्रत्ययः परिपूर्वः ॥ क्यपिञेर्गुणः ॥ ४० ॥ क्यपिपरेञेर्गुणो भवति। परिणमय्य भुंक्ते तत्कालेपि क्यप् दृश्यते मील मीलने संपूर्वः अक्षिणी समील्यहसति डुदाञ् दाने व्याद्

क्त्वा भवतीति नाशंक्यं अतएव चात्रप्रयोगोप्यनियतः पीत्वा स्नात्वा भुक्त्वा व्रजतीति समानकर्तृके किं भुक्तवति ब्राह्मणेव्रजति देवदत्तः पूर्वकाले किं व्रजति जल्पति च पूर्वं भुंक्ते ततो व्रजतीत्यादौ स्वशब्देनोक्तत्वात् क्त्वा न भवति ॥ क्त्वासेडिति ॥ ३६ ॥ एतच्च क्तोवेत्यत्र वेतियोगविभागाल्लभ्यते अत्र च क्त्वासेड्रुदामित्यत्र क्त्वासेडित्यनुवर्तते तेन सेट्क्त्वा वा किद्भवतीत्यर्थः तदिदमुच्यते क्त्वासेट्वद्वेति क्त्वासेड्रुदामित्यस्य चायमर्थः तत्र णादिः किदित्यतः किदित्यनुवर्तते ऋसंयोगान्नेत्यतो नेति च ततश्च सेट्क्त्वा किन्न भवति रुदादीन् वर्जयित्वा वर्तित्वा आर्तत्वेति ऋतिर्घृणार्थः अकित्वादिटि गुणः ऋतित्वेति कित्वपक्षे न गुणः व्यवस्थितविकल्पार्थत्वात्तेन सर्वत्रेत्याह विदित्वेति रुदादित्वात्सेटोपि नित्यं कित्वं ॥ अलंखल्वोः ॥ ३७ ॥ अलंभुक्त्वेति भोजने निषेध इत्यर्थः एवं खलु भुक्त्वापि पक्षे अलंभोजनेन ॥ उदि ॥ ३८ ॥ अत एव क्त्वा इति निर्देशात् आतोधातोरित्यत्रात इतियोगविभागाद्धातोरपि कचिदालोपः वेडिटि एतावत्येववृत्तिः इष्ट्वेति इषु इच्छायां ष्टुत्वं इषित्वेपि इट्पक्षे क्त्वासेड्रुदामिति कित्वनिषेधः ॥ समा ॥ ३९ ॥ समासेसतीति अतएव ज्ञापकादितिशेषः ककारो गुणाभावार्थः पकारस्तुगर्थः पूर्वकालेक्त्वेत्यनेन तुल्यमस्यापि व्याख्यानं । संभृत्येति डुभृञ् धारणे नाम्न्येति क्यपो विवक्षायामेव समासेक्यप् ह्रस्वस्येति तुक् कित्वान्न गुण प्रणम्येति प्रादिश्चेति णत्वं अनञिति तथाह भगवान्पाणिनिः समासेनञ्पूर्वेक्त्वा ल्यविति अकृत्वेति नेति नञो दादेशः ॥ क्यपीति ॥ ४० ॥ अनुबन्धकार्यादित्यत्वस्य ज्ञापितत्वादितिभावः परिणमय्येति कचित्स्वरवदकार इति स्वरवत्वादेअय्गुणेन बाधितत्वान्न ञेरितिलोपः तत्कालेपीति तस्मिन्नेव कालेपि अतएव वक्तव्यात् क्यप् दृश्यत इत्यर्थः चक्षुषी इति यदै

पूर्वः मुखं व्यादाय स्वपिति ॥ पौनःपुन्ये णमुपदं द्विश्च ॥ ४१ ॥ समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौनः पुन्येर्थे धातोर्णमुप्रत्ययो भवति । तस्य पदस्य द्विर्वचनं पायं पायं गच्छति भोजं भोजं व्रजति ॥ कथमादिषुस्वार्थेणमकृञः ॥ ४२ ॥ कथमादिपूर्वपदेषु सत्सु स्वार्थे करोतिधातोर्णमुप्रत्ययो भवति । कथंकारं इत्थंकारं तथाकारं यथाकारं एवकारं ॥ भुवोभावेक्यप् ॥ ४३ ॥ ब्रह्मभूयं ॥ लक्षतेरीमुट् च ॥ ४४ ॥ लक्षदर्शनांकनयोः इत्यस्माद्धातोरीप्रत्ययोभवति मुडागमश्च । लक्षयति पुण्यवंतं इति लक्ष्मीः ॥ स्त्यायतेः ॥ ४५ ॥ स्तीत्विड्ट् ष्ट्यै स्त्यै शब्दसंघातयोः टिलोपः टित्वादीप् ॥ वर्णात्कारः ॥ ४६ ॥ अकारः ककारः ॥ रादिफोवा ॥ ४७ ॥ रेफः रकारः पार्वत्यग्रे हरः प्राह ॥ रकारादीनि नामानि शृण्वतो मम पार्वति ॥ मनः प्रसन्नतामेतिरा-

वसंमीलयतीति तदेव हसतीत्येककालत्वात्पूर्वेण न प्राप्नोति एवं मुखं व्यादायेत्यत्रापि यदा तु मुखं व्यादाय मुहूर्तं स्वपितीति पौर्वापर्यविवक्ष्यते तदा पूर्वेणैव सिद्धः क्यप्प्रत्ययः ॥ पौनः ॥ ४१ ॥ समानकर्तृकेष्विति तत्कृतेष्वित्यनुवृत्तेः पूर्वकाल इति क्त्वासूत्रतोनुवृत्तेः पौनपुन्येर्थे इति पुनःपुनरित्यस्यभाव इतिभावे यणि अतएव निर्देशादिलोप एवं बाह्य इत्यादावपि टिलोपे इदमेव ज्ञापकं णमंतस्येत्यर्थः एतच्च पदग्रहणाल्लभ्यते पायंपायमितिपीत्वापीत्वेत्यर्थः पा पाने णम् णित्वादातोयुक् द्वित्वं कृदंतत्वान्नामसंज्ञायां विभक्तेस्तदव्ययमित्यव्ययत्वादव्ययादितिविभक्तेर्लुक् एवं भोजंभोजमित्यत्रापि भुजेरुपधाया गुणः अत्र पदंद्विश्चेति योगविभागात्सर्वमविहितलक्षणं पदस्य द्वित्वं ज्ञेयं पातु किमनेन तिष्ठता वृक्षः सिंचति इत्यादि ॥ कथमादि ॥ ४२ ॥ एषूपपदेषु कृञोर्थाविशेषे णम् भवति कथंकारमिति कथंभुंक्ते इत्यर्थः कृञोत्रानर्थक एव प्रयुज्यते एवमित्थंकारमित्यपि ॥ भुवइति ॥ ४३ ॥ ब्रह्मेति ब्रह्मभावं गत इत्यर्थः कित्वान्न गुणः ॥ लक्षतेरिति ॥ ४४ ॥ ईप्रत्ययस्तस्य च मुडागमो वक्तव्य इत्यर्थः अंकनं चिह्नं लक्ष्मीरिति लक्ष्यते आश्रयमित्यर्थः मुडागमोत्र टित्वादादिः अनीवंतत्वान्न सिलोपः ॥ स्त्यायतेरिति ॥ ४५ ॥ वाच्य इत्यर्थः टिलोप इति डितिटेरित्यनेन लोप इत्यर्थः संयोगांतस्येति अनेनेत्यलोपः इति भावः टित्वादिति ष्ट्रित इति शेषः स्त्रीति हसेप इति सिलोपः ॥ वर्णादिति ॥ ॥ ४६ ॥ एतच्च इकृस्तिपावित्यस्मात्परं द्रष्टव्यमिति निर्देश इत्यनुवृत्तेर्वर्णनिर्देशे सतीति व्याख्येयं ककार इति काचित्कः वर्णोत्र निर्दिश्यते ॥ रादीति ॥ ४७ ॥

पूर्वः मुखं व्यादाय स्वपिति ॥ पौनःपुन्ये णम्पदं द्विश्च ॥ ४१ ॥ समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौनः पुन्येर्थे धातोर्णम्प्रत्ययो भवति । तस्य पदस्य द्विवचनं पायं पायं गच्छाति भोजं भोजं व्रजाति ॥ कथमादिषुस्वार्थेणमकृञः ॥ ४२ ॥ कथमादिपूर्वपदेषु सत्सु स्वार्थे करोतिधातोर्णम्प्रत्ययो भवति । कथंकारं इत्थंकारं तथाकारं यथाकारं एवकारं ॥ भुवोभावेक्यप् ॥ ४३ ॥ ब्रह्मभूयं ॥ लक्षतेरीमुट् च ॥ ४४ ॥ लक्षदर्शनांकनयोः इत्यस्माद्धातोरीप्रत्ययोभवति मुडागमश्च । लक्षयति पुण्यवंतं इति लक्ष्मीः ॥ स्त्यायतेः ॥ ४५ ॥ स्तीत्विड्ट् ष्ट्यै स्त्यै शब्दसंघातयोः टिलोपः टित्वादीप् ॥ वर्णात्कारः ॥ ४६ ॥ अकारः ककारः ॥ रादिफोवा ॥ ४७ ॥ रेफः रकारः पार्वत्यग्रे हरः प्राह ॥ रकारादीनि नामानि शृणवतो मम पार्वति ॥ मनः प्रसन्नतामेतिरा-

वसंमीलयतीति तदैव हसतीत्येककालत्वात्पूर्वेण न प्राप्नोति एवं मुखं व्यादायेत्यत्रापि यदा तु मुखं व्यादाय मुहूर्तं स्वपितीति पौर्वापर्यंविवक्ष्यते तदा पूर्वेणैव सिद्धः क्यप्प्रत्ययः ॥ पौनः ॥ ४१ ॥ समानकर्तृकेष्विति तत्कृतेष्वित्यनुवृत्तेः पूर्वकाल इति क्त्वासूत्रतोनुवृत्तेः पौनपुन्येर्थे इति पुनःपुनरित्यस्यभाव इतिभावे यणि अतएव निर्देशादिलोप एवं बाह्य इत्यादावपि टिलोपे इदमेव ज्ञापकं णमंतस्येत्यर्थः एतच्च पदग्रहणाल्लभ्यते पायंपायमितिपीत्वापीत्वेत्यर्थः पा पाने णम् णित्वादातोयुक् द्वित्वं कृदंतत्वान्नामसंज्ञायां विभक्तेस्तदव्ययमित्यव्ययत्वादव्ययादितिविभक्तेर्लुक् एवं भोजंभोजमित्यत्रापि भुजेरुपधाया गुणः अत्र पदंद्विश्चेति योगविभागात्सर्वमविहितलक्षणं पदस्य द्वित्वं ज्ञेयं पातु किमनेन तिष्ठता वृक्षः सिंचति इत्यादि ॥ कथमादि ॥ ४२ ॥ एषूपपदेषु कृञोर्थाविशेषे णम् भवति कथंकारमिति कथंभुंक्ते इत्यर्थः कृञोत्रानर्थक एव प्रयुज्यते एवमित्थंकारमित्यपि ॥ भुवइति ॥ ४३ ॥ ब्रह्मेति ब्रह्मभावं गत इत्यर्थः कित्वान्न गुणः ॥ लक्षतेरिति ॥ ४४ ॥ ईप्रत्ययस्तस्य च मुडागमो वक्तव्य इत्यर्थः अंकनं चिह्नं लक्ष्मीरिति लक्ष्यते आश्रयमित्यर्थः मुडागमोत्र टित्वादीदिः अनीबंतत्वान्न सिलोपः ॥ स्त्यायतेरिति ॥ ४५ ॥ वाच्य इत्यर्थः टिलोप इति डितिटेरित्यनेन लोप इत्यर्थः संयोगांतस्येति अनेनेत्यलोपः इति भावः टित्वादिति ष्ट्रित इति शेषः स्त्रीति हसेप इति सिलोपः ॥ वर्णादिति ॥ ॥ ४६ ॥ एतच्च इकास्तिपावित्यस्मात्परं द्रष्टव्यमिति निर्देश इत्यनुवृत्तेर्वर्णनिर्देशे सतीति व्याख्येयं ककार इति काचित्कः वर्णोत्र निर्दिश्यते ॥ रादीति ॥ ४७ ॥